यो धातुः प्रयुज्यते तस्य लस्यस्थाने इत्यस्मिन्नर्थे पर्य्यवसति। अत एव आह तस्मिन् प्रकृतिभूतेसति इति—तस्मिन् स्थानिभूतेसति—तस्य लकारस्यस्थाने इत्यर्थः। मन्यतेरिति दिवादिगणीय—मन—धातोः। उत्तम इति—उत्तमपुरुषः। पूर्व्वतवाक्ये तु मध्यम इति पदमध्याहार्य्यम्। एकवदिति—एकार्थस्य वाचकः द्विबहुवचनयोरपि एकवचन एव-प्रयुज्यते इत्यर्थः।

अयमिदानीं सूत्रार्थः—सूत्रेस्मिन् वाक्यद्वयं वर्त्तते। यथा···प्रहासे च मन्योपपदे इत्येकं वाक्यम्—शेषं द्वितीयम्। तत्र प्रथमवाक्यार्थस्तावदयम्—[ अत्र च-शब्देन 'मध्यमः' इति समुच्चीयते ]—प्रहासे ( परिहासे ) गम्यमाने च मन्योपपदस्य धातोर्लस्य मध्यमः स्यात्। अथ द्वितीयवाक्यार्थः—मन्यतेस्तु धातोरुत्तमः स्यात्—स च ( उत्तमः ) एकार्थस्य वाचकः स्यात् इति। सूत्रस्यैतस्य उदाहरणम् उपरिष्टात् 'अतो दीर्घो यञि' ( २७७० ) इत्यत्र वक्ष्यते इति तत्रैव द्रष्टव्यम्।

## २१६४। अस्मद्युत्तमः॥ १।४।१०७॥

### दी—। तथाभूतेऽस्मद्युत्तमः स्यात्।

Eng.—When अस्मद् is of the similar nature i. e. collocative with the लकार of any root, the verb is conj. gated in 1st person whether this अस्मद् is expressed or implied. In other words whether अहम्, आवाम and वयम् are expressly usedor not, the verb must be one of 1st conjugation ( उत्तमपुरुष )।

मित—। मध्यमपुरुषप्रक्रियांसमाप्य—उत्तमपुरुषप्रक्रियां दर्शयति तथाभूत इति—तथाभूते इत्यस्य तिङ्वाच्यकारकवाचिनि ( समानाधिकरणे ), प्रयुज्यमानेऽप्रयुज्यमाने चेत्यर्थः। तथा चायमर्थः साकल्येन—तिङ्वाच्यकारकवाची ( लकारसमानाधिकरणकः ) अस्मद् ( अहमावांवयमिति ) प्रयुक्तो वा भवतु नवा भवतु प्रयुक्तः, क्रियया उत्तमपुरुषात्मिकायैवभाव्यमिति।

## २१६५। शेषे प्रथमः॥ १।४।१०८॥

दी—। मध्यमोत्तमयोरविषये प्रथमः स्यात्॥ 'भू' १ सत्तायाम्। कर्तृविवक्षायां—भू ति इति स्थिते—

Eng.—The verb takes the third person terminations when the nominative is other than युष्मद् or अस्मद्। Observe that these three rules 'युष्मद्युपपदे—' 'अस्मदि—' and 'शेषे—' are serviceable when युष्मद्, अस्मद् and तच्छेष i. e. प्रथम पुरुष are used separately. But when they are treated of in a single sentence connected by and ( च ) or separated by ( वा यद्वा—इत्यादि ) the verb will agree with the nearer one ( or what follows ) and the number will be determined by the number of persons spoken of etc. Thus त्वञ्चाहञ्च गच्छावः, स च त्वञ्च गच्छथः, त्वञ्च अहञ्च देवदत्तश्च गच्छामः। In the last two instances above the third person subject ( देवदत्त) has not been connected with the verb, for it has been explained that 'युष्मदस्मदोरविषयेप्रथमः स्यात्,' but as युष्मद् and अस्मद् are present here the verb is in agreement with them only and not with तद्।

मित—। उक्तादन्यः शेषः। कश्च उक्तः। मध्यमः उत्तमश्च। अतःताभ्यामन्यः शेष इति गम्यते। तत्र प्रथमःस्यादित्याह—युष्मदस्मदोरविषये इति। अत्रेदमवधेयम्— यदा युष्मदस्मदोः एकस्यां क्रियायाम् सहविवक्षा जायते तदा अस्मदधीनमेव क्रियापदम्, परत्वात् ( 'अस्मद्युत्तम' इति सूत्रस्य 'युष्मदि—' इत्यपेक्षयेत्यर्थः ) यथा— त्वञ्चाहञ्च गच्छावः। यदातु मध्यमप्रथमयोः सह—विवक्षा. तदा मध्यमाधीनमेव क्रियापदम् स्यात्—युष्मदः सत्त्वेन ( युष्मत्शब्दस्य वर्त्तमानत्वेन— ) शेषत्वाभावात् यथा—देवदत्तश्चत्वञ्चगच्छथः इति। एवं देवदत्तश्च अहञ्च गच्छाव इति अस्मत्पदत्वेन। तदधीनैवक्रिया न प्रथमाधीनेतिदिक्।

इदानीं माङ्गलिकत्वात्—प्राथम्यत्वाच्च भू धातो रूपंप्रदर्शनार्थमाह—भू सत्तायाम्

इति । ( अस + शतृ = सत् ), तस्यभावः सत्ता ( भावे तल् ), तस्याम् विद्यमानार्थे इत्यर्थः । 'कर्तृविवक्षयामिति' कर्तृवाच्ये—साधयितुमिष्टे—भू + ति इति स्थितेसति—

## २१६६ । तिङ् शित् सार्व्वधातुकम् ॥ ३।४।१३ ॥

### दी— । तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाःस्युः ।

Eng.—The affixes such as तिङ् ( तिप् तस् etc—upto महिङ् ) and शित् i.e that which drop श, as शप्, श, श्नम् etc included in the category of roots i. e dealt with therein, are to be termed as सार्व्वधातुक ।

[Here it should be borne in mind that of the लकारs—लट्, लोट्, लङ् andविधिलिङ् are called सार्व्वधातुक, and the rest are termed आर्द्धधातुक ।]

मित— । सार्व्वधातुकार्द्धधातुक—विवेकाभावे क्रियासाधनस्यासाध्यत्वात्—प्रथमं तद्विभागमेव दर्शयति—तिङः—इति । तिप् इत्यतः महिङन्ता प्रत्ययातिङ् इत्युच्यन्ते । शितः—श् इत् ( लोपः ) येषां ते शितः—शपश्नम्शवाद्या प्रत्ययाः । अत्रेदमवधेयं—यल्लकारेषु लट् लोट लङ् विधिलिङः सार्व्वधातुकसंज्ञास्तदितरस्यार्द्ध-धातुकसंज्ञा इति । धात्वधिकारोक्तादितिकिम् ? सुवधिकरोक्ताशस् इत्येवमादयो सार्वधातुकसंज्ञा मा भुवन् इत्येवमर्थम् ।

## २१६७ । कर्त्तरि शप् ॥ ३।१।६८ ॥

### दी— । कर्त्रर्थे सार्व्वधातुके परे धातोः शप् स्यात् । शपावितौ ।

Eng.—कर्त्रर्थसार्व्वधातुक is the technical name for तिङ् in the active voice. Hence the meaning is—शप् is attached to a root in the active voice when the सार्व्वधातुक affixes ( तिङ् ) follow

i.e in the active voice, शप् ( अ ) intervenes between the root and the तिङ्। शप् drop its—श् and प्।

मित—। 'सार्व्वधातुके यक्' ३।१।६७ इत्यतः 'सार्व्वधातुके' इत्यनुवर्त्तते 'धातोरेकाचोहलादेः' ३।१।२२ इत्यतः धातोरिति चानुवर्त्तते। तदाह कर्त्तर्थे सार्व्वधातुके इत्यादि---कर्त्ता अर्थः प्रयोजनम् अस्येति कर्त्तर्थः ( वहुव्रीहिः ); तादृशे सार्व्वधातुकेपरे कर्त्तृवाच्यगततिङ्परे इत्यर्थः। शपावितौ इति---शपः केवलमकार एव तिष्ठति शपौच लुपेते इत्यर्थः। शित्त्वात् सार्व्वधातुकत्वम्, अस्यपित्त्वात् ङित्त्वाभावे गुणवृद्धिविधायकम् सूत्रमुपन्यस्यति।

## २१६८। सार्वधातुकार्द्धधातुकयोः ॥ ७।३।८३ ॥

**दी—। अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात्। अवादेशः। भवति। भवतः।**

Eng.—( The rule ends in the locative dual ).

The अङ्ग ending in इक् ( इ, उ, ऋ and ऌ ) is made guna when सार्व्वधातुक and आर्द्धधातुक affixes follow.

*N. B.*—The word अङ्ग stands for any base when the प्रत्यय affixed or to be affixed is present after it; thus not only भू ( when शप् follows ) but also भव ( when तिङ् follows ) is to be taken as अङ्गसंज्ञा। Cp—"यस्मात्प्रत्ययविधिः—( 199—1. 4. 13). Hence गुण standing for अदेङ् ( अ, ए, ओ ) and that leading to अवादेशः by 'एचोऽयवायावः,' we have भू + शप् + ति=भो + अ + ति = भव् अ ति=भवति। Thus भवतः etc.

मित---। सार्व्वधातुकार्द्धधातुकयोरिति सप्तम्यन्तद्विवचनपरम्। तदर्थः—अनयो परयोरिति। "मिदेर्गुणः" इत्यतः, गुणः, इति वर्त्तते; तदाह—गुणः स्यादिति। गुणे च वक्तव्ये 'इकोगुणवृद्धी' इति परिभाषावलात् इगन्त इति पदमुपतिष्ठते तदाह

इगन्ताङ्गस्य इति। तदयमर्थः---भू इति शपि परतः इगन्तमङ्गम्। ततः परम् सार्व्वधातुकतिङ् च वर्त्तते। अतएव अङ्गस्य गुणः अवादेशश्च भवति। तेन च भू+शप्+ति=भो अ ति=भव् अति=भवति इति साधितम् भवति ; एवमन्यत्रापूह्यम्। भू शप् झि-इति स्थिते आह—

## २१६९। झोऽन्तः ॥ ७।१।३ ॥

दी—। प्रत्ययावयवस्य झस्यान्तादेशः स्यात्। 'अतोगुणे' (१९१)। भवन्ति। भवसि। भवथ।

Eng.—The word 'अन्त' is the substitute for झ the part of the प्रत्यय (झि)। Thus झि=झ् इ=अन्त् इ=अन्ति। Then by the rule 'अतो गुणे' (191—6. 1. 91), पररूप (the form of the latter vowel) is the single substitute for the short अ non-final in a 'pada' when a 'guna,' letter follows it. Thus भव+अन्ति=भवन्ति। भू शप् सि=भो अ सि=भव् अ सि=भवसि ; similarly भवथः etc, Now comes भवामि and we look forward :—

मित—। अत झि इति प्रत्ययः। अस्य अवयवविशेषो झ् इत्यचरम् तस्य स्थाने अन्त् इत्यादेशः विधीयते तदाह प्रत्ययावयवस्यइत्यादि। तेन 'झि' इत्यस्य 'अन्ति' इत्याकृतिर्जातेति फलितम्। ततः भव+अन्ति इत्यत्र "अकः सवर्णेदीर्घः" (८५—६।१।१०१)इति सवर्णदीर्घो मा भूदित्याह—"अतो गुणे"१९१—६।१।९१ इति। 'अपदान्तादकारात् गुणे परतः पररूपमेकादेशः स्यादिति चास्यार्थः। तेन सवर्ण-दीर्घापवादरूपः पररूपादेशाश्रयणादभिमतरूपसिद्धिरिति। झोऽन्त इति सूत्रे अन्त इत्यकारोच्चारणं लुग्विकरणे (अदादौ) द्विषन्तीत्यादौ अकारश्रवणार्थम्।

उज्झितेत्यादौ झकारस्यान्तादेशत्वं मा प्रसाङ्चीदित्यत आह—प्रत्ययावयवस्य झस्येति। इदानीं भवामि इति पदस्य साधनप्रकारमाह—

## २१७०। अतो दीर्घोयञि ॥ ७।३।१०१ ॥

दी—। अतोऽङ्गस्य दीर्घः स्याद्यञादौ सार्व्वधातुके परे। भवामि। भवावः। भवामः। सभवति। तौ भवतः। ते भवन्ति। त्वं भवसि। युवां भवथः। यूयं भवथ। अहं भवामि। आवां भवावः। वयं भवामः॥ एहि मन्ये ओदनं भोक्ष्यसे इति भुक्तः सोऽतिथिभिः। एतमेत वा मन्ये ओदनं भोक्ष्येथे। भोक्ष्यध्वे॥ भोक्ष्ये। भोक्ष्यावहे। भोक्ष्यामहे। मन्यसे। मन्येथे। मन्यध्वे। इत्यादिरर्थः। 'युष्मद्युपपदे' (२१६२) इत्याद्यनुवर्त्तते—तेनेह न। एतु भवान् मन्यते ओदनं भोक्ष्य इति। भुक्तः सोऽतिथिभिः। 'प्रहासे' किम? यथार्थ-कथने मा भूत्। एहि मन्यसे ओदनं भोक्ष्ये इति भुक्तः सोऽति-थिभिरित्यादि।

An अकारान्त अङ्ग is lengthened when a सार्व्वधातुक प्रत्यय beginning with यञ् प्रत्याहार follows ; यञ् constitutes य वरट्। लण्। ञमङ्णनम्। झभञ्। Thus भव ( भु + शप् = भो अ = भव ) becomes भवा for म of मिप् is included in the यञ् प्रत्याहार। And consequently we get भवामि, similarly भवावः etc.

स भवति......भवन्ति are instances of 'शेषे प्रथमः' ( २१५६ ); त्वं भवसि......भवथ are instances of 'युष्मद्युपपदे समानाधिकरणे—'(२१६२); अहम्......भवामः illustrate the rule 'अस्मद्युत्तमः ( २१६४ ) ; एहि मन्ये ......मन्यध्वे इत्यादिरर्थः—these are illustrations for the rule 'प्रहासे च मन्योपपदे' etc ( २१६२ ), such expressions are pronounced in jest to a brother-in-law for merrimaking. The first sentence means —'come, do you think you would have the meal ?'—it has

been partaken of by guests. एतम् addressed to two persons. मन्ये—this is everywhere singular by the injunction 'एकवच्च' in the rule. भोक्ष्येथे refers to एतम् and भोक्ष्यध्वे refers to एत। भोक्ष्ये भोक्ष्यावहे and भोक्ष्यामहे are meanings respectively of भोक्ष्यसे, भोक्ष्येथे and भोक्ष्यध्वे whereas मन्यसे, मन्येथे and मन्यध्वे are explanations of मन्ये which is the same for all the three numbers. Hence the sentences if written in their full would stand thus—

(1) एहि मन्ये ओदनं भोक्ष्यसे इति भुक्तः सोऽतिथिभिः

(2) एतम्......भोक्ष्येथे......

(3) एतम्......भोक्ष्यध्वे......

Now मन्ये in all the three sentences implies 'मन्यसे, मन्येथे and मन्यध्वे' while भोक्ष्यसे, भोक्ष्येथे and भोक्ष्यध्वे imply भोक्ष्ये, भोक्ष्यावहे and भोक्ष्यामहे in order. Thus the exchange of person ( पुरुषव्यत्यय see 2163 ) is quite evident.

It should be noted in this connection that the root मन shall have an uniform application while भुज् can be replaced by any other verb such as पा, गम etc—एहि मन्ये जलं पास्यसि इति पीतमिदमतिथिभिरित्यादि ।

युष्मद्युपपदे etc. i. e the rule '2162' is drawn towards or presents itself in the rule 'प्रहासे च etc '2163'. Hence in the application of भवान्, we cannot have मन in the singular nor can we change the person ( पुरुषव्यत्ययः ) as in the case of युष्मद ; for भवान् though brings out the sense of युष्मद, is not a synonym of युष्मद। Thus एतु भवान् etc, here मन does not end in the first person sing. Then nor भुज् takes the 2nd person

conjugation ; though of course, there is an impliction of प्रहास (jest).

Why say प्रहासे i.e., in jest ? Witness एहि मन्यसे etc. Here the speaker expresses what is a fact and is not cutting joke with the suitor ; hence we have मन्यसे for मन्ये and भोक्ष्ये for भोक्ष्यसे ।

मित—। 'अङ्गस्य' ६।४।१—इति आसप्तमाध्यायपरिसमाप्तेरधिकार इति भाष्यकारवचनात् "अतोदीर्घ—" इत्यस्य च (७।३।१०१) सप्तमाध्यायमध्यपतितत्वादत्रापि अङ्गस्येतिवर्त्तते तदाह अतोऽङ्गस्येति । किञ्च 'तुरुस्तुशम्यम: सार्व्वधातुके' ७।३।९५ इत्यस्मात् 'सार्व्वधातुके' इति अनुवर्त्तते । तदाह—सार्व्वधातुके इति ! अङ्गस्येति विशेष्यम् । 'अत:' इति विशेषणम् । तेन अकारान्तस्य अङ्गस्येति फलितार्थ: । किञ्च यञ् इति विशेषणम् सार्व्वधातुके इति विशेष्यम् तेन यञ्प्रत्याहारान्तर्गतवर्णः आदौ प्रथमे यस्य सार्व्वधातुकप्रत्ययस्य तस्मिन् परे सति इति स्फुटार्थ: । भवामीति---भव इति अङ्गम्—मीति मकाररूपयञादिसार्व्वधातुकप्रत्यय स्तेन भवामिति रूपम् एवमन्यत्रापूह्यम् । यञिकिम् ?—'भवत:' । अत्र भव इति अङ्गम् किन्तु 'त' इति सार्व्वधातुकोऽपि यञादिर्न भवति ; तेन दीर्घत्वमपिन ।

स भवति इत्यादय: 'शेषे प्रथम' इति सूत्रस्य उदाहरणम । त्वं भवसि—इत्यादय: 'युष्मद्युपपदे' इत्यस्य । अहं भवामि—इत्यादयस्तु 'अस्मद्युत्तम:' इत्यस्य उदाहरणमित्येषक्रम: । एहि मन्ये ओदनं भोक्ष्यसे इत्यादीनि भोक्ष्यध्व इत्यन्तानि 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' इत्यस्यैव उदाहरणानि । उदाहरणान्येतानि श्यालकेन जामातरं प्रति सोल्लुण्ठं प्रयुक्तानि इति साम्प्रदायिका: । तथा च शब्देन्दुशेखर: 'सत्यप्योदने परिहासशीलश्यालकादेर्वाक्यमेतत्' इति । अत्र एहिइतिपदम् परिहासपोषकम् नतु उदाहरणाङ्गम् । वृत्तौ 'भोक्ष्ये' 'भोक्ष्यावहे' 'भोक्ष्यामहे' इत्यादीनि 'मन्यसे', 'मन्येथे' 'मन्यध्वे' इत्यादीनिच क्रमेण 'भोक्ष्यसे' 'भोक्ष्याथे' भोक्ष्यध्वे' इत्येषाम् 'मन्ये' इत्यस्य च अर्थकथनानि । तत्र मन्ये इति द्विवचनबहुवचनयोरपि वचनविपर्य्यय: अर्थस्तु भिद्यते एव । तेनाह मन्यसे मन्येथे इत्यादि ।

'भवत्'—शब्दः युष्मत्शब्दसमानार्थकोऽपि न तत्पर्य्यायः। तेन यद्यपि युष्मदुपपदे इत्यादि प्रहासे चेति च सूत्रमनुवर्त्तते, तथापि मन्यते न उत्तमत्वम् न वा एकवत्त्वम्, नापि मन्योपपदस्य भुज्यादेः पुरुषविपर्य्ययः। तदाह—युष्मद्युपपदे इत्याद्यनुवर्त्तते इति। कुत्र अनुवर्त्तते इत्याह—'प्रहासेति सूत्रे' इत्यर्थः। 'तेन' तस्मात् हेतोः 'इह' भवत्—शब्दप्रयोगे न 'एकवत्वम्' नापि मन्यतेः पुरुषविपर्य्यासः (मन्यभुज्योरिति शेषः)। प्रहासे असति पुरुषविपर्य्यासो न भवति, अतः पृच्छति प्रहासे किमिति। उत्तरमाह—यथार्थकथने माभूत् इति---प्रकृतव्यापारगोपनाभावे मा भूत्—यथा न भवेदित्यर्थः। एहि इति। मस्यसे इति, न तु मन्ये। भोक्ष्य इति न तु भोक्ष्यसे इति परस्परं भेदः। वचनमिदं कञ्चित् प्रति प्रयुक्तमपि तत्त्वमेव प्रकटयेत् नतु परिहासार्थमिति।

**२१७१। परोक्षे लिट् ॥ ३।२।११५॥**

**टी— । भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः।**

लिट is attached to a root denoting the sense of परोक्ष (i.e. behind the presence of, hence not perceived by, the speaker) which concerns a past time not occurring to-day. In other words, a past event not occuring to-day and not perceived by the speaker himself is expressed by लिट्। अद्यतन means 'what has taken place today.' अद्य + भवार्थे ट्य (तुट् च) ; and अद्य implies the last part of the previous night plus the fore part of the next night. Thus अनद्यतन (न+अद्यतन) connotes what has not occurred in this interval. परोक्ष means 'in one's back' or 'behind one's eyes.' अक्ष्णोः पश्चात् or परम् इति परोक्षम्। Hence, in short, the implication is that लिट् is used to bring out the sense of all occurrence, past but unperceived.

[ N. B—अक्ष्णोः परम्=परोक्षम्। मयूरव्यंसकादि। "सर्वमिन्द्रियं वृत्ति-विषये अक्षिशब्दो वक्ति"—इति कैयटः। अस्मिन्पक्षे "अक्ष्णोऽदर्शनात्" इत्यच्। अत्रैव निपातनाद् वा। यद्वा "अच्प्रत्यन्ववपूर्वात् सामलोम्नः" इति योगो विभज्यते। भट्टोजिमते तु परोक्षम् इति अव्ययीभावः। किन्तु नागेशादयः उक्तमतं न समर्थयन्ते। ते आहुः---"प्रतिपरसमनुभ्योऽक्ष्णः" इति गणसूत्रे परग्रहणं प्रक्षिप्तम्। अतो नाव्ययीभावः॥ "परोभावः परस्याक्षे 'परोक्षे लिटि' दृश्यताम्। उत्वं वादेः परादक्ष्ण सिद्धं वास्मान्निपातनात्"---इति भाष्यम् ]।

मित—। कालस्तावदद्यतनानद्यतनभेदेन द्विविधः। द्विविधोऽपि भूतभविष्यद्-रूपः। तत्र अनद्यतने भूते परोक्षे लिडित्यर्थः। तेन अद्यतने भूते, अनद्यतने भविष्यति भूतेऽपि, अपरोक्षे च न लिट्प्रयोगो भवति। परोक्षत्वञ्च साक्षात्करो-मीत्येतादृशज्ञानविषयराहित्यम्। अक्ष्णोः परमिति चात्र विग्रहः। परोक्षत्वञ्च वर्षशतवृत्तत्वमित्येके। वर्षसहस्रवृत्तत्वमित्यपरे। द्व्यहवृत्तत्वञ्चेत्यन्ये, कुड्यकटाद्यन्तरित-त्वमित्यपरे। एते पक्षाः भाष्ये स्थिताः। तत्र प्रयोक्तुरिन्द्रियाविषयत्वं परोक्षत्वमित्येव सर्व्वसम्मतम्। अद्यतनापि क्रिया भूतार्थप्रकाशिका—यथा अद्य प्रातः वृष्टिरभूत् इति। तदाह—भूतानद्यतनेति। भूतञ्च तत् अनद्यतनञ्च इति (कर्म्मधा),तच्च तत् परोक्षञ्च इति (पुनः कर्म्मधा—); तादृशार्थप्रकाशकस्य धातोरिति फलितम्। अतीतरात्रेरन्त्यया-मेनागामिन्याः पूर्व्वयामेन सहितः कालः अद्यतनः; तद्भिन्नः अनद्यतनः। भूते इति अधिकृतम्। 'अनद्यतने लुङ्' इति वर्त्तते। तत्र भूतादीनां साक्षाद्धातुविशेषणत्वं न भवति—धातोरर्थस्य तदिति मन्वानो वृत्तौ 'अर्थवृत्तेर्धातोः इत्याह'—इत्यलम्॥ प्रसङ्गाद् दशलकाराणामर्थाः संगृह्यन्ते "वर्त्तमाने परोक्षे श्वोभाविन्यर्थे भविष्यति। विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लडादयः॥—इतिवैयाकरणभूषणसारः।

## २१७२। लिट् च॥ ३।४।११५॥

**टी—। लिडादेशस्तिङार्धधातुकसंज्ञ एव स्यान्न तु सार्व्व-धातुकसंज्ञः। तेन शबादयो न।**

The तिङ् affixes which are substitutes of लिट are called आर्द्धधातुक only and not सार्व्वधातुक। So we cannot have शप् etc which belong to सार्व्वधातुक only.

मित—। लिडिति—षष्ठ्याः सौत्रो लुक्। तदाह—लिडादेश इति। तिङ्शित्-सार्व्वधातुकमिति तिङः अत्र अनुवर्त्तनात् आह—तिङ् इति। अयमर्थः—लिटः स्थाने यस्तिङ् आदिश्यते स आर्द्धधातुकसंज्ञ एव स्यात् न तु सार्व्वधातुकसंज्ञ इति। एकसंज्ञाधिकारवहिर्भूतानामिदं सूत्रम्। तत् सार्व्वधातुकसंज्ञा मा प्रसाङ्क्षीदित्यत्र आह—आर्द्धधातुक एवेति। स च एवकारः 'लङः शाकटायनस्यैव' (२४६३—३।४।१११) इति सूत्रादिहानुवर्त्तते।

## २१७३। परस्मैपदानां णलतुसुस्थलथुसणल्वमाः॥ ३।४।८२॥

### दी—। लिटस्तिबादीनां नवानां णलादयो नव स्युः। 'भू' 'अ' इति स्थिते—

The nine affixes णल, अतुस् etc are substituted for the nine affies तिप् तस् etc of लिट्। Note that these—णल् अतुस् etc are परस्मैपदी substitutes and that णल् retains अ only ; hence we have अ अतुस् उस्। थ अथुस् अ। अ व म। Now we have 'भू' 'अ'—this being the case, we look forward :—

मित—। परस्मैपदित्वात्मनेपदित्वभेदेन लडादीनामिव लिडादेशोऽपि द्विविधः। तत्र परस्मैपदिलिटः तिप् तस् झि इत्यादीनां नवानां स्थाने णल् अतुस् उ इत्यादयो नव आदेशाः क्रमेण स्युः। णल् इति णित्करणार्थः णकारः। तत् फलञ्च 'अचो ञ्णिति' 'अत उपधायाः'—इत्यादिभिर्वृद्धिविधानं यथा स्यादित्युत्तरत्र स्फुटीभविष्यति। णल् इत्यस्य णलावितौ अ-मात्रमवशिष्यते। तदाह 'भू'-'अ'-इति स्थिते।

[अनेकाल्शित् सर्व्वस्य—इति परिभाषावलात् तिपो णल् सर्व्वादेशः। न च

'नानुवन्धकृतमनेकाल्त्वम्' इति निषेधात्—कथं तत् प्रवृत्तिरिति वाच्यम्—। ण्, अल् इति प्रश्लेषेन हि अनेकाल्त्वं भवति, ततश्च सर्व्वादेशत्वसिद्धिः। प्रश्लेष-सामर्थ्यात् आदेशात् परम् एकादेशप्रवृत्तिरिति शब्देन्दुशेखरे स्पष्टम् ]।

## २१७४। भुवो वुग् लुङ्लिटोः ॥ ६।४।८८॥

**दी—। भुवो वुगागमः स्यात् लुङ्लिटोरचि। नित्यत्वाद् वुग् गुणवृद्धी वाधते।**

The augment वुक is attached to the root भू in लुङ् and लिट् when an affix beginning with an अच् or vowel follows. This augment वुक् being नित्य overrules गुण and वृद्धि।

An injunction or विधि is said to be नित्य (persistent) when it applies no matter whether its rivals take place or not. Thus वुक is here नित्य i.e more forcible in comparison with गुण and वृद्धि ; for वुक् must be affixed whether गुण and वृद्धि ( directed by "सार्व्वधातुकार्द्धधातुकयोः" ( २१६८-७।३।८४ ) and "अचोञ्णिति" ( २५४-७।२।११५ ), take place or not.

मित—। 'अचिश्नु धातुभ्रुवां य्वोरियङुवङौ' ( २७१—६।४।७७) इत्यतः "अची-त्यनुवर्त्तते। तदाह लुङ्लिटोरचीति। अचीति किम्—अभूत्। 'आद्यन्तौ टकितौ' ( ३६—१।१।४६ ) इति परिभाषया भू इत्यतः परम् वुक् ( व् ) इति प्रयुज्यते कित्त्वात्। वुगागमो नित्यविधिः। यश्च नित्यविधिः स कृताकृतप्रसङ्गी भवति। उक्तञ्च 'कृताकृतप्रसङ्गि नित्यम् तद्विपरीतमनित्यम्' इति। यश्च कस्मिंश्चित् विधौ कृतेऽकृतेऽपि वा प्रसज्येत स कृताकृतप्रसङ्गी इत्युच्यते। प्रसज्यते च वुगागमः कृतेऽकृतेऽपि वा गुणे—("सार्व्वधातुकार्द्धधातुकयोः"—इति सूत्रेण), कृतायामकृतायामपि वृद्धौ ("अचोञ्णिति" इति सूत्रेण) ; तस्मात् वुक्विधिर्नित्यः। यतश्च नित्यः ततः स परवर्त्तिन्यावपि गुनवृद्धी

(७।३।८४,७।२।११५) बाधते। "परान्नित्यं बलवत्" इति परिभाषासामर्थ्यात् इति। एवम् भू अ इत्यत्र भुव् अ इति स्थिते—

**२१७५। एकाचो द्वे प्रथमस्य॥ ६।१।१॥**

**२१७६। अजादेर्द्वितीयस्य॥ ६।१।२॥**

**दी—। इत्यधिकृत्य—।**

These two rules are to be considered as अधिकारसूत्रs.

मित—। सूत्रद्वयमिदमधिकृत्य—अनुवर्त्त्य, लिटिधातोरित्यादिसूत्रान् पूरयित्वा व्याख्यास्याम इत्यर्थः।

**२१७७। लिटि धातोरनभ्यासस्य॥ ६।१।८॥**

**दी—। लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य। 'भुव्' 'भुव' 'अ' इति स्थिते।**

When लिट् follows, the first single अच् is duplicated which is a part and parcel of a root called अनभ्यास i. e. which is not the resultant form of सन् or यङ् (where also a root is doubled as in लिट्)। In other words the first single अच् of a non-duplicated root is doubled in लिट्। But if the root is अजादि (having a vowel at the outset) then the second अच् alone (of the root) is duplicated. The drift of the rule is this :—

Though it is said that the first single अच् is doubled yet it is meant that the whole root is doubled according to the 'वृक्ष-प्रचलनन्याय' (the maxim of moving of a tree). As a tree moves along with its parts, so the root is doubled together with its

vowels. As भूव् भूव् अ ( पच् पच् अ etc ). This is the case in हलादि roots ( एकाचो द्वे प्रथमस्य )।

In the case ( अजादेस्तु द्वितीयस्य ), when the root is अजादि, i. e having a vowel at the beginning, then the second vowel only along with the हल् letters therein is doubled ; as ईन्द्रम् आत्मनः इच्छति इन्द्रीयति then again तम् इच्छति इन्द्रिन्द्रीयिषति where the portion ( न्द्रि ) is doubled and not the vowel इ only. In case, the root constitute a single अच् only and have no consonant following it, the root though of one letter, will be regarded as the first as well as the second according to the maxim of a single son (एकपुत्रन्यायेन) ; cp.—the परिभाषा 'व्यपदेशिवदेकस्मिन्' । Thus the root इ and ऋ give इयाय and आर respectively ।

अनभ्यासधात्ववयवस्य means this :—As a root is doubled in लिट so it is doubled in सन् and यङ् also by the rule 'सन्यङोः' (2395) Hence it is meant that सनन्त and यङन्त root or verbal bases which have been once doubled will not again undergo the duplication in लिट् or in चङ् ( लुङ् )।

मित— । 'एकाचः प्रथमस्येति' धात्ववयवस्येत्यस्य—विशेषणम् । यो धात्ववयवः ( धातोरवयवः ) एकाच् च भवति प्रथमश्च भवति । एकाजिति तद्गुणसंविज्ञानो बहुव्रीहिः । एको अच् यस्मिन्निति । [ अतएव भाष्ये—"एकाच इति किमयं बहुव्रीहिः एकोऽच यस्मिन्निति आहोस्वित् तत्पुरुषोऽपि समानाधिकरणः । एकोऽच एकाच् इति । किं चातः । यदि बहुव्रीहिः सिद्धं पपाच पपाठ । इयाय आरेति न सिद्ध्यति । अथ तत्पुरुषः समानाधिकरणः—सिद्धमियाय आरेति । पपाच पपाठेति न सिद्ध्यति । अत उत्तरं पठति—'एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्द्देशः' ( वार्त्तिक ) । एकवर्णेषु च कथम् । 'एकवर्णेषु व्यपदेशिवद् वचनात्' ( वार्त्तिक ) । व्यपदेशिवदेकस्मिन्

कार्य्यं भवतीति वक्तव्यम्। एवमेकवचर्णेषु—द्विर्वचनं भविष्यति। एकाचौ द्वे भवत इत्युच्यते। तत्र न ज्ञायते कस्यैकाचौ द्वे भवतः। वक्ष्यति लिटि धातोरनभ्यासस्येति। तेन धातोरेकाच इति विज्ञायते" इत्युक्तम्—। व्यपदेशित्वञ्च परिभाषान्दुशेखरे उक्तम् "निमित्तसद्भावाद् विशिष्टः अपदेशो मुख्यो व्यवहारः यस्यास्ति स व्यपदेशी—।" एतेन 'इण्' 'ऋ' इत्यादिधातूनामेकवर्णविशिष्टत्वेऽपि पदसाधनौचित्यनिमित्तसद्भावात् तेषां व्यपदेशित्वमिति बोद्धव्यम् ]। तथाचायं सूत्रार्थः—लिटि परे अभ्यास-भिन्नस्य एकाच्कस्य प्रथमस्य धात्ववयवस्य—द्वे उच्चारणे भवतः इति एकाच इति। कर्म्मधारयाश्रयणे तु पपाचेत्यादि न सिद्ध्येत्—इत्युक्तम्। भूव् अ इत्यत्र चत्वारः एकाचः। भू इति प्रथमः, ऊ इति द्वितीयः। ऊव् इति तृतीयः। भूव् इति समुदायश्चतुर्थः। तत्र कस्य द्विरुच्चारणम् इति विप्रतिपत्तौ—'वृक्षप्रचलनन्यायेन' इति भाष्ये—समाहितम्। यथा वृक्षः प्रचलन् सहावयवैः प्रचलति तथा समुदाये द्विरुच्यमाणे सर्व्वेऽवयवा द्विरुच्यन्ते इति भूव् इति समुदायस्यैव द्विर्वचनम्। तदाह भूव भूव् इति स्थिते इति।

आदिभूतादिति—एतेन अच् चासौ आदिश्चेति अजादिरिति कर्म्मधारय इति दर्शयति। अजादेरिति पञ्चम्यन्तम्—। द्वितीयस्येत्यतः 'एकाच' इति अध्याहार्य्यं—व्याख्येयम्। अजादेर्द्वितीयस्येति सूत्रम्, पूर्व्वस्य एकाचः प्रथमस्येत्यस्य बाधकम्। तेनायमर्थः—'अजादिधात्ववयवस्य एकाचश्चेद् द्वित्वम् तर्हि—द्वितीयस्यैकाचो द्वित्वम् न तु प्रथमस्य। ( अजादेरिति ) बहुव्रीह्याश्रयणे तु इन्द्रमात्मन इच्छति इन्द्रीयति, तमिच्छति इन्दिन्द्रीयिषति इत्यादौ—'नन्द्राः संयोगादयः' ( ६।१।३ ) इति दकारस्य द्वित्वनिषेधः स्यात्। तत्र अजादेरित्यस्यानुवृत्तेः। अत्र अच इति उक्तेऽपि न केवलं अच एव द्विरुच्यन्ते किन्तु तद्योगात् व्यञ्जनान्यपि—तथा च भाष्यम्—"व्यजनानि पुनर्नटभार्य्यावद् भवन्ति। तद्यथा। नटानां स्त्रियोरङ्गगताः यो यः पृच्छति कस्य यूयं कस्य यूयमिति तं तं तव तवेत्याहुः। एवं व्यञ्जनान्यपि यस्य यस्याचः कार्य्यमुच्यते तं तं भजन्ते" इति। धातोरिति किम्। तदभावे लिटिपरे यः प्रथमः एकाच् तस्य द्वे इत्यर्थः स्यात्। एवं च पपाचेत्यादावेव स्यात् नतु जजागारेत्यादावपीति भाष्ये स्पष्टम्।

[ अनभ्यासस्येति—अयम् अंशो भाष्ये प्रत्याख्यातः। सन्नन्तानां यङन्तानां सम्पन्ना-भ्यासानां लुङि चङादौ लौकिकप्रयोगाभावात्। वेदे च वावचनेन सिद्धत्वात्—इति लघुशब्देन्दुशेखरे स्पष्टम् ]।

अयमत्र सरलार्थः—(१) लिटि परे हलादेर्धातोः प्रथमावयवस्य एकाचो द्वित्वं द्विरुच्चारणं भवति; (२) अजादेस्तु धातोर्द्वितीयस्य एकाचो द्वित्वं भवति। तर्हि इदमर्थाद् आयाति—यत् यस्य धातोर्द्वितीयोऽच् विद्यते सोऽनेकाच् भवति। अतएव यो धातुरजादिरनेकाच् च भवति तस्य—द्वितीयस्य एकाचः द्वित्वम्; परन्तु यो धातुरनेकाच् हलादिश्च भवति तस्य प्रथमस्यैकाचो द्वित्वम्। यश्च धातुरेकाज् मात्रं भवति स हलादिर्वा भवतु अजादिर्वा भवतु तस्य प्रथमस्यैकाच एव द्वित्वं भवेत्।

ननु यो धातुरेकाज्मात्रं भवति तस्य प्रथमत्वं द्वितीयत्वं वा कथं भवतीति चेत् सत्यम्—व्यपदेशिवद्भावात् तु भवति। तद् यथा देवदत्तस्य 'यज्ञदत्त' एव एकः पुत्रः स एव ज्येष्ठः स एवच कनिष्ठः स एव मध्यमो भवतीति यथा, तथा एकाज्-मात्रस्यापि प्रथमत्वेन द्वितीयत्वेन च व्यवहार उपपद्यते।

ननु च सूत्रानुसारेण अटगमादीनाम् एकाचाम् अकारमात्रस्य प्रथमस्य द्विरुच्चारणं भवेत्—न तु टकारस्य मकारसहितगकारस्य वा द्विरुच्चारणं भवति। दृश्यते च टकारमकारगकाराणामपि द्विरावृत्तिः, अन्यथा आट जगामेत्यादि पदजातम् कथं सेत्स्यति इति चेत्। अत्राहुः—यथा वृक्षः प्रचलन् सहावयवैः प्रचलति तथा—अजपिप्रचलन् व्यजनाद्यवयवैः सहैव प्रचलति। तेन अट—गमादीनाम् अट् अट् गम्गमित्यादिरूपे द्विरुच्चारणे सति आट जगामेत्यादि सिद्धम्। एवं दरिद्रा, ऊर्णु इत्यादीनामनेकाचाम् धातूनाम् दरिद्रेत्यस्य हलादित्वात् प्रथमस्यैकाच दकारसहितस्य अकारस्य द्वित्वम्, ऊर्णु इत्यस्य तु णकारसहितस्य द्वितीयस्याच उकारस्य द्वित्वं भवति। एवमन्यत्रेति।

अनभ्यास इति किम्?—सन्नन्तानां यङन्तानाञ्च द्वित्वं भवति। पुनश्चङि तेषां द्वित्वं मा भूदित्येवमर्थम् 'अनभ्यास' इत्युक्तम्। सकृत् कृताभ्यासकार्य्यस्य पुनरभ्यास—कार्य्यं नास्तीति तदर्थः।

२१७८ । पूर्व्वोऽभ्यासः ॥ ६।१।४ ॥

दो— । अत्र ये द्वे विहिते तयोः पूर्व्वोऽभ्याससंज्ञः स्यात् ।

Here (in the द्वित्वप्रकरण) the first of the duplication is called अभ्यास । As for example, of the duplication भूव् भूव्, the former is called अभ्यास ।

मित ।— अत्रेति षष्ठाध्यायस्य एकाचो द्वे प्रथमस्येति सूत्रविहिते द्वित्वप्रकरणे इत्यर्थः । तथाच भूव् भूव् इत्यनयोः पूर्व्वो भूव् अभ्याससंज्ञको भवतीति सूत्रार्थः । तस्य किमित्यपेक्षायामाह—

२१७९ । हलादिः शेषः ॥ ७।४।६० ॥

दो । अभ्यासस्य आदिर्हल् शिष्यते अन्ये हलो लुप्यन्ते । इति वलोपः ।

The first हल् (consonant) of the अभ्यास (reduplicate) is retained and the other हल्s (consonants) elide. Thus भूव् drops व् and retains भू । Note that the हल् exists along with the अच् । otherwise भ् only would have been retained and ऊ would have been dropped. There also the वृक्षप्रचलनन्याय (maxim) applies. So now we have भू भूव् अ—

मित— । शिष्यते इति शेषः कर्म्मणि घञ् । 'अत्र लोपोऽभ्यासस्येत्यतः' (२६२०-७।४।५८) अभ्यासस्येत्यनुवर्त्तते—तदाह अभ्यासस्येति । अभ्याससंज्ञस्य 'भूव्' इत्यस्य आदिर्हल् भू इति अच् सहितः शिष्यते अन्यो (हल्) 'व्' इति च लुप्यते तदाह—वलोप इति । तेन इदानीं भू भूव् अ इति स्थितम्—ततः—

२१८० । ह्रस्वः ॥ ७।४।५९ ॥

दो— । अभ्यासस्याचो ह्रस्वः ।

The long vowel ( दीर्घ अच् ) occurring in the अभ्यास or reduplicate is shortened ( becomes ह्रस्व ) ।

मित—। अत्रापि लोपोऽभ्यासस्यइत्यत: अभ्यासस्येत्यनुवर्त्तते। अचश्चेति ( २५—१।२।२८ ) परिभाषावलात्—अच इति पदमुपतिष्ठते तदाह अच इति। अभ्यासस्य दीर्घस्याच: ह्रस्व: स्यादित्यर्थ:।

यद्यपि सूत्रस्यैतस्यात्र कोऽप्युपयोगो नास्ति केवलं 'भवतेर' इत्यनेनैव निर्व्वाह: स्यात्—तथापि पर्ज्जन्यवत् शास्त्रप्रवृत्तिरित्यभ्युपगमादिदमत्रोक्तमिति ज्ञेयम्। यथा पर्ज्जन्या: ( मेघा: ) सर्व्वत्र विद्यमाना अपि क्वचिद् वर्षन्ति क्वचिन्न न तद्वदिति। ततो भु भूव् अ इति जाते—

## २१८१। भवतेर: ॥ ७।४।७३ ॥

### दी—। भवतेरभ्यासोकारस्य 'अ:' स्याल्लिटि।

In लिट् the ऊकार of the root भू designated as अभ्यास becomes अ i. e the अभ्यास भू is changed into भ. Thus it should be observed in this connection that the rule ह्रस्व:(2180) has no bearing at all upon the formation of बभूव। Now we have भ भूव् अ and then we look forward—

मित—। भवते: अ: इति च्छेद:। भवतेरिति प्रयोगे इश्तानां भुवामनुकरणात् तिप्। तेन वार्तिककार आह 'इक्श्तिपौ धातुनिर्द्देशे' ( ५७५ ) इति। तथाच धातव: प्रत्येकं नामपञ्चकेनाभिधीयन्ते यथा—गम (शप्), गमि: (इक्), गच्छति (तिप्)। गम् उदाहरणं यथा—'वा गम:', गमेरिट् परस्मैपदेषु इत्यादि। एवं भवतेरिति भूधातोरित्यर्थ:।

अत्रापि—अत्र लोपोभ्यासस्येत्यत: अभ्यासस्येति वर्त्तते 'व्यथोर्लिटि' ( २३५३—७।४।६८ ) इत्यतो लिटि इति च। तदाह—अभ्यासस्येति लिटीति च। एतेन भु भूव अ इत्यस्य भ भूव् अ इति संघाते जाते सति—

२१८२ । अभ्यासे चर्च ॥ ८।४।५४ ॥

टी । अभ्यासे झलां चरः स्युर्जशश्च । झशां जशः खयां चरः । तत्रापि प्रकृतिजशां प्रकृतिजशः प्रकृतिचरां प्रकृतिचर इति विवेकः ; आन्तरतम्यात् ।

In the अभ्यास, झल् letters are replaced by चर् letters and जश् letters, i. e. झश् letters are replaced by जश् and खय् letters are replaced by चर् । There also it is to be understood that those that are naturally जश् letters have natural जश् substitutes and those that are naturally चर् letters have natural चर् substitutes on account of आन्तरतम्य ( most intimacy ) or similarity. झल् = झभघढधजबगडदखफछठथचटतकपशषसह ; झश् = झभघढधजबगडद ; जश् = जबगडद ; खय = खफछटथचटतकप ; चर् = चटतकपशषस । The drift of all this is—that, for the sake of similarity or sameness in pronunciation झश् or झ-भ-घ ढ-ध जबगडद are replaced by जश् or ज-ब-ग-ड-द । To express it more clearly झ is replaced* ज, भ is replaced by ब ( as भ भूव् अ = बभूव् अ ), घ by ग ( as घुष् घुष् अ = घुघुष्अ = गुघुष्अ = जुघोष), ढ by ड ( ढुक् अ = डुढौके ) and ध by द । as धा + लिट् अ = धा धा अ = ध धा अ = द धा अ = द ध औ = दधौ । Similarly खय letters or वर्गीय 2nd and 1st letters are replaced by चर् or वर्गीय 1st letters चटतकप । Thus छिद छिद अ = छि छिद अ = चिछेद अ = चिच्छेद ( छ is replaced by च ) ।

Now though all the rules bearing upon the formation of बभूव have been completely mentioned here, yet भट्टोजि puts forward the rule 'असिद्धवदत्राभात्' to answer the query—why वुक is not

invalid though it follows upon the rule 'अचिश्नु धातुभ्रुवां य्वोरियङुवङौ' which directs उवङ् to भू :—

मित—। इदानीं भ भूव् अ इत्यत्र अभ्यास—'भ—स्थाने बकारविधानार्थमिदं सूत्रमुपन्यस्यति। 'झलां जश् झशि' (५२—८।४।५३) इत्यतः झलामिति अनुवर्त्तते चकारेण जश् इति च समुच्चीयते—तदाह झलांचरः सुग्जंशश्चेति। झलामिति यवरलभिन्नानां व्यञ्जनानां सर्व्वेषां ग्रहणम्। चर इति चटतकपशषसां ग्रहणम्। तत्र कस्य स्थाने कः आदिश्यते इत्यपेक्षायामाह—झशामिति। झशामित्यनेन वर्गतृतीय-चतुर्थो वर्णौ गृह्यन्ते, जश इत्यनेन च वर्गतृतीया गृह्यन्ते। तेन वर्गतृतीयादि वर्णानां स्थानेषु वर्गतृतीयवर्णा आदिश्यन्ते इति बोधः। तथा च झस्थाने ज, भ-स्थाने ब, घस्थाने ग इत्यादिः क्रमः। एतेन प्रकृते भ भुव् अ इत्यत्र बभूवुश्च इति भवति इति बोद्धव्यम्। खयामिति—खयाम् इत्यनेन वर्गप्रथमद्वितीयवर्णानां संग्रहः। चर इत्य-नेन च चटतकपामिति ज्ञेयम्। तेन खस्थाने क, फ स्थाने प इत्येवं आदेशप्रकारः। तथाहि—खाद् णल्, खाद् खाद् अ=खखाद्अ=क खाद् अ=चखाद (कुहोश्चुरिति कस्थाने चादेशः) एवमन्यत्र। पुनः 'स्थानेऽन्तरतमः' इति परिभाषानुसारतः आन्तर-तम्यमेव दर्शयति तत्रापि इति। तत्रापि तेष्वपि तृतीयचतुर्थवर्णेषु—प्रकृतिजशाम् प्रकृत्या स्वभावेन जशाम् प्रकृतिजशः प्रकृत्या स्वभावेन जशः आदिश्यन्ते इत्यर्थः। एवं प्रकृतिचरा—मित्यत्रापि व्याख्यानप्रकारो विज्ञेयः। कुत एषा व्यवस्थेत्याह—आन्तरतम्यात् इति। झशोजशश्च घोषसंवारनादप्रयत्नवन्तः। किञ्च खयश्चरश्च श्वासाघोषविवारप्रयत्नपरा इति विवेको बोधः। एतच्च भाष्यसंमतम्। तथा च भाष्यम्—प्रकृतिचरां प्रकृतिचरो भवन्ति। चिचीषति। प्रकृतिजशां प्रकृतिजशश्च भवन्ति। जिजनिषति। बुबुधे ददौ।" चिचीषतीति चिधातोः सनि 'सन्यङो' रिति सूत्रेण-द्वित्वे कृते रूपमेवं जिजनिषति इत्यत्र जनधातोः सनि रूपम्।

यद्यप्यत्रैव प्रकृतं बभूवेति पदं सिद्धम् तथापि 'असिद्धवत्सूत्रमध्यपतितत्वात् वुकः कथं नासिद्धत्वमुवङश्च कथं न सिद्धत्वेन बलीयस्तया प्राप्तिरिति विचारयितुमसिद्धवत्-सूत्रमित्रोपन्यस्यति —

२१८३ । असिद्धवदत्राभात् ॥ ६।४।२२ ॥

दी । इत ऊर्द्धमापादपरिसमाप्तेराभीयम् । समानाश्रये तस्मिन् कर्त्तव्ये तदसिद्धं स्यात् । इति वुकोऽसिद्धत्वादुवङि प्राप्ते ।

"वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ" ( वार्त्तिक ) । वभूव । वभूवतुः । वभूवुः ।

Meaning of the words in the rule :—असिद्धवत् means non-extstent. अत्र means भाधिकारे and समानाश्रये । आभात् means literally, upto the rule "भस्य" ; but here it is meant to signify 'up to the end of this chapter." Hence the वृत्ति here ( भट्टोजि ) says, "आभीय extends from here up to the end of the chapter" ; i. e. a rule will be treated as आभीय or असिद्ध falling in or coming from this भाधिकार ।

When the आश्रय or subject matter is common, the rule which is to act upon it, will be regarded as असिद्ध ( not having occurred or as non-existent. ) Thus भू has now the common sphere of application of उवङ् and वुक् and the rule 'अचिश्नुधातुभ्रुवांय्वोरियङुवङौ' ( २७१—६।४।७७ ) directing उवङ् precedes the rule 'भुवोवुक्लुङ्लिटोः । (2174—9. 4. 88) directing वुक्. Then वक becomes असिद्ध or as not having occurred towards भू and thus उवङ् applies. So now we look forward :—

[ (Other instances are एधि, शाधि जहि—In the first case, the rule घ्वसोरेद्धावभ्यासलोपश्च ( 2471-46. 4. 119 ) directs एकार to अस् । Thus in लोट् the form would have been एहि ; but the rule

"हुझल्भ्यो हेर्धिः" directs धि to अस्। Hence अस् becomes the common sphere of application and therefore ए is असिद्ध i. e. it is to be regarded as non-existent, for it ( एत्व ) is कर्त्तव्य i. e. must be done. Hence it is, that though 'ए' is अजन्त and not 'झलन्त' yet we have एधि and not एहि। In the 2nd case, the rule "शा हौ" in भाधिकार directs शाभाव of शास् in हि-विभक्ति so that the form becomes शाहि but as शा-भाव is असिद्ध or treated as शास् in the form of शा, the rule 'हुझलभ्यो हेर्धिः' applies and we get शाधि and not शाहि। In the last case, the rule 'हन्तेजः' ( हौ परे ) directs ज in place of हन् when हि follows and as ज is अकारान्त so the rule 'अतोहेः' also applies and हि eliding accordingly we get ज only instead of जहि but as ज is असिद्ध we get जहि and not ज only. ) ].

मित। इह क्वचिदुपमानोपमेययोरभेदेन निर्द्देशः क्रियते यथा—अयं ब्रह्मदत्त यथा वा सोऽयं राजा भवति 'तत्र राजवदित्यतिदेशो गम्यते। एवं शास्त्रेऽपि, यथा 'षत्वतुकोरसिद्धः' ( ३३३—६।१।८६ ) ; तत्र सामर्थ्यादतिदेशो विधीयते। क्वचित् पुनर्भेदेन ग्रहणम् वतिना क्रियते यथा—राजवदयं पुरुषः। एवमिहापि शास्त्रे ( अस्मिन सूत्रे ) वतिना निर्द्देशः क्रियते—। असिद्ध + वतिच् (तुल्यार्थे )=असिद्धवत्। अन्यत्र सिद्धमप्यत्रासिद्धमेव भवतीति तस्यार्थः। अथवा विद्यमानमपि अविद्यमानवद् भवतीति भावः। अत्रेति विषयसप्तमी। तथाच भाष्यम् "अथात्रग्रहणं किमर्थम्। 'अत्रग्रहणं विषयार्थम्' ( वार्त्तिक )। विषयः प्रतिनिर्द्दिश्यते। अत्रैतस्मिन्नाभाच्छास्त्रे आभाच्छास्त्रमसिद्धं यथा स्यात्" इति। आभादित्यभिविधौ आङ् इति। आभम्। लक्षणया अंशश्चाद्यन्चि वा यत्तत्र प्रक्रान्तं तदप्राभम्। तस्येदमिभाभीयम् 'भस्ये'त्यधिकारमभिव्याप्य इत्यर्थः। अधिकारश्च पादपरिसमाप्तिपर्य्यन्तमिति सिद्धान्तितम्। तथाचापादपरिसमाप्तेरित्यर्थः। कस्मादारभ्येत्याकाङ्क्षायामाह—इत ऊर्द्धमिति अस्मादेव

## अथ तिङन्तभ्वादिप्रकरणम् ।

सूत्रात् परम् । अस्माच्च सूत्रात् परम् 'श्नान्नलोपः (२५४४—६।४।२३) इति सूत्रम् । ततस्तस्मादेवारभ्य एतच्चतुर्थपादपरिसमाप्तिपर्य्यन्तम् प्रतिसूत्रमुपतिष्ठते । एवञ्च श्नान्नलोप इत्यादि यत्तदाभीयं कार्य्यं [ आभीयमिति भाधिकारोक्तम् ( आभ + छ ; तस्येय ) इत्यात् छप्रत्ययेरूपम् ] श्नान्नलोप इत्याद्याभीयकार्य्ये कर्त्तव्ये असिद्धवदित्यर्थः पर्य्यवस्यति ।

समानाश्रये इति सूत्रे अत्रेतिपदव्याख्यानम् । भावे सप्तमी । आश्रये स्वादौ समाने सति तुल्ये सति आभीये सति इति शेषः । तस्मिन् इति आभीये इत्यर्थः तत् 'आभीयम्' असिद्धम् अनुपस्थितम् अविद्यमानमिव स्यात् । तथा च भूधातुमधिकृत्य 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' (२७१ । ६।४।७७ ) इति, 'भुवो वुक् लुङ् लिटोः ( २१७४ ६।४।८८ ) इति चआभीयं सूत्रद्वयम् वर्त्तते । तत्र वुक्शास्त्रस्य परत्वेन असिद्धत्वादुवङि प्राप्ते "वार्त्तिकमारभ्यते वुग्युटाविति" । उवङ् स्थाने— वुक् सिद्धो भवति यण्स्थाने च युट् सिद्धो भवतीति यथासंख्यमन्वयः । तदेतद्वार्त्तिक-वचनात् उवङ्पास्तम् वुक् च प्राप्तम् । अतो बभूवेति सिद्धम् । एवं बभूवतु-रित्यादि । युट उदाहरणं तु दिदीये इति ।

[ एधिशाधिजहीत्यादयोऽप्युदाहरणानि । तत्र घ्वसोरेद्धावभ्यासलोपश्चेति एत्वस्य आभीयतया असिद्धत्वात् ( असुवङ्ग्रपरिवर्त्तित्वात् ) हुझल्भ्योहेर्धिरिति सूत्रं प्रवर्त्तते । एधीति रूपञ्च भवति । एवं 'शा हौ' इति शासुधातोः शाभावस्य—आभीय-तया असिद्धत्वात्—( शास वुद्धः अपरिवर्त्तितत्वात् ) 'हुझल्भ्यो' इत्यनेन शाधि इति पदं लभ्यते । एवञ्च 'हन्तेर्जः' इति सर्व्वादेशेन हन्स्थाने जकारः प्राप्तः । ततश्च 'अतो हे' रिति हिलोपविधायकं सूत्रमुपतिष्ठते । किन्तु आभीयतया जभावस्य असिद्धत्वात् हेर्लुक् न भवति 'जहि' इति च सिध्यति । समानाश्रये इति किम्— । पाधातोः क्वसौ पपिवान् इति भवति । तस्य शसि विभक्तौ पपुषः इति सम्पद्यते । तत्र वसोः सम्प्रसारणम् आभीयम्, 'आतो लोप इटि चेति'(२३७२—६।४।६४) आल्लोपे आभीये कर्त्तव्ये—असिद्धम् न भवति । कथमिति चेत् । आल्लोपः क्वसौ—, सम्प्रसारणन्तु शस्विभक्तौ तन्नेदं समानाश्रयविषयकं कार्य्यं किन्तु भिन्नाश्रयविषयकमेव

आभादिति किम्—आभीयं प्रत्येव आभीयमसिद्धं यथा स्यादेवमर्थम्। तेन अभाजि रागः इत्यत्र 'भञ्जेश्च चिणि' (६।४।३३), रञ्जेश्च' (६।४।२६), 'घञि च भावकरणयोः' ६।४।२७ इति न—लोपे कृते तस्य असिद्धत्वाभावात् 'अत उपधायाः' (२२८२—७।२।११६) इति वृद्धिर्भवतीत्याहुः। 'अत उपधायाः' इतिसूत्रस्य—भाधिकारमध्येऽपतितत्वादिति ज्ञेयम्]।

**२१८४। आर्द्धधातुकस्येड्वलादेः ॥ ७।२।३५ ॥**

**टी। वलादेरार्द्धधातुकस्य इडागमः स्यात्। वभविथ। वभूवथुः। वभूव। वभूव। वभूविव। वभूविम।**

The augment इट् is attached or prefixed (आद्यन्तौटकितौ) to an आर्द्धधातुक—the first letter of which is one of the वल्प्रत्याहार। वल् प्रत्याहार constitutes the letters beginning from व of हयवरट् up to the end of the शिवसूत्र। Thus वभूव्+थल्। Here थल् is आर्द्धधातुक and the letter थ falls in the वल् प्रत्याहार। Therefore इट् is attached to it and we get इट् थल् (by आद्यन्तौटकितौ) = इथ। Hence finally वभूव् इथ = वभूविथ। Similarly वभूविव and वभूविम। But as there is no वल् letter preceeding in वभूवथुः and वभूव, इट् is not attached to them.

मित—। लिट् चेति सूत्रे लिट आर्द्धधातुकत्वं प्राग् व्याख्यातम्। वल् इति वल् प्रत्याहारस्थवर्णाः। शिवसूत्राणां पञ्चमसूत्रस्थवादयोऽन्त्यसूत्रस्थहावसानाः। तेनायमर्थः—वल्प्रत्याहारस्थः यः कश्चिद् वर्णः यस्य आर्द्धधातुकस्य आदौ वर्त्तते तस्य इडागमो भवति। इट् च ट-का-रान्तम्। तेन तु 'आद्यन्तौ टकितौ' इति परिभाषाबलात्—वलाद्यार्द्धधातुकस्य—आदावेव इट् प्रयुज्यते। अतः थल् इति इथल् इत्येवं सम्पद्यते। ततश्च वभूव् इत्यनेन योगे सति लकार-लोपे वभूविथ इति भवति। एवं वलादित्वात् वभूविव वभूविम इति च। वलादित्वाभावाच्च वभूवथुः वभूव इत्यनयोरिडागमोन विभावनीयम्।

'नेड्वशिकृतीति (७।२।८) अत्र इट्ग्रहणे सत्यपि पुनरेविड्ग्रहणं स्पष्टप्रतिपत्त्यर्थ-मित्याहुः ।

आर्द्धधातुकस्येति किम् ? आस्ते—शेते—जुगुप्सति इत्यादिषु मा भूत् । एतेषां सार्व्वधातुकत्वादिति बोद्धव्यम् । न च सन आर्द्धधातुकत्वात् जुगुप्सतीत्यत्र इटा भाव्यमिति वाच्यम् । अत्र 'धातो'रित्युक्ता विधानाभावात् सार्व्वधातुकत्वमेव नार्द्धधातुकत्वम् । अन्यत्र तु पिपठिषति इत्यादौ 'धातोः कर्म्मणः—' इति धातूप-पदोच्चारणद्वारेण विधानात् तत्र सन आर्द्धधातुकत्वमेव न सार्व्वधातुकत्वम् । एतच्च 'आर्द्धधातुकं शेषः' (२१८७) इत्यत्र स्पष्टीकरिष्यते अस्माभिरित्यलम् । वलादेः किम्—बभूवथुः । बभूव । एधनीयम् । अथुस् अ अनीयेत्यादीनाम् आर्द्धधातुकत्वेऽपि अकारा-दित्वमेव न तु वलादित्वम् । अतो नेट् ।

## २१८५ । अनद्यतने लुट् ॥३।३।१५॥

### टी— । भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् ॥

लुट् is attached to a root to bring out the sense of a future action not occuring this day. Hence it will be errone-ous to say सोऽद्य गन्ता गृहम् for अद्य स गमिष्यति । For this de-fect लुट् is designated as periphrastic future ; so it should be borne in mind that लुट् has restriction in its application whereas लृट has not.

मित— । धातोरित्यधिकृतम् । 'भविष्यति गम्यादय' इत्यतोभविष्यतीत्यनुवर्त्तते । सर्व्वस्मिन् भविष्यत्यर्थे लुटः प्रयोगं वारयति—भविष्यत्यनद्यतने इति । अद्यतनं भविष्यत् कालं विहाय प्रयोगं लभते इत्यर्थः । तेन सोऽद्य गन्ता गृहम् इत्युक्तं प्रमाद एव भवेत्—तत्र गमिष्यतीति प्रयोगस्यैव साधुत्वादित्यलम् । लुटः उटावितौ— । ततो लस्य—तिबादयः । भू ति इति स्थिते—

२१८६ । स्यतासी ऌलुटोः ॥३।१।३३॥

टी— । 'ऌ—' इति लृङ्लृटोर्ग्रहणम् । धातोः स्यतासी एतौ प्रत्ययौ स्तो ऌलुटोः परतः । शबाद्यपवादः ।

ऌ is the common letter of लृट् and लृङ् । Hence by pronouncing it the सूत्रकार hints at लृट् and लृङ् । When ऌ (लृट् and लृङ्) and लुट् follow the affixes स्य and तासि are attached to a root i. e., the affix स्य is attached to that root which is followed by लृट् and लृङ् and the affix तासि is annexed to that root which is followed by लुट् । This rule bars the application of शप् etc.

मित—। स्यश्च तासिश्चेति द्वन्द्वः । तासेरिकार उच्चारणार्थः। ऌच लुट् चेति द्वन्द्वस्तयो-रिति सप्तमीद्विवचनान्तम्— । ऌइति लृटि लृङि चोभयत्र प्रथमाक्षररूपेण साधारणं वर्त्तते । तेन ऌ इत्यनेन लृट्लृङोरुभयोरेव ग्रहणम् । धातोरिति चाधिकृतम् ; तदाह धातोरित्यादि । लृङि लृटि च स्य विधीयते लुटि तु तास् इति विवेकः । कर्त्तरि शप् इति यदुक्तम् तस्य बाधकमिदं सूत्रम् । तदेवाह शबाद्यपवाद इति— । एतेन भू तास् ति इति स्थिते—( लुट आर्द्धधातुकत्वविषयकं सूत्रमवतारयति )— ।

२१८७ । आर्द्धधातुकं शेषः ॥३।४।११४॥

टी— । तिङ्शिद्भ्योऽन्यो धात्वधिकारोक्तः * प्रत्ययः एतत्संज्ञः स्यात् । इट् ।

A प्रत्यय or affix is called as such i. e. called आर्द्धधातुक which is expressed in the jurisdiction (अधिकार) of धातु and which is other

* 'धात्वधिकारोक्त' इत्यत्र 'धातोरितिविहितः' इति तत्त्ववोधिन्यां पाठः । स एव साधीयान् इति मन्यामहे ।

than तिङ् and शित् etc. It is said formerly in the rule 'तिङ्शित्-सार्वधातुकम्' ( 2166—3. 4. 113 ) that धात्वधिकारोक्त प्रत्ययs like तिङ् and शित् are designated as सार्वधातुकs. Hence प्रत्ययs other than those are, आर्द्धधातुकs i. e as elsewhere said it is to be remembered that except लट्, लोट्, लङ् and विधिलिङ्, all प्रत्ययs लिट्, लुट्, लृट्, लृङ्. etc are आर्द्धधातुकs. Hence he says इट i. e. the augment इट comes before तास् by 'आर्द्धधातुकस्येड् वलादेः' (2184).

[ अत्र सूत्रे 'धात्वधिकारोक्ताः' इत्यत्र 'धातोरितिविहितः' इत्यपि तत्त्वबोधिन्यां पाठो दृश्यते। तत्र 'धातोरितिविहितः' इत्यस्य अयमर्थः—यत्र यत्र सूत्रे धातोरिति उच्चार्य्यते तत्र तत्र तादृशस्य धातोरार्द्धधातुकसंज्ञा भवति इति बोधः। तथाच 'धातोः कर्म्मणः समानकर्त्तृकादिच्छायां वा' ( २६०८—३।१।७ ) इत्यत्र धातोरित्युच्चार्य्य विधानात् सन आर्द्धधातुकत्वम्—इट् च भवति। किन्तु 'गुप्तिज्किद्भ्यः सन्' (२३९२—३।१।५ ) इत्यत्र धातोरित्युच्चार्य्य विधानाभावात् सन आर्द्धधातुकत्वम् इडागमश्च न भवति। अतएव जुगुप्सति तितिक्षते चिकित्सति इतीड्गुणरहिताः प्रयोगा सिद्ध्यन्ति इति दिक् ]।

मित—। 'तिङ्शित् सार्व्वधातुकम्' (२१६६—३।४।११३ ) इत्यत्र तिङः शितश्च धात्वधिकारोक्ता एतत् संज्ञाः स्युरित्युक्तम्। अतः इदमर्थादायाति यत्—तिङ्शिद्भ्योऽन्ये धात्वधिकारोक्ताः प्रत्ययाः लिट्लुडादय आर्द्धधातुकसंज्ञाः स्युरिति। एतेन लुट आर्द्धधातुकत्वात्—'आर्द्धधातुकस्येड् वलादेः' ( २१८४—७।२।३५ ) इति इट् प्राप्नोति। तदाह—इट् इति। भू इट् तास् ति इति स्थिते—

## २१८८। लुटः प्रथमस्य डारौरसः ॥२।४।८५॥

**टी—। 'डा' 'रौ' 'रस्' एते क्रमात् स्युः। डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः।**

डा रौ रस्—these three come in order in लुट्, in the third person of a root. In other words, these are substitutes for

तिप् तस् झि and त आताम् झ। So तिप् and त are replaced by डा, तस् and आताम् are replaced by रौ and so on. डा drops ड्, therefore it is a डित् प्रत्यय। So, though it is beyond the possession of भसंज्ञक प्रत्ययs enumerated in the rule "यचि भम्"—(231—1. 4. 18), yet the टि (अचोऽन्त्यादि टि—(79—1. 1. 64)), of the expression (भू इ तास्) elides by the rule—टेः (316—6. 4.143) and then we get भू इत् ('आस्' is टि) or भू इत् डा or भु इत् आ with डा added to it. Lastly by 'सार्व्वधातुकार्द्धधातुकयोः' we have भो इत् आ = भव् इत् आ = भवित् आ—।

मित—; डा च रौ च रस् चेति द्वन्द्वः। लुट् इति स्थानषष्ठी। प्रथमस्येति प्रथमपुरुषस्य। ननु परस्मैपदात्मनेपदभेदेन तिप् तस् झि. त आताम् झ इति षट् स्थानिनः आदेशाः, डारौरसः इति त्रय एव। तत् कथं यथासंख्यमन्वय इति चेत्। उच्यते—डारौरसश्च डारौरसश्चेति एकशेषमाश्रित्य भगवत्पतञ्जलिभिर्महाभाष्ये समाहितत्वात्—तेन परस्मैपदे च आत्मनेपदे च उभयत्रैव डारौरसां समावेशः स्यात्। डाभावस्य प्रथममादेशत्वं ततः प्रत्ययसंज्ञा। तेन 'चुटू' इत्यस्याप्रवृत्तिस्ततश्च सर्व्वादेशत्वम्। एवं ति स्थाने डा, तस स्थाने रौ इत्याद्यादेशक्रमो वोध्यः। एवमात्मनेपदेष्वपि तस्थाने डा—आताम् स्थाने रौ इति ज्ञेयम्। डित्त्वसामर्थ्यादिति—डा इत्यस्य डकारो लुप्यते। तेन यस्मात् उत्तरमयं विधीयते सोऽयं डित् इति कथ्यते। इह च प्रकृते भू इ तास् इति संघातादुत्तरं डा विधीयते। तदयं संघातो डित् भवति। यतश्च अयं डिद् भवति ततश्च डित्त्वबलात् अस्य, टेः (११६—६।४ १४७) इति सूत्रानुसारेण टिभागस्य 'आस्' इत्यस्य (अचोऽन्त्यादि टिः—(७९—१।१।६४)) लोपो भवति। अभस्य इति। 'यचि भम्' (२३१—१।४।१८) इति सूत्राधिकारे डा तद्वि भंज्ञो नोपादीयते। ततश्चायमभः भभिन्नः, भसंज्ञको न भवति इत्यर्थः। डित्तु भवति। ततो डित्त्वसामर्थ्यादेव अभस्यापि टेर्लोपो भवति। तदेतदाह—डित्त्वे ति। एतेन भू इतास् डा =भू इतास् आ = (अवादेशः)=भवित् आ (आस् इति टि भागस्य लोपः) इति स्थिते—

२१८६। पुगन्तलघूपधस्य च ॥ ७।३।८६ ॥

टी—। पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात् सार्व्वधातुकार्द्धधातुकयोः। येन नाव्यवधानं तेन व्यवहितेऽपि, वचनप्रामाण्यात्। तेन भिनत्तीत्यादावनेकव्यवहितस्येको न गुणः। 'भवित्' 'आ' अत्रेको गुणे प्राप्ते।

The इक् (इ उ ऋ ऌ) of an अङ्ग ending in पुक् * (प्) and having a short vowel in the उपधा (अलोऽन्त्यात् पूर्व्व उपधा) is gunnated (or takes the substitute guna) when a सार्व्वधातुक or an आर्द्धधातुक प्रत्यय follows. In other words, a पुगन्त or a लघूपध अङ्ग has its इ, उ, ऋ, ऌ changed into ए, ओ अर् अल् when a सार्व्वधातुक or an आर्द्धधातुक follows. येन etc—a single letter whose intervention (falling in the middle) is unavoidable, cannot bar the गुण of इक्; for there is the authority of the Panini's word. The sense is this—Panini, by the rule 'पुगन्तलघूपधस्य च' seeks to assert that the इक् of a लघूपध root (as द्विष्+ता=द्वेष्टा) is gunnated; but उपधा necessitates the existence of a consonant after the इक् (अलोऽन्त्यात्पूर्व्व उपधा). Hence if that consonant is only one in number then its presence between the root and the सार्व्वधातुक or आर्द्धधातुक प्रत्यय will not bar the गुण। Thus in the above instance 'ष्' is between द्वि a part of the root द्विष् and ता (आर्द्धधातुक) and yet the इक् (इ) of द्वि is gunnated and we have द्वेष्टा; or more clearly Panini asserts that a लघूपध root is gunnated when

---

* पुक् is an augment—cp. the rule 'अर्त्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातां पुग्णौ' २५७०—७।३।३६।

a सार्व्वधातुक or an आर्द्धधातुक प्रत्यय follows. Take द्विष् ता। Here द्विष् is लघूपध and आर्द्धधातुक ता follows. But does ता follow invariably the इक् ( इ ) of द्वि? No. How then can it have guna ? The answer is—you can not dispense with the intervenning letter ष् for in that case there will be no उपधा and consequently the root will no more be लघूपध but will be लघ्वन्त। Thus to keep in tact the लघूपधत्व of the root the presence of a single letter which is essential is not taken into consideration. This is the authority of Panini.

But in भिनत्ति etc, there is more than one letter present between भि and त्ति ( सार्व्वधातुक ) viz, भि ( न द् ) त्ति and so the इक् of भि is not gunnated ( भिद् is रुधादि so the augment श्नम् comes in by the rule 'रुधादिभ्यः श्नम्' and as श्नम् is मित् or म-eliding so न comes after भि )।

Now the question is whether in the case in hand ( भवित् आ ), guna will be substituted or not ( for here also भवित् is a लघूपध अङ्ग, त् is the single letter intervening and आ is the आर्द्धधातुक affix following )—

मित—। अङ्गस्येति अधिकृत' वर्त्तते। 'मिदेर्गुणः' ( २३४६—७।३।८२ ) इत्यतो गुण इत्यनुवर्त्तते। गुणश्च इक एव भवति 'इको गुणवृद्धी' इति परिभाषा-सूत्रात्। 'सार्व्वधातुकार्द्धधातुकयो' ( २१६८—७।३।८४ ) रित्यतश्च सर्व्वधातुकार्द्धधातुकयोरिति अनुवर्त्तते। तदेतद् सर्व्वमभिप्रेत्याह—अङ्गस्येत्यादि। पुक् 'आगमः' अन्तो ( अन्तावयवः ) यस्य तत् पुगन्तम् ( वहुव्रीहिः )। लघ्वी उपधा यस्य तत् लघूपधम् ( वहुव्रीहिः ); पुगन्तञ्च लघूपधञ्च पुगन्तलघूपधम् ( समाहारद्वन्द्वः ) तस्य पुगन्तलघूपधस्येति अङ्गस्य विशेषणम्—तदाह पुगन्तस्येति लघूपधस्येति च। तदयं

स्पष्टार्थः—(१) सार्व्वधातुके आर्द्धधातुके वा प्रत्यये परतः पुगन्तस्य अङ्गस्य इकारोकारादेर्गुणो भवति यथा—'क्री' इति धातुर्ज्ञायां वर्त्तते। तस्य णिचि पुगागमे क्रेपि इति भवति। ततः शप्तिपौगुणश्च। क्रेपयति। एवमन्यत्रापि बोद्धव्यम्। "अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुक् णौ" (२५७०—७।३।३६) इतिपुक्—(२) सार्व्वधातुके आर्द्धधातुके वा प्रत्यये परतो लघूपधस्य अङ्गस्य इकारोकारादेर्गुणो भवति यथा—द्विष ति = द्वेष्टि, द्विष ता द्वेष्टा।

ननु सार्व्वधातुकार्द्धधातुकयोः इतुरुच्यते न च तौ परतो भवतः अला व्यवधानात्। तथाहि 'अलोऽन्त्यात् पूर्व्व उपधा' इति अन्त्यादलः पूर्व्व वर्ण उपधासंज्ञको भवति। तत् अन्त्येन अला व्यवहितत्वात् इकः सार्व्वधातुकपरत्वमार्द्धधातुकपरत्व वा कथं भवति—तत्परत्वाभावाच्च परनिमित्तको गुणोऽपि कथं भवेत्? अत्राहुः—येन अला (वर्णेन) नाव्यवधानम् न अव्यवधानम् किंन्तु व्यवधानमेव अविवर्ज्जनीयरूपेण व्यवधानमित्यर्थः। तेन व्यवहितेऽपि मध्यपतितत्वेन विच्छिन्नेऽपि सार्व्वधातुके आर्द्धधातुके वा प्रत्यये परतः परनिमित्तको (सार्व्वधातुकार्द्धधातुकपरनिमित्तक इत्यर्थः) गुणः भवत्येव। तथाच द्विष ता इत्यत्र षकारेण ता इति आर्द्धधातुकः प्रत्ययो व्यवहितः। षकारमुत्थाप्य ता इत्येतत् अव्यवहितं कर्त्तुं शक्यते किन्तु तथात्वे सोपधत्वमेव नास्ति। निरुपधत्वे—पुगन्तेति सूत्ररूपं पानिनेराचार्य्यस्य वचनमेव विहन्यते। तत् यथान्यासमेवास्तु। अत आह—वचनप्रामाण्यादिति।

ननु तर्हि यथा एकवर्णव्यवधाने परनिमित्तको गुणो भवति तथा अनेकवर्णव्यवहितेऽपि स्यात् इति चेत्—तत्राह—तेनेति। एकाधिकवर्णव्यवधाने परनिमित्तको गुणादेशो नास्त्येवेति भावः। तदेव दर्शयति भिनत्ति इत्यादाविति—आदिपदेन छिनत्ति इत्यादि ग्राह्यम्। तथाहि भिनत्ति इत्यत्र भिद इति रौधादिको धातुः (भिदिर विदारणे)। तत्र 'रुधादिभ्यः श्नम्' इति—श्नम् विधीयते। श्नमश्च मित्त्वादन्त्यादचः परो नकारो विधीयते तेन भिनद इति जातम्। एवञ्च अनेकव्यवहितत्वाद भिद इत्यस्य इको (इकारस्य) गुणो न भवति। एवं छिनत्ति इत्यादौ।

ननु प्राप्ति भवित् आ—इत्यत्र तु वर्णमात्रमेव व्यवधानं तर्हि तत्र भवित् इत्यस्य

इको गुणः स्यात्—इति शङ्कां निराकरिष्यन् आह—गुणे प्राप्ते इति [ भवित् आ इत्यत्र डाभावभूतस्य आकारस्य स्थानिवद्भावेन सार्व्वधातुकतया परनिमित्तको गुणादेशो भवत्येव तथापि ]—

२१९० । दीधीवेवीटाम् ॥१।१।६॥

दी—। दीधीवेव्योरिटश्च गुणवृद्धी न स्तः। भविता।—

गुण and वृद्धि are not sanctioned to the roots दीधी and वेवी and to an इडन्त अङ्ग। Thus भवित् which is an इडन्त अङ्ग cannot have its इक् gunnated and consequently we get भविता, and not भवेता।

मित—। अस्मात् सूत्रात्—गुणो न। अयं सूत्रार्थः—दीधीङ् दीप्तिदेवनयोः (देवनं क्रीड़ा); वेवीङ् वेतिना (वीधातुना) तुल्यः अर्थे वर्त्तते। वीधातोश्च—वी गतिप्रजननकान्त्यशनखादनेषु इत्याद्यर्थाः—। दीधी च वेवी च इट चेति द्वन्द्वः। तेषाम्—। इट् इति इडागमसहितस्य धातोरित्यर्थः। अतएव भवित् आ इत्यत्र गुणो न। 'भविता' इति च सिद्धम्—। भवितारौ—इति पदं साधयितुं प्रक्रमते—।

२१९१ । तासस्त्योर्लोपः ॥७।४।५०॥

दी—। तासेरस्तेश्च लोपः स्यात् सादौ प्रत्यये परे।

When a सकारादि प्रत्यय follows the स of तास् and अस् elides.

मित—। 'सः स्यार्द्धधातुके' (२३४२—७।४।४९) इत्यतः सि इति अनुवर्त्तते। तदाह—सादौ प्रत्यये परे इति। "अलोऽन्त्यस्य' इति परिभाषया तास्प्रत्ययस्य अस् धातोश्च सकारो लुप्यते। तास् च अस्तिश्च इति तासस्ती—(द्वन्द्वः) तयोः। तदाह तासेरस्तेश्चेति। अस्ति इति तिपा निर्देशः।

२१९२ । रि च ॥७।४।५१॥

दी—। रादौ प्रत्यये प्राग्वत्। भवितारौ। भवितारः।

भवितासि। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः।

When a रकारादिप्रत्यय follows, the elision is as before (i.e. the सकार elides). Thus भवि तास रौ (तस) भवितारौ। Similarly भवितारः, भवितासि etc.

मित—। रकारादौ च प्रत्यये परे तासः सलोपः प्राग्वत्, पूर्व्व सूत्रे इव इत्यर्थः। अस्तिस्तु नेह संवध्यते। असंभवात। तथाहि अस्धातोरुत्तरं सार्व्वधातुका एव प्रत्यया प्रयुज्यन्ते रकारादिप्रत्ययास्तु आर्द्धधातुका एव तत् कुतः सम्बन्धः। 'अस्तेर्भू'रिति भूभावे कृते रकारादिप्रत्यया विधीयन्ते। भू+इट् (आर्द्धधातुकस्येड्वलादेः)+तास् (स्यतासी लृलुटोः)+रौ=भो (गुण) इ तास्रौ=भवितास् रौ (अवादेशः)= भवितारौ (सलोपः)। एवमन्यत्र। सर्व्वत्र भवितास् इति साधारणम् ततस्तदुत्तरं सिप् थस् प्रत्यया इत्यादयः प्रयुज्यन्ते।

२१८३। लृट् शेषे च ॥३।३।१३॥

टी—। भविष्यदर्थाद्धातोर्लृट् स्यात् क्रियार्थायां क्रियायमसत्यां सत्यां च। स्यः—इट्। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः।

लृट् is attached to a root expressing futurity no matter if there is any क्रियार्था क्रिया or not. A क्रियार्था क्रिया means a क्रिया or verb which necessitates the presence of another क्रिया or verb. The प्रत्यय स्य is आर्द्धधातुक and वलादि so the rule 'आर्द्धधातुकस्येड् वलादेः' applies and consequently the augment इट् comes in. Thus भू इट् स्य ति=भविस्यति (by गुण and अवादेशः)= भवि-

ष्यति, स is changed into ष by the rules 'इण्कोः' (211—8. 3. 57) and 'आदेशप्रत्यययोः' ( 212—8. 3. 56 ). So भविष्यतः etc. भविष्यामि etc ; here the vowel is lengthened by the rule 'अतो दीर्घो यञि' as in भवामि भवावः etc.

Note the explanation of 'शेषे च'—। The preceding rule is "तुमुन् ण्वुलौ क्रियायां क्रियार्थायाम्" ( 3175—3. 3. 10 ) it contains the expression क्रियार्थायाम् क्रियायाम्. Hence शेषे means other than that ( cp. उक्तादन्यः शेषः ) i. e. the absence of क्रियार्थायां क्रियायाम् । The significance of च in the rule is क्रियार्थायां क्रियायाम् also । Now क्रियार्था क्रिया denotes a क्रिया or verb which necessitates the existence of another क्रिया or verb for its application. Thus शयिष्यते इति स्थीयते —he stays because he will sleep'—here शयिष्यते is the क्रियार्था क्रिया । The instance of शेष is सोऽत्र शयिष्यते—he will sleep here,

Now you may say 'let the rule be 'लृट्' only and शेषे च be omitted' so that to bring out the sense of शयिष्यते इति स्थीयते we shall say शयितुम् स्थीयते by applying तुमुन् in place of लृट in शयिष्यते । This you cannot say, for grammarians do not sanction the application of तुमुन् in place of लृट् cp 'क्त्वाल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति' ( for the explanation of वासरूपविधि see the rule 'वासरूपोऽस्त्रियाम्' —(2830—3. 1. 94 ) and our notes in our Edition of Laghu-Kaumudi—pp 207.

मित—। उक्तादन्यः शेषः। उक्तश्च क्रियार्थायां क्रियायामिति पदद्वन्द्वम्—'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (३१७५—३।३।११) इत्यत्र। तस्मादन्यः क्रियार्थायाः क्रियायाः अभावः इत्येवं रूपः शेषः। चकारेण पुनः क्रियार्थायामित्याद्याक्षिप्यते। तदाह क्रियार्थायां क्रियायामसत्यां सत्यां चेति। क्रियार्था ( क्रियाप्रयोजना ) क्रिया अर्थः

प्रयोजनं यस्या इति विग्रहः। यथा शयिष्यते इत्यत्र स्थितिक्रिया शयनप्रयोजना। अतः शीधातोर्लृट् इति। क्रिया विद्यतां वा नवेति तदर्थः। तत्र क्रियार्थायां क्रियायामित्यस्योदाहरणं—शयिष्यते इति, स्थीयते इति। तदितरस्य (क्रियार्थायां क्रियायामसत्यामित्यस्य) उदाहरणम्—शयिष्यते इति। स्य इति लृट्प्रत्ययः आर्द्धधातुकः वलादिश्च भवति। तत्र इट् प्राप्नोति। तदाह—स्यः इडिति। एवमत्र प्रक्रिया—भू इट् स्य तिप् इति स्थिते सार्व्वधातुकार्द्धधातुकयोरिति गुणे सति 'एचोऽयवायावः' इति अवादेशे च सति भविस्यति इति जाते 'इण्कोः' 'आदेशप्रत्यययोः' इति षत्वे भविष्यति इति सिध्यति। एवं भविष्यत इत्यादयः। भविष्यामि इत्यादिषु तु 'अतो दीर्घो यञि' इति सूत्रात् भवामि इत्यादाविव दीर्घादेशः स्वरस्य इति संक्षेपः।

ननु लृट् इत्येव सूत्रमस्तु। किमनेन शेषे चेति वचनेन तथा च शयिष्यते इति स्थीयते इत्यादौ तुमुना कार्य्यं साधयामः इति चेत्। उच्यते "क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति" इति निषेधात् न तथा शक्यमिति ज्ञेयम्।

## २१६४। लोट् च ॥३।३।१६२॥

### टी—। विध्यादिष्वर्थेषु धातोर्लोट् स्यात्।

लोट् is used when the root expresses the विधि etc enumerated in the rule 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्' (2208—3. 3. 161).

मित—। विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् इति अव्यवहितपूर्व्वसूत्रम्। तद् विध्यादिरिहापि चकारेण अनुवर्त्तते। तदाह—विध्यादिष्वर्थेषु इति।

## २१६५। आशिषि लिङ्लोटौ ।३।३।१७३॥

## २१६६। एरुः ॥३।४।८६॥

### टी—। लोट इकारस्य 'उः' स्यात्। भवतु।

लिङ् and लोट् are used to express आशिष् (benediction); उ

is the substitute of इकार of लोट् affixes. Thus तिप् is changed into तुप् and झि or अन्ति is changed into अन्तु ।

२१६७। तुह्योस्तातङाशिष्यन्यतरस्याम् ॥७।१।३५॥

आशिषि तुह्योस्तातङ् वा स्यात्। अनेकाल्त्वात् सर्व्वादेशः। यद्यपि 'ङिच्च' (४३) इत्ययमपवादस्तथापि अनन्यार्थङित्त्वेष्वनङादिषु चरितार्थ इति गुणवृद्धिप्रतिषेधसम्प्रसारणार्थतया सम्भवत्-प्रयोजनङकारे तातङि मन्थरं प्रवृत्तः परेण बाध्यते। इहोत्सर्गापवादयोरपि समबलत्वात्। भवतात्।

To express आशिष् (benediction) तातङ् (तात्) is the optional substitute for तु and हि। तातङ् is अनेकाल् (containing more than one अल् or letter) and so it replaces तु and हि in full i. e तु and हि are dismissed and तातङ् (तात्) is employed in their place. Now you may rejoin 'why तातङ् is not substituted for the last letter only by the rule ङिच्च (43—1. 1. 53) which being a special rule (अपवादसूत्र) bars the application of the rule 'अनेकाल्शित्सर्व्वस्य' (45—1. 1. 55)? To answer this rejoinder, he (भट्टोजि) says—Though the rule ङिच्च as an अपवादसूत्र bars the application of the rule अनेकाल्शित् सर्व्वस्य here, yet it is to be noted that ङित् has its scope in the case of अनङ etc * in 'अनङ् सौ' (See 248—7. 1. 93) where

* Cp—'अनङ् सौ'—Here अनङ् replaces the last letter only of सखि giving सखन्. ङ is attached to अन so that it may replace a part and not the whole of the word सखि।

the ङ of अनङ् has no other necessity than अन्तादेशत्व ( being a substitute for the last letter only ). In other words, if the सूत्रकार had said 'अन सौ' instead of "अनङ् सौ' then अन being अनेकाल् (containing more than one letter ) would have replaced the whole of सखि, but that is contrary to his intention ; so he attached ङ to अन that it may replace the last letter only of सखि and not the whole of it. But the necessity of adding ङ to तात is multifarious, viz it has been attached that it may bar गुण ( गुणप्रतिषेधः ), वृद्धि ( वृद्धिप्रतिषेधः ) and that it may enjoin सम्प्रसारण etc. Instance of गुणप्रतिषेधः—The rule 'पुगन्तलघूपधस्य च' enjoins गुण to द्विष् but as तातङ् is ङित् so by the rule 'क्ङिति च' ( 2217—1. 1. 5 ) it bars gunnation of द्विष् and consequently we have द्विष् तातङ्=द्विष्टात् and not द्वेष्टात् । Instance of वृद्धिप्रतिषेधः—ष्टुञ् (स्तुतौ) + तातङ् here the rule 'उतोवृद्धिर्लुकि हलि' (2443—7. 3. 89 ) enjoins वृद्धि to स्तु but तातङ् is ङित् so it bars वृद्धि by 'क्ङिति च'and the result is स्तुतात् and not स्तौतात्. Instance of सम्प्रसारण—वश ( कान्तौ 'इच्छायाम्' ) + तातङ् here because तातङ् is ङित् so the rule 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ( 2412—6. 1. 16 ) applies and वश gets सम्प्रसारण ( इग्यणः सम्प्रसारणम् ) giving उष्टात् and not वष्टात् ।

Thus ङ has so many diverse necessities ; so the rule ङिच्च has a very loose hold ( मन्थरं प्रवृत्तः ) upon तातङ् and consequently (because its hold has been loosened इद्धवत् शिथिलग्रहत्वात्) it has been overruled by the परसूत्र 'अनेकालशित् सर्व्वस्य' for though there runs the परिभाषा 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' yet here

the उत्सर्ग or general सूत्र 'अनेकाल्—'and the अपवाद or special सूत्र 'ङिच्च' have equal force. Thus by सर्व्वादेश we haveभवतात्—

मित—। तुह्योः+तातङ्+आशिषि+अन्यतरस्याम् इतिच्छेदः। तुश्च हिश्च तुह्यौ (द्वन्द्वः) तयोः (षष्ठी—द्विवचन)। तुह्योरिति स्थानषष्ठी—तातङ् इति आदेशः। अन्यतरस्याम् इति विकल्पवचनम्। तेन अयमर्थः—तुस्थाने हिस्थाने च तातङ् इति विकल्पेन आदिश्यते आशिषि। तातङ् इति चानेकाल्—तेन अनेकाल्शित् सर्व्वस्य' इति परिभाषावलात्—सर्व्वादेशः; तुशब्दस्वरूपं हि-शब्दस्वरूपं च उत्थाप्य तत्तत्स्थाने—तातङ् (तात्) प्रतिनिर्द्दिश्यते इत्यर्थः। ननु तातङ् इति ङित्त्वोऽयमादेशः। तत् 'ङिच्च' इति परिभाषामाश्रित्य—कथम् अन्त्यादेशत्वं तातङः न भवति अपवादसूत्रत्वेन 'अनेकाल्' इत्याद्यपेक्षयास्य वलीयस्त्वात् इति चेत्। तत्र उत्तरमाह—यद्यपीति। सत्यम् 'ङिच्चेति' सूत्रम् अनेकाल्शित्सर्व्वस्य इत्यस्य अपवादत्वेन पठितम्—किन्तु प्रयोजनापेक्षं हि सूत्राणामुत्सर्गापवादत्वम्। तथाच यत्र ङित्त्वस्य अन्त्यादेशत्वं विहाय प्रयोजनान्तरं नास्ति तत्रैव ङिच्चेति अनेकाल् इत्यस्य अपवादो भवति। यथा 'अनङ्सौ' (२४८—७।१।९३) इत्यादिषु। अत्र अनङः ङित्करणस्य अन्त्यादेशवर्ज्जं प्रयोजनान्तरं नास्ति। तेन अनङि ङिच्चेति सूत्रम् चरितार्थम् भवति। तदाह—अनन्यार्थङित्त्वेषु इत्यादि—। नास्ति अन्यः अर्थः येषां ते अनन्यार्थाः (वहुव्रीहि)। तादृशाः ङितः (कर्म्मधा)। तेषां भावः; तेषु। अनङादिषु इत्यस्य भेदकमेतत्। तातङि तु ङित्करणस्य—फलान्तरं विद्यते। तथा च क्वचित् गुणः प्रतिषिध्यते (क्ङितिचेति सूत्रवलात्), यथा—द्विष्तात् इति द्विष्टात् भवति, नतु पुगन्तलघूपधस्य चेति गुणेन द्वेष्टादिति। क्वचित् वृद्धिः प्रतिषिध्यते (क्ङ्तीत्यस्मादेवसूत्रात्) यथा स्तु तात् इत्यत्र स्तुतात् इति, न तु उतोवृद्धिर्लुकि हलि' (२३४४—७।३।८९) इति वृद्ध्या स्तौतादिति। क्वचित् च सम्प्रसारणाद्यर्थं ङकारस्य प्रयोजनम् यथा—उष्टात् इत्यत्र वश कान्तौ इत्यस्य तातङि—ग्रहिज्यावयिव्यधिवष्टि–(२४१२—६।१।१५) इति वकारस्य सम्प्रसारणं भवति। आदिपादेन ब्रूवइडिति ब्रूतादित्यत्र ईडभावः। एतानि तातङि ङित्करणस्य—प्रयोजनानि। तस्मात् केवलमन्त्यादेशत्वरूपप्रयोजनवत् ङिच्चेति सूत्रम् एतादृशवहुविधप्रयोजनवति तातङि

अन्यरं शिथिलंप्रवृत्तम् । ङित्वदर्शनेन प्रवृत्तमपि अप्रवृत्तवद् भवति प्रयोजनान्तरभूयिष्ट-त्वादस्य (ङित्त्वस्य) । अतः परेण सर्व्वादेशेन (अनेकालशित्—इत्यनेन) वाध्यते । ननु 'अनेकाल्शित् सर्व्वस्य' इत्युत्सर्गः,ङिच्चेति चापवादः । तत् 'परनित्यान्तरङ्गापवादानामु-त्तोरत्तरं वलीयः' इति अपवादशास्त्रस्य—वलीयस्त्वं कथं न भवति इति चेत् अत्राह—इहोत—इह (तातङ् विषये)' उत्सर्गसूत्रम्—अनेकाल् इति अपवादसूत्रेण ङिच्चेत्यनेन तुल्यं वर्त्तते । कथमिति चेत्, उच्यते—परनित्यान्तरङ्गापवादानामुत्तरोत्तरं वलीयः इति परिभाषया ङिच्चेति वलीयः । प्रयोजनभूयिष्टत्वात् पुनः सर्व्वादेशत्वमेव वलीयः । तद्‌-भावेव समवलौ—। अपवादश्च आत्मापेक्षया हीनवलमेव परीभवति । अत्र तु समवलत्वात् न तथा शक्तः । अतः सर्व्वादेशो निर्व्वाधः । भवतात् इति च सिध्यति । तातङ् इत्यस्य ङकार इत्— । तात् इत्यस्य शेषतकारादकारस्य उच्चारणार्थत्वम् । तेन तातङ्इत्यस्य तात् इति रूपं सम्पद्यते । तेन भवतात् इति ।

२१९८ । लोटो लङ्वत् ॥३।४।८५॥

टी— । लोटो लङ इव कार्य्यं स्यात् । तेन तामादयः सलोपश्चः । तथाहि ।

The operation of लोट् is like that of लङ् i. e. the process o लोट् resembles that of लङ् । Hence ताम् etc. are substituted and ( in places of तस् etc. ) स elides. As for example—

मित— । लङि यादृशं कार्य्यं समादिश्यते तादृशं कार्य्यं लोट्यपि भवति । तेन तसादीनां स्थाने तामादयः स्युः । सलोपश्च भवति । दृष्टान्तयति—तथाहीति—

२१९९ । तस्थस्थमिपां तांतंतामः ॥३।४।१०१॥

टी— । ङितश्चतूर्णां तामादयः क्रमात् स्युः ।

ताम्, तम्, त and अम् are substituted in order for these four तस्, थस्, थ and मिप् of the ङित् ( ङ eliding e. g. लङ्, लुङ्, लिङ् and लृङ ) affixes i.e., ताम् replaces तप्, तम् replaces थस and so on.

मित—। 'नित्यं ङित:' इति पूर्व्वसूत्रम्। तत: ङित इत्यनुवर्त्तते। तदाह ङित-श्चतुर्णामिति। तस् च थस् च थ च मिप्च (द्वन्द्व:); तेषाम्। ताम् च तम् च तच अम् च (द्वन्द्व:) ते। ङितइति—लोट् अपि ङित् भवति 'लोटो लङ्वत्' इत्युक्तेः। तेन लोटि, लङि, लुङि, लिङि, लृङि च तस्स्थाने ताम्, थस्स्थाने तम् इति क्रमेण आदेश:।

## २२००। नित्यं ङित: ॥३।४।९९॥

**दी—। सकारान्तस्य ङिदुत्तमस्य नित्यं लोप: स्यात्। 'अलोऽन्त्यस्य' (४१) इति सस्य लोप:। भवताम। भवन्तु।**

The (final of the) affixes, ending in सकार, of the first (उत्तम) of the ङित् (लकारः) elide. According to the परिभाषा—'अलोऽन्त्यस्य' the last letter स only of the affixes elides; as वस्=व; मस्=म। भू+तस्=भो अ तस्=भव् अ तस्=भवतस्=भवताम्। भू+झि=भो अ अन्ति (झोऽन्त:)=भव् अ अन्तु (एरु:)=भव अन्त=भवन्त (पररूप—by 'अतो-गुणे'—121)।

मित—। 'इतश्च लोप: परस्मैपदेषु' (३।४।९७) इति सूत्रमात्रव्यवहितपूर्व्वसूत्रम्। ततो लोप इत्यनुवर्त्तते। तदाह—लोप: स्यादिति। ङिदुत्तमस्येति लोट्लङ्लुङ्लिङ्-लृङामुत्तमपुरुषस्य—सकारान्तस्ययथा—वस् मस् इत्यनयो:। कस्य—लोप इत्यपेक्षायाम् अलोऽन्त्यस्य इति सकारमात्रस्य लोप न तु संघातस्य इत्याह। भवताम् भवन्त्विति आङ्लव्याख्यायां प्रक्रिया प्रोक्ता।

## २२०१। सेर्ह्यपिच्च ॥३।४।८७॥

**दी—। लोट: सेर्हि: स्यात् सोऽपिच्च।**

हि is the substitute for सि (सिप्) of the second person sing. of लोट् and this हि is अपित् i. e., not पित्। सिप् is पित्. हि is substituted for सिप्। So by स्थानिवद्भावः हि also becomes पित्

because the स्थानी सिप् is पित् (प्-eliding). But if हि is made पित् then the अङ्ग will be gunnated ; and forms like सुहि etc. will not be obtained. So it is made अपित् that it may become ङिद्वत् by the rule "सार्व्वधातुकमपित्"(2234—1.2.4). भव + हि this being the case—

मित । 'लोटो लङ्वत्' (३।४।८५। इत्यत: लोट इत्यनुवर्त्तते ; तदाह लोट: सेरिति । सेरिति सिपो निर्द्देश: । सिप् च पिद्द भवति । पिच्च गुणी भवति । हिप्रत्ययान्तस्तु गुणी न भवति । सिपः पित्त्वाद्धेरपि पित्त्वं प्राप्तम् तत् प्रतिषिध्यते । तेन अपित् वचनम् 'सार्व्वधातुकमपित्—' इत्यनुसारत: हि ङिद्वद् (अगुणी) च यथा स्यात् । तेन सुहीत्यादि सिद्धम् । भू शप् सिप् = भो अ हि=भव हि इति स्थिते—

**२२०२ । अतो हे: ॥६।४।१०५॥**

**टी— । अत: परस्य हेर्लुक् स्यात् । भव-भवतात् । भवतम् । भवत ।**

हि, coming after an अकारान्त अङ्ग elides. भव ends in अकार । Thus हि eliding we get भव । भव + तातङ्=भवतात् । भू + थस्=भवतम् । भू + थ =भवत by तस्थस्थमिपां तां तं तामः (2199).

मित— । अत इति पञ्चमी । हेरिति षष्ठी, अकारात् परस्य हिरित्यस्य लुक् इति सूत्रार्थः स्यात् । 'चिणो लुक्' ( ६।४।१०४ ) इत्यतः लुक् इत्यनुवर्त्तते । हेरलोपस्तु आप्नुहि सुहि इत्यादौ । भव इति सिपि परे गुण:, अवादेश:, सिपोहिरादेश:, ततो हिलोपे रूपम् । भवतात् इति 'तुह्योस्तातङि'ति तातङ्, गुण:, अवादेश इत्यादि सर्व्वत्र समानम् । भवतम् इति थस: तमादेश: । भवतेति थस्य तादेश: ।

**२२०३ । मेर्निः ॥३।४।८९॥**

**टी— । लोटो मेर्नि: स्यात् ।**

नि is the substitute for मि ( मिप् ) of लोट !

मित—। लोटो लङ्वदिति वर्त्तते। तदाह—लोट इति। लोट उत्तमस्य—मि ( मिप: ) इत्यस्य स्थाने नि इत्यादेश: स्यात्।

## २२०४। आडुत्तमस्य पिच्च ॥३।४।९२॥

**दी—। लोडुत्तमस्य आडागम: स्यात् स पिच्च। हिन्योरुत्वं न। इकारोच्चारणसामर्थ्यात्। भवानि। भवाव। भवाम।**

The augment आट् comes in the उत्तमपुरुष of the लोट् and this आट् is पित् i.e., the aug. आट् enjoins गुण to which it is enjoined. हि and नि should not have उकार owing to the authority of the pronouncing of the इकार in हि and नि। The sense is that the सूत्रकार expressly pronounces the word हि for सिप् and नि for मिप् and not like अन्त for झ where अन्त is changed into अन्तु for इ is in the स्थानी झि ; so this इ is changed into उ by 'एरु:' ; but here the इ of हि and नि lies in the आदेशs themselves and not drawn from सिप् and मिप्। Thus the सूत्रकार intends that हि and नि should not have उत्व by 'एरु:'। भू + मिप् = भो अ मिप् = भव मि = भव नि = भव आट् नि ( आद्यन्तौ टकितौ इति नेः प्राक्—आट् प्रयुज्यते ) = भव आनि = भवानि ( by 'अकः सवर्णे—' )। भवाव इति भू वस् = भव वस् = भव व ( नित्यं ङित: ) = भव आट् व = भवाव। Thus भवाम। Note that मिप् वस् and मस् change into आनि आव and आम।

मित—। लोटो लङ्वदित्यत: लोट इत्यनुवर्त्तते। तदाह—लोडुत्तमस्येति। लोटि उत्तमपुरुषविभक्तीनाम् आट् इत्यागम: स्यात्—। स च आट् पिद् भवति। पिद्वचनम् भवानीत्यादौ गुणार्थम्। ननु मिप् इति पिदेव। तत् पुनरस्य पिद्वचनं व्यर्थम् इति चेत्। न। वस्मसोरपित्वात्तयोरपि पित्वं यथा स्यात्। आट् इति टित् भवति। तेन 'आद्यन्तौ टकितौ' इति परिभाषया नि इत्यत: पूर्व्वम् आटोवस्थानम्। भव

आट् नि भवानि इत्यादि दर्शितं प्राक् । भवाव इत्यादौ नित्यं ङितः इति सलोपः । एतेन मिप वस्मसां क्रमेण आनि-आव-आम इत्यादय आदेशा बोध्याः ।

२२०५ । अनद्यतने लङ् ॥ ३।२।१११ ॥

दी— । अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् ।

लङ् is attached to a root expressing past tense not occurring to-day.

मित— । अनद्यतनेति 'अनद्यतने लुट्' ( २१८५—३।३।१५ ) इत्यत्र व्याख्यातम् । तादृशभूतार्थद्योतनाय धातोरुत्तरं लङ् प्रयुज्यते ।

२२०६ । लुङ्-लङ्-लृङ्क्ष्वडुदात्तः ॥ ६।४।७१ ।

दी— । एषु परेषु अङ्गस्याडागमः स्यात् स चोदात्तः ।

These ( लुङ्, लङ्, लृङ् ) following, the augment अट् comes in to the अङ्ग and this अट् is उदात्त ।

मित— । लुङ् च लङ् च लृङ् च (द्वन्द्वः) ; तेषु इति भावे ७मी । एषु परेष्विति । लुङि लङि लृङि च परतः अङ्गस्य अडागमः स्यात् । सोऽट् चोदात्तः स्यात् इत्यर्थः । अङ्गस्येति अधिकारवचनम् अत्रापि अनुवर्त्तते । अडागमोऽयं अन्तरङ्गः, नित्यः परश्च । तेन यथायथं, तिपि शपि विकरणे, गुणे अवादेशे च विकरणविशिष्टस्य अङ्गस्य—अड् विधीयते । लावस्थायाम् एवाडागम इति तु पक्षान्तरं भाष्ये स्थितम् । तत्पक्षे प्रागेवाट् । ततस्तिवादयः इति बोध्यम् ।

२२०७ । इतश्च ॥ ३।४।१०० ॥

दी— । ङितो लस्य परस्मैपदमिकारान्तं यत् तदन्तस्य लोपः स्यात् । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ।

The इकार of ( the affixes of ) the परस्मैपदी—ङित् लकार elides. Thus तिप्=त् ; अन्ति=अन्त्=अन् (संयोगान्तस्य लोपः) ; सिप्=स् and so on.

मित—। 'इतश्च लोपः परस्मैपदेषु' (२४२६—३।४।९७) इत्यतः परस्मैपदेषु इति अनुवर्त्तते। 'नित्यं ङितः' (२२००—३४९९) इत्यतः ङित इत्यनुवर्त्तते। लसेरिति च अधिक्रतं वर्तते। अतो व्याचष्टे—ङितो लसेरित्यादि। अलोऽन्त्यस्य इति शब्दस्वरूपस्य इकारलोपः। तदाह—तदन्तसेरिति। तदन्तसेरित्यत्र 'तस्य' इति पाठो दृश्यते तत्त्वबोधिन्याम्। तिप् इत्यादीनां पूर्व्वेण पलोपः। अनेन च सूत्रेण—इलोप तेन त् इति तिष्ठति। झि इत्यत्र पूर्व्वं झोऽन्त विधानम्। ततः इलोपे—अन्त् इति भवति ततः 'संयोगान्तस्य लोपः' इत्यनेन तलोपे अन् इति भवति। एवमन्यत्रापूह्यम्। इयं प्रक्रिया। भू+लङ् तिप=अट् भो शप् त्=अभव् अत्=अभवत्। अभवताम् इति तसः तामादेशः। (तस्थस्थमिपां तांतंताम:)। अभवन् इति अन्ति इत्यस्य अन् भावे जाते रूपम्। एवमन्यत्रापि साधनीयम्। अभवाव इत्यादौ—'अतो दीर्घो यञि' इति दीर्घादेशः। ततः 'नित्यं ङितः' इति सकारलोपे रूपम्।

**२२०८। विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्॥ ३।३।१६१॥**

**दी—। एष्वर्थेषु द्योत्येषु वाच्येषु वा लिङ् स्यात्। विधिः प्रेरणं, भृत्यादेर्निकृष्टस्य प्रवर्त्तनम्। निमन्त्रणं नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनम्। आमन्त्रणं कामचारानुज्ञा, अधीष्टः सत्कारपूर्व्वको व्यापारः। 'प्रवर्त्तनायां लिङ्'—इत्येव सुवचम्। चतुर्णां पृथगुपादानं प्रपञ्चार्थम्।**

When these senses are expressed or implied, लिङ् is used. विधि means command or sending away to do something i.e., ordering the inferior ones as servants to do some task. निमन्त्रण means to employ i.e., ask the daugter's son etc. to partake of in an exigent ceremony like *shradh* etc. आमन्त्रण means to request some one to do something at his will. अधीष्ट means to request respectfully some superior person to do something as 'माणवक' भवान् अध्यापयेत् 'sir' please take up the task of teaching the boy.' संप्रश्न means the ascertaining of a thing by judgment

"whether this is or is not to be done as 'किं भो व्याकरणं भवान् अधीयीत' 'should you read Grammar ( or anythig else )?' प्रार्थना—means 'begging' as 'भवान् अन्नं मे दद्यात् 'Please give me a dish of meal.'

The rule is better expressed thus 'प्रवर्त्तनायां लिङ् ।' 'लिङ्' is used in the sense of 'mild inducement or command.' The acceptance i.e., the mention of the four viz—विधि, निमन्त्रण, आमन्त्रण and अधीष्ट is to make a clear expression ( or to express in an exhaustive way ).

मित— । लडादिभिरिव लिङा अपि कर्त्रादय एव अभिधीयन्ते न विध्यादयः । तथा सति पूरुषव्यवस्था न स्यात् । कर्त्रादीनामेव हि पुरुषव्यवस्था, न तु विध्यादीनाम् । अत उक्तम् एष्वर्थेषु द्योत्येषु—इति । यच्च वाच्येषु वेत्युक्तम् तत् विधिनिमन्त्रणादिभिः कर्त्रादीनामभेदविवक्षया इति बोध्यम् । अत्र तत्त्वबोधिनी :—

"द्योत्येष वाच्येषु वेति । पक्षद्वयस्याप्याकरे स्थितत्वादिति भावः । अत्राद्ये तु इत्थमुपपत्तिः—विध्यादीनां प्रत्ययार्थत्वमनुचितम— । तथाहि सति कर्त्रादीनामर्थानां लकारान्तरे चरितार्थानां विध्यादयोऽर्था वाधकाः स्युः । तथा च लिङः कर्त्राद्यभिधायकत्वं न स्यात्, ततश्च द्विवचनवहुवचने न स्याताम्, शबादयश्च न स्युः, पुरुषव्यवस्था च न स्यात्, अभिहितत्वप्रयुक्तस्तृतीयादिविरहश्च न सिद्ध्येदिति । द्वितीये त्वित्थमुपपत्तिः—विध्यादिभिः कर्त्रादयो न वाध्यन्ते परस्परविरोधाभावात् । तथा च 'लः कर्म्मणि च भावे चाकर्म्मकेभ्यः' ( ३।४।६९—२।४।६९ ) इत्यत्र ल इति वहुवचननिर्द्देशेन सर्व्वलकाराणां संग्रहात् लिङादीनामपि कर्त्रादयोऽर्था भवेयुः । किञ्च कर्त्रादयोऽपि निरवकाशाः । न च लडादयोऽवकाशाः । न्यायसाम्येन विध्यादिवद्वर्त्तमानत्वभूतत्वादेरपि—तत्तल्लकारवाच्यत्वात्" इति । विध्यादीना मर्थान् स्वयमेव व्याचष्टे—विधिः प्रेरणमिति । नियोगकरणस्य प्रवर्त्तनार्थत्वेऽपि प्रेरणार्थत्वं वारयति—आवश्यके इति—तथाचोक्तम्—"त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपास्तिलाः" इति । पूर्व्वत्र विधौ 'वत्स भवान् चालये'दित्यदाहरणमत्र निमन्त्रणे तु—'इह श्राद्धे भवान् भुञ्जीतेति । आमन्त्र"

यथा—यथेष्टं कुर्वीत भवानिति । सत्कार इति सम्मानवचनम् । यद्यपि—सर्व्वत्रैव उत्कृष्टेण निकृष्टस्य प्रवर्त्तनं विधीयते तथापि—सम्मानप्रदर्शनपुरःसरं प्रवर्त्तनमेवात्र विशेषः । उदाहरणं यथा माणवकं भवान् अध्यापयेत् इति । संप्रश्नः 'संप्रधारणं विचारः यद्वा कर्त्तव्यमिदं न वेत्यादिरूपः' इति नागेशः । इत्येवसुवचमिति—एवं वक्तुं युक्तमित्यर्थः । सर्व्वत्रैव प्रवर्त्तनार्थत्वात् लिङिति । चतुर्णामिति—विधिनिमन्त्रणामन्त्रणाधीष्टानामित्यर्थः । प्रपञ्चार्थमिति—विस्तरेण वक्तुमित्यर्थः । उपादानमित्यनेन ग्रहणमभिधीयते । एवं प्रकृते—भू शप्—तिप् इत्यत्र गुणेन अवादेशे 'इतश्चेति' इ लोपे च भव त् इति स्थिते—

## २२०६ । यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ ३।४।१०३ ॥

**टी— । लिङः परस्मैपदानां यासुडागमः स्यात् स चोदात्तो ङिच्च । ङिल्वोक्तेर्ज्ञायते 'क्वचिदनुवन्धकार्य्येऽप्यनल्विधाविति प्रतिषेधः' इति । आदेशस्य शानचः शित्त्वमपोह्य लिङ्गम् ।**

The augment यासुट् comes in to the परस्मैपद विभक्तिs of लिङ् and it ( यासुट ) is उदात्त as well as ङित् । It is inferred from the saying of the ङित्त्व of यासुट्—that the प्रतिषेध i.e., prohibition ( of स्थानिवत्त्व by the rule 'स्थानिवदादेशोऽनल्विधौ'(49) applies in some cases of अनुवन्ध also. The sense is this—यासुट् replaces लिङ् and लिङ् is ङित् ( ङ—eliding ) so by स्थानिवद्भाव यासुट् also is ङित् । Thus there is no need of ङित्त्वविधान towards यासुट् । But the परिभाषा—runs —लाश्रयमनुवन्धकार्य्यं नादेशानाम्" i. e., the operation of an अनुवन्ध as ङ etc. which is enjoined in the matter of ल (tenses) is not to come in the case of their आदेशs as well. Here the अनुवन्ध ( ङ ) rests in लिङ् and it cannot extend to यासुट् also. Hence the specification 'ङिच्च' । Take for instance the word वक्ष्यमाणा—which is formed by the rule 'लृटः सद्वा' which substitutes शानच् in place of लृट । Now

the substitute शानच्* by स्थानिवत्त्व should have been टित् and उगित् for the ऋ of लृट् is one of the उक् letters and consequently we should have वक्ष्यमाणी—( ङीप् and not टाप् ) by the rule "टिड्ढाणञ etc." ( 470—4. 1. 15 ). But the ट् of लृट् which is a स्थानी is but an अल् ( letter ) and this अल् or letter prohibits the similar अनुबन्धत्व of शानच् which is an आदेश— । Hence we get वक्ष्यमाणा and not वक्ष्यमाणी । Similar is the process in यासुट् ।

आदेशस्य—etc ;—The rule 'हल: श्न: शानच् ह्नौ' ( 2557—3. 1. 83 ) directs शानच् in place of श्न । Thus श्न is the स्थानी and शानच्— is the आदेश ( substitute ) ; so by स्थानिवद्भाव श्न being शित् its substitute also must be शित् but the substitute शानच् also is again made शित् । Why is this arrangement ? The reason is that the सूत्रकार—hereby shows that the operation ( कार्य्य ) due to an अनुबन्ध with reference to ल ( tense ) does not extend to its ( लकार's ) आदेश (substitute). Cf. "लाश्रयमनुबन्धकार्य्यं नादेशानाम्" । It is a परिभाषा ।

मित— । परस्मैपदानामिति परस्मैपदविभक्तीनामित्यर्थः । आत्मनेपदानां तु सीयुट्—इति उभयेषां भेदः । यासुटः टकारो लुप्यते । उकार उच्चारणार्थः । यास् इति शिष्यते । 'आगमा अनुदात्ता' इति अनुदात्ते प्राप्ते उदात्तवचनम् । यासुटो ङित्त्वं तदङ्गन्यायेन समुदाये आक्षिप्यते । ङिच्चोक्तेरिति—ननु लिङः यासुडागमो विधीयते लिङ् च ङिदेव । ततः 'स्थानिवदादेशोऽनल्विधौ' (४८) इति यासुट् अपि ङित् एव तर्हि पुनः 'ङिच्चेति' यासुटो ङित्वविधानं व्यर्थम् इति चेत्—न । ज्ञापकम् एतत् ङिद्वचनम् । किम् एतेन ज्ञाप्यते ? इदम् एतेन ज्ञाप्यते—'अनल्विधौ' इति प्रतिषेधः न केवलं

---

*शतृ and शानच् are termed as 'सत्' ; Cf. the rule 'तौ सत्' (3106) And शानच् replaces लृट which is both उगित् ( उ—इत् ) and टित्.

धातुशब्दादिपरः किन्तु अनुबन्धाश्रितोऽपि। शब्दाश्रितोऽनल्विधिर्यथा—'दिवउत्' इत्यत्र वकारेत्यल्मात्रमाश्रित्य उत् विधीयते। ततश्च 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' इति द्यौरित्यत्र सुलोपो न भवति उत्त्वविधेरल्मात्राश्रितत्वात् इति शब्दगतोऽनल्विधिः। अनुबन्धगतो—यथा इहैव लिङ् इत्यत्र। अत्र लिङः ङकारानुबन्धः क्रियते; तं लिङः ङकारम् आश्रित्य यासुटः ङकारानुबन्धकत्वं यथा न भवति इत्येवमर्थं यासुटः पुनः ङित्त्ववचनम्। अस्ति च परिभाषा—"नाश्रयमनुबन्धकार्य्यं मादेशानामिति। एतस्यापि—चैतदेव यासुटः ङित्ववचनं ज्ञापकम्। एतेनापि अपरितुष्यन् पुनराह आदेशस्येति—"हलः श्नः शानज्झौ" (२५५७—३।१।८३) इत्यत्र श्न इति स्थानी—शानच् इति आदेशः। यदनुबन्धकः स्थानी भवति तद-नुबन्धकः तदादेशोपि भवति। श्न इति शित् भवति। तर्हि तत् स्थाने यत आदिश्यते तदपि शिदेव भवति। तर्हि शानजिति पुनः शित्करणं व्यर्थम्। आनजित्येव वक्तव्यम् इति चेत्? मैवम्। अस्ति शित्त्वस्य पुनः करणेन प्रयोजनम्—। लिङ्गं ( ज्ञापकं ) यथा स्यात्—। कस्य च ज्ञापकं भवतु? 'क्वचिदनुबन्धकार्य्येऽप्यनल्विधाविति प्रतिषेध' इत्यस्य। तेन वक्ष्यमाणा—इत्यत्र ङीप् न भवति, किन्तु टाप् एव भवति। कथञ्च ङीप्प्रति-षेधः कथं वा टाव्विधानमिति चेत्? उच्यते—'लृटः सद्वा' इति वच्+लृट् इत्यत्र लृटः स्थाने शानच् आदिश्यते। लृट् इत्यस्य च ऋकारटकारौ इत्यनुबन्धौ इतौ भवतः। ऋकारश्च उग्—उ ऋ लृ इतेषां मध्ये (ऋकारः इत्यर्थः) भवति। तेन ऋलोपात् टलोपाच्च उगित्त्वं टित्त्वं च भवति शानचः स्थान्यादेशत्वात्। ततश्च ङीबपि प्राप्नोति। तदेतत् प्रतिषिध्यते। कथम्? शानचष्टित्वमुगित्वं च न भवति। कथं ज्ञायते? श्नाप्रत्य-यस्य शानचः पुनः शित्त्वकरणात्। तेन टाबेव भवति न ङीप् इति। तदेतदाह—आदेशस्येति। आदेशस्य—इति शानचो विशेषणम्। श्ना इति प्रत्ययः ( क्र्यादिभ्यः श्ना इति सूत्रात् ); तस्य स्थाने यः आदेशः शानच् इति तस्येत्यर्थः। प्रकृते भव यास् त् इति स्थिते—

**२२१०। सुट् तिथोः ॥ ३।४।१०७ ॥**

**टी—। लिङस्तकारथकारयोः सुट् स्यात्। सुटा यासुट्**

न बाध्यते। लिङो यासुट्, तकारथकारयोः सुट्, इति विषय-भेदात्।

सुट् ( स् ) is the substitute for the तकार and the थकार of लिङ्। By सुट्, यासुट् is not barred. For each has a separate task to perform. Thus यासुट् is directed to लिङ् whereas सुट् is concerned with the तकार and the थकार ( of the same).

मित—। 'लिङः सीयुट्' ( २२५५—३।४।१०२ ) इत्यतः लिङ् इत्यनुवर्त्तते। तदाह—लिङ इति। तिथोरित्यस्य अर्थं विभजते—तकारथकारयोरिति। ति इति तकारे इकारः केवलमुच्चारणार्थः। तिश्च थश्च—( द्वन्द्वः ); तयोरिति विग्रहः। तकार-स्थाने—थकारस्थाने—च सुट् ( स् ) इत्यागमः विधीयते। यासुडिति पूर्व्वः; सुडिति परः। तर्हि परेण पूर्व्वस्य बाधः स्यात। अत आह—सुटा यासुडिति। कारणमाह लिङ इति। विषयभेदात् इति—यासुडिति लिङ्विषयकम्—सुडिति तु तकारथकार-मात्रविषयकम् इति—परस्परं भेदः।

२२११। लिङः सलोपोऽनन्त्यस्य ॥ ७।२।७९ ॥

टी—। सार्व्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात्। इति सकारद्वयस्यापि निवृत्तिः। सुटः श्रवणं त्वाशीर्लिङि। स्फुटतरं तु तत्राप्यात्मनेपदे।

The अनन्त्य ( not occurring at the end ) स of the सार्व्वधातुक लिङ् ( विधिलिङ् ) elides. Thus both the सकारs disappear ( at a time ). But the सुट् is heard in आशीर्लिङ् and it is distinctly or clearly heard in the atmanepada form of the आशीर्लिङ् i. e in सेविषीष्ट etc.

मित—। अन्ते भवः अन्त्यः। न तथा अनन्त्यः। तस्य। 'रुदादिभ्यः सार्व्वधा-तुके' ( २४७४—७।२।७६ ) इत्यतः सार्व्वधातुक इत्यनुवर्त्तते। सार्व्वधातुकलिङ इति

विधिलिङुच्यते। सकारद्वयस्यापीति—वृत्तगतफलद्वयन्यायेन युगपत् निवृत्तिः लोपः इत्यर्थः। तर्हि सुटो विधानं किमर्थं यासुटा एव कार्य्यसिद्धेरिति समाधत्ते—सुटः इति भूयास्तामित्यादौ श्रूयते। तत्र सकारो न लुप्यत इति भावः। तत्रापि स्फुटतरं विवृतिः— तत्र सकारद्वयस्यापि श्रवणमित्यर्थः। यथा सेविषीष्ट इत्यादौ—। तत्र यासुटः अभावात् सलोपविरहाच्च सुट एव सकारस्य पृथक् स्पष्टं श्रवणम् इति भावः। प्रकृते भव यास् स् त् इत्यस्य सकारद्वयलोपे भव यात् इति जाते—

**२२१२। अतो येयः॥ ७।२।८०॥**

**दी—। अतः परस्य सार्व्वधातुकावयवस्य 'या' इत्यस्य इय् स्यात्। गुणः। यलोपः। भवेत्। 'सार्व्वधातुके—' इति किम्। चिकीर्ष्यात्। मध्येऽपवादन्यायेन हि "अतो लोप" एव बाध्यते। भवेदित्यादौ तु दोषः स्यात्। भवेताम्।**

इय् is the substitute for या, a part (अवयव) of the सार्व्वधातुकलिङ् coming after a short अकार। Now गुण comes in by the rule 'आद्गुणः' (69—6. 1. 87). (Thus भव यात् = भव इय् त् = भवेयत्). Then य् elides by 'लोपो व्योर्वलि' (873—6. 1. 66). (Hence भवेयत् = भवेत्). Why say सार्व्वधातुक (in सार्व्वधातुकावयवस्य या etc)? Witness चिकीर्षयात्। (Here the root is चिकीर्ष (कृ + सन्). And this is आर्द्धधातुक for the affix सन् is आर्द्धधातुक। So इय् is not substituted for 'या' though चिकीर्ष ends in short अ (अत्), and we get चिकीर्ष्यात् and not चिकीर्षत्। If we did not add 'sarvadhatuka' etc here, then according to the maxim of मध्येऽपवाद * the rule "अतोलोपः (2308—6. 4. 48) would have been

---

* It is a portion of the परिभाषा—'मध्येऽपवादा पूर्व्वान् विधीन् बाधन्ते नोत्तरान्, i.e, "Apavadas that are surrounded (by rules which

barred (and not the rule "अतो दीर्घो यञि" (2170—7. 3. 101) which follows, not precedes it). And if अतोलोप is barred, you get चिकीर्षयात् (अ of चिकीर्ष not being elided). Then, though it is an आर्द्धधातुक, by अतो येय you would have चिकीर्षेत्; so we have added the word 'सार्व्वधातुक' here and चिकीर्ष (in चिकीर्षयात्) not being a सार्व्वधातुक the rule अतोयेय: does not apply and you get चिकीर्ष्यात् ।

N. B.—A clear exposition of the maxim of मध्येऽपवाद is this—An apavada rule, which rests in the middle of two rules, supercedes (or bars) the former and not the latter. The first पूर्व्व rule in Panini's order is अतोलोप: (6. 4. 48), the middle (मध्य) rule is अतो येय: (7. 2. 80) and the last or subsequent (उत्तर) rule is अतो दीर्घो यञि (7. 3. 101). [The object of Bhattoji in mentioning the मध्येऽपवादन्याय here is to show that it does not apply here and consequently we must have to draw the word सार्व्वधातुके from the rule 'रुदादिभ्य: सार्व्वधातुके' 7. 2. 76. and add the same into this rule so that we may safely defend the use चिकीर्ष्यात् ] । Again, if we did not add the word सार्व्वधातुक in our explanation, then भवेत् etc. could not have been formed. For the rule अतो दीर्घो यञि is पर: (following); so by the परिभाषा 'विप्रतिषेधे परं कार्य्यम्' we are to accept the rule अतो दीर्घो etc and dismiss

---

teach operations that have to be superceded by (Apavada-operations), supercede (only) those rules that precede, not those that follow them."(Kielhorn) The rule अतो येय is an अपवाद सूत्र and it rests in the middle of, 'अतोलोप:" and "अतो दीर्घो यञि" ।

the rule अतो येय: here। Then भव यात् would have been भवायात्, consequently भवा not being अकारान्त, अतो येय: would not apply and भवेत् would not have been formed. Hence the necessity of drawing the word सार्वधातुक to this rule (अतो येय: ). भव यास् स् तस्= भव या तस्=भव याताम् ( तस्थस्थमिपां तांतंतामः )=भवेताम् ( अतो येय: )।

मित—। अत इति पञ्चमी। तदाह—अत: परस्येति। या इति लुप्तषष्ठीकं पदम्। तदाह—या इत्यस्येति। 'रुदादिभ्य: सार्व्वधातुके' ( २४७४—७।२।७६ ) इत्यतः सार्व्वधातुक इत्यनुवर्त्त्य प्रयोजनवशात् अवयवषष्ठ्या विपरिणम्यते। तदाह सार्व्वधातुकावयवस्य इति। प्रयोजनञ्च अनुपदमेव स्फुटीभविष्यति। इय—इत्यत्र अकार उच्चारणार्थ:। तदाह इय् स्यादिति। गुण इति—भव यात् इत्यत्र याभावस्य इयादेशे भव इयत् इति स्थिते 'आद्‌गुण:' ( ६९—६।१।८७ ) इति गुणे सति 'लोपो व्योर्वलि' ( ८७३—६।१।६६ ) इति यकारलोपे च भवेत् इति लभ्यते। इदानीं सार्व्वधातुकानुवृत्तिरिह कथमिति पृच्छति—सार्वधातुक इति किमिति। उत्तरमाह—चिकीर्ष्यादिति। यदि हि सार्वधातुकानुवृत्तिरिह न क्रियेत, तर्हि चिकीर्ष्यादिति पदं न सिद्ध्येत् इति तदर्थ: कथं कृत्वा चिकीर्ष्यादिति न सिध्येदित्यत्र युक्तिं दर्शयति—'मध्येऽपवादन्यायेन ह्येति'। इयं हि परिभाषा 'मध्येऽपवादा: पूर्वान् विधीन् बाधन्ते नोत्तरान्'इति। सूत्रत्रय-विषयेयं परिभाषा। अत्रापि सूत्रत्रयं वर्त्तते। यथा—

'अतो लोप:' इति षष्ठस्य चतुर्थपादगतं सूत्रम् ( ६।४।४८ )।
'अतो येय:' इति सप्तमस्य द्वितीयपादगतं सूत्रम्। ७।२।८०।
'अतो दीर्घो यञि' इति सप्तमस्य—तृतीयपादगतं सूत्रम्। ७।३।१०१

तत्र 'अतो येय' इति मध्यगतमपवादसूत्रम्। तच्च मध्येऽपवादन्यायेन पूर्वसूत्रमतोलोप इतीदमेव बाधेत न तु परवर्त्ति 'अतो दीर्घो यञि' इति सूत्रम्। यदि च अतो लोप इति बाध्येत तर्हि चिकीर्ष यात् इत्यत्र चिकीर्ष इत्यस्य—आर्द्धधातुकत्वेऽपि अकारलोपो न स्यात्। तेन अतो येय इत्यनेन चिकीर्ष इयत् इति स्थिते 'लोपे व्योर्वलि' इति यलोपे च 'चिकीर्षत्' इत्यनिष्ट' प्रसज्येत। तस्मात् सुष्ठूक्तं सार्वधातुकावयवस्येति। एवमतिव्या-

मिदोषं दर्शयित्वा अव्याप्तिदोषं दर्शयति—भवेदित्यादौ तु इति—। अतो येय इति, अतो दीर्घो यञि इति—चानयो: अतोदीर्घो यञि इति सूत्रम्—विप्रतिषेधे परं कार्य्यम् इति परिभाषया अतो येय इति सूत्रम् वाधेत। ततश्च भव यात् इत्यत्र अतो दीर्घो—इत्येतेन भवायात् इति स्यात्। एवञ्च अत: परत्वाभावात्—अतो येय इति सूत्रं व्यर्थं स्यात्। तथाचाव्याप्तिदोषः स्फुट एव। अतः सार्वधातुकावयवस्येति सम्यगुक्तम्। भवेताम् इति तसः तामादेशे रूपम् अन्यत् समानम्।

## २२१३। झेर्जुस् ॥ ३।४।१०८॥

टी—। लिङो झेर्जुस् स्यात्। ज इत्।

जुस् is the substitute for the झि of लिङ्। ज elides and उस् only is retained.

मित—। लिङि झिस्थाने जसादेशो विधीयते इति अन्तापवादः। जुसः जकारो लुप्यते उस् इति शिष्यते।

## २२१४। उस्यपदान्तात् ॥ ६।१।९६ ॥

टी—। अपदान्तादवर्णादुसि परे पररूपमेकादेशः स्यात्। इतिप्राप्ते। परत्वान्नित्यत्वाच्च 'अतो येयः' (२२१२) इति प्राञ्चः। यद्यप्यन्तरङ्गत्वात् पररूपं न्याय्यम्। तथापि 'यास्' इत्येतस्य 'इय्' इति व्याख्येयम्। एवं च सलोपस्यापवाद इय्। 'अतो येय' (२२१२) इत्यत्र तु सन्धिरार्षः। भवेयुः। भवेः। भवेतम्। भवेत। भवेयम्। भवेव। भवेम।

The form of the latter (पररूप) is the single substitute (एकादेश) (for the two vowels) when उस् follows an अवर्ण which is not a पदान्त। This being the case i.e पररूप being due (we look ahead) :—old grammarians say that the rule 'अतो येय:'

( 2212—7. 2. 80 ) will supercede for it is both subsequent (पर) and persistent ( नित्य ). [ Observe that उस्यपदान्तात् is in the sixth chapter and अतो येय is in the seventh chapter of Panini's अष्टाध्यायी, so अतो येय is subsequent ( पर ) to उस्यपदान्तात् । This rule अतो येय is also नित्य (persistent ) for it must apply whether उस्यपदान्तात् comes in or not. Thus in भव या उस्, according to this view, या is first replaced by इय् ( by अतो येय: ) and then comes in पररूप thus भव आ झि = भव या उस् = भव इय् उस् = भवेय् उस् = भवेयु: । Bhattoji does not hold this view, for according to the परिभाषा—परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय:'—पररूप being an अन्तरङ्गविधि must have earlier application. So he solves the difficulty by explainng it as—यद्यपि etc.— ]

Though, to speak properly, being an अन्तरङ्गविधि * पररूप is due, yet the येय: of the rule 'अतोयेय: should be explained thus— 'इय् is the substitute for यास् and not for या' । In this explanation, इय् will supercede सलोप enjoined by 'लिङ: सलोपोऽनन्त्यस्य'. 2211. The सन्धि in येय: ( यास् + इय: ) of the rule अतो येय: is to be treated as an आर्षप्रयोग ( archaic ).

---

* According to Nagesha 'Antaranga is a rule the causes of the application of which lie within ( or before ) the sum of the causes of a Bahiranga rule ; and Bahiranga is a rule the causes of the application of which lie without or beyond the sum of the Antaranga rule'. But this is against Kaiyata for which see Tika below.

*N. B.*—According to the परिभाषा 'असिद्धं वहिरङ्गम् अन्तरङ्गे' which means—'That which is Bahiranga is regarded as not having taken effect (or—as not existing), when that which is Antaranga ( is to take effect )' ( Kielhorn ) Here उस् is अन्तरङ्ग ( an internal विधि ) and इय् is बहिरङ्ग, for the former ( उस् ) replaces झि which is an important part of the root भू and the latter ( इय् ) replaces या which being an augment is an external part of the same. Thus उस has precedence over इय् ; but if उस् comes earlier and इय् later then भव या उस् would be भवयुस् and as there is no या the injunction (विधि) of इय् fails ; consequently, we do not get भवेयुः । ( So Bhattoji defends his point by saying तथापि etc )—In the rule 'अतो येयः' it should be said that इय् replaces 'यास्' and not 'या' । Then इय् will supercede सलोप directed by the rule 'लिङः सलोपोऽनन्त्यस्य' (२२११) for इय् must have an execution (चरितार्थता) । Thus इय् coming before सलोप् we have भव यास् उस् =भव इयस् उस्, then by सलोप—भव इय उस् then by पररूप ( which is an अन्तरङ्गविधि) we have भव इयुस् ; lastly by आद्गुणः भवेयुः । It may be rejoined 'where did you get यास् ' ? For Panini has said अतो येयः ( या इयः ) and not अतो या इयः ( यास्+इयः ). To answer this he says अतः etc—Take the Sandhi in येयः as an आर्षप्रयोग ( an error coming from a sage or archaism ). Nagesha says that the भाष्यकार reads 'अतो या इय' in the rule 'आने मुक्' but this reading is wanting in the present edition of the भाष्य । भू शप् तिप्=भो अ सिप्=भव सिप्=भवयास् स् ( इतश्चेति इलोपः ) =भव या स् 2211=भव इयस् =भवेयस्=भवेः ( य लोपः by लोपो व्योर्वलि ) । Similarly

भवेतम् ( थस is replaced by तम् cp.—तस्थस्थमिपां तांतंतामः ) etc. भवेयम् ( मिप is replaced by अम् ) भव इय् अम् = भवेयम् ). भवेव भवेम ( स लोप by नित्यं ङितः—2200 )

मित—। 'आद्गुणः' (६९—६।१।८७) इत्यतः आद् ( अवर्णात् ) इति अनुवर्त्तते। तच्च 'अपदान्तात्' इत्यनेन विशिष्यते। तदाह—अपदान्तात्—अवर्णात् इति। उसि इति जुसः ज-वर्ज्जम् उसः सप्तम्यन्तं रूपम् ( भावे ७मी ), तदाह उसि परेति। 'एकः पूर्व्वपरयोः' (६८—६।१।८४) इत्यधिकृतम्। 'एङि पररूपम्' (७८—६।१।९४) इत्यतः पररूपमिति चानुवर्त्तते। तदाह—पररूपमेकादेश इति—पूर्व्वपरयोः पररूप एव शिष्यते इति च तदर्थः। इति प्राप्ते इति—भव या उस् इत्यत्र पूर्वपरयोराकारोकारयोः 'आद्गुण' इति गुणं वाधित्वा एकस्मिन पररूपे प्राप्ते इत्यर्थः। प्रथमं प्राचां व्याख्यानमुपन्यस्यति परत्वादित्यादिना—। इति प्राप्ते इत्यस्य 'इति प्राञ्चः इत्यनेन अन्वयः। 'उस्यपदान्तात्" इति पररूपविषयकशास्त्रापेक्षया 'अतो येयः' इति शास्त्रं परं नित्यञ्च। कृतेऽपि—पररूपे—प्राप्नोति अकृतेऽपि—। तत्र प्रथमं कृते पररूपे भव या उस् इत्यत्र भव युस् इति स्थिते एकदेशविकृतन्यायेन य् इत्यस्य भवत्येव इयादेशः—ततश्च यथापूर्वं गुणे सति च भवेयुरिति सिध्यति। तदेतत् प्राचीनमतं 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं वलीयः इति 'असिद्धं वहिरङ्गमन्तरङ्गे' इति च परिभाषाद्वयविरुद्धम्। तेन भट्टोजिरपरितुष्यन् आह—यद्यपीति—पररूपमङ्गानपेक्षत्वात् अन्तरङ्गम्*—। इयादेशस्तु प्रकृतिप्रत्ययोभयसापेक्षत्वाद्—वहिरङ्गम्। अतः पररूपमेव न्याय्यं वलवत्तरमित्यर्थः। तथा सति भवेयुरिति न सिध्यति, किन्तु भवयुरित्येव भवति अन्तरङ्गे पररूपे प्राप्ते वहिरङ्गस्य इयादेशस्य—असिद्धत्वात् ( अभावात् ) अप्राप्तेरिति यावत्। तदेतत् परिहरति तथापीति—'अतो येयः' इति सूत्रे इत्यर्थः। अतः यास् इय' इति सन्धिविच्छेदः। यास् इति लुप्तषष्टीकं पदम्। ततश्चायमर्थः पर्य्यवस्यति—अतः परस्य यास् इत्येतस्य—'इय्' इत्यादेशः स्यादिति। ततश्च भव यास् उस् इति स्थिते पूर्वं इय

* यद् वहु अपेक्षते तद् वहिरङ्गम्। यत्वल्पं तदन्तरङ्गमिति ह्रिकैयटवचःसारः। एतच्च असिद्धवत् सूत्रे कैयटे स्पष्टम्!

आदेशः सलोपविधायकम् 'लिङः सलोपोऽनन्त्यस्य—' इति शास्त्रं वाधिष्यते सामर्थ्यात् —तदाह एवञ्चेति । याम् इत्यस्य हि इयादेशो विधीयते । तत् यदि सकारो लुप्यते तर्हि इयादेशो निर्विषयः स्यात् । तस्मात् इय इति सलोपं वाधिष्यते । अन्यथा भवइयस् उस् इति जाते 'इयस्' इत्यस्य अकारान्तत्वाभावात्—पररूपं न प्रवर्त्तते । एवंच भवेयस् उस् इति गुणे सति सलोपे च भवेय इति जाते पश्चात्—पररूपेण भवेयुरिति सिद्धम् । ननु 'यास् इयः' इत्यत्र कथं-सन्धिः । सकारस्य रुत्वे ( विसर्गत्वे ), भो भगो —इति यत्वे, लोपः शाकल्यस्ये-ति यलोपे च 'अतो या इयः' इति स्यात्— । आद्गुणे कर्त्तव्ये सलोपस्य असिद्धत्वाद् इत्यवाह—सन्धिरार्षं इति । महर्षिपाणिनिकृतेयं व्यवस्था इति सर्वं सोढ़व्यमित्यर्थः । आनेमुक इति सूत्रभाष्ये तु 'अतो—या इय' इतीव दृश्यते इति नागेशः । तत्तु अस्माभिर्न दृष्टम् ! इति विधि-लिङ् प्रक्रिया ।

## २२१५ । लिङाशिषि ॥३।४।११६॥

### दी— । आशिषि लिङस्तिङार्द्धधातुकसंज्ञः स्यात् ।

The तिङ् of लिङ् in आशीः is termed आर्द्धधातुक i. e. the affixes तिप तस etc upto महिङ् are designated as आर्द्धधातुक in आशीर्लिङ् —in short आशीर्लिङ is आर्द्धधातुक ।

मित— । 'तिङ्शित् सार्व्वधातुकम्' इत्यतस्तिङित्यनुवर्त्तते । 'आर्द्धधातुकं शेषः' इत्यत आर्द्धधातुक इति च । लिङ् इति च लुप्तषष्ठीकम् । तदाह—आशिषि इत्यादि । आशीर्लिङ् आर्द्ध-धातुकमित्यक्षरार्थः ।

## २२१६ । किदाशिषि ॥३।४।१०४॥

### दी— । आशिषि लिङो यासुट् कित् स्यात् । 'स्कोः—' ( ३८० ) इति सलोपः ।

The augment यासुट् is to be treated as कित् ( क—eliding and

not ङित् as in विधिलिङ् ) in आशीर्लिङ् । The object of making it कित् is to direct सम्प्रसारण to यज् etc in आशीर्लिङ् by the rule 'वचिस्वपियजादीनां किति' ( 2409—6. 1. 15. ) whence we get इज्यात् which would not have been formed, had यासुट् been ङित् । Now भू यासुट् सुट् तिप् gives भू यास् स् त् ( सुट् is by 'सुट्तिथोः' 2210 and तिप् drops इ by 'इतश्च' 2207 ). N. B.—आशीर्लिङ् being आर्द्धधातुक you cannot attach शप् and consequently no गुण or अवादेश । The two सकारs in भू यास् स् त् elide by the rule ( स्कोः संयोगाद्योरन्ते च' (380—8. 2. 29 ) and we get भूयात् । Now to bar गुण and वृद्धि sanctioned by the rule 'सार्वधातुकार्द्धधातुकयोः' (2168—7. 3. 84) Bhattoji reads the special rule—

कित्— । 'लिङः सीयुट्' ( २२५५—३।४।१०२ ) इत्यतो लिङित्यनुवर्त्तते । 'यासुट् परस्मैपदेषूदात्तो ङिच्च' ( २२०९—३।४।१०३ ) इत्यतो यासुडिति च ; तदाह लिङो यासुडिति । ननु आशीर्लिङि अपि यासुडयं ङिद्रेव भवतु कोऽर्थः कित्करणेन । यथैव किति गुणनिषेध एवं ङित्यपि । तथा च भूयादित्याद्यपि—ङित्करणेऽपि सिध्यति । तस्मात्—लाघवार्थं ङिद्रेव उच्यताम् इति चेत् ? न । 'वचिस्वपियजादीनां किति' ( २४०९—६।१।१५ ) इत्यत्र सम्प्रसारणेन इज्यादित्यादिसाधनार्थं कित्करणस्य सप्रयोजनत्वात् । भू यासुट् सुट् तिप् इति स्थिते इदमत्र सम्प्रधार्य्यम्—यत् आशीर्लिङ आर्द्धधातुकत्वात् भुवो गुणावादेशौ न भवतः । ततश्च भूयास् स् त् ( इतश्चेति तिप इकारलोपे—त् मात्रं तिष्टति ) इति स्थिते '( 'स्कोः संयोगाद्योरन्ते च' ३८०—८।२।२९ ) इति द्वितीय सकारस्य—पदान्तसंयोगादित्वात्—लोपः । ततः प्रथमसकारस्यापि—पदान्तसंयोगादित्वादेव लोपः । एवं च सकारद्वयस्यापि निवृत्तिः । 'लिङः सलोपो ऽनन्त्यस्य' ( २२११ ) इति तु सार्व्वधातुकसकारलोपविषयकमिति विभावनीयम् । एवं सकारद्वयलोपे—भूयात्—इति लभ्यते । ननु भूयात् इत्यत्र भू धातोरार्द्धधातुकप्रत्ययपरत्वात् तस्य इकः ( ऊकारस्य ) कथं न गुणः इति चेद् उच्यते ।

२२१७—। क्ङिति च ॥१।१।५॥

दी—। गित् किन् ङिन्निमित्ते इगूलक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ।

The इक् ( इ उ ऋ लृ ) of a root neither have गुण nor have वृद्धि, when a ग्—eliding, क्—eliding or ङ्—eliding निमित्त (cause) exists. Here यासुट् is a क्—eliding निमित्त. Hence there is no question of गुण or वृद्धि। भू यासुट् सुट् तिप्=भू यास् स् त्= भूयात्। भू यासुट् सुट् तस् ( सुट् comes by 'सुट्तिथोः )=भू यास् स् ताम् ( by तस्थस्थमिपां तांतंतामः ) =भू या स्ताम् ( The स of यासुट् only elides by 'स्कोः etc' ( 380 ) and not सुट्=भूयास्ताम्। भू यासुट् झि= भू यास् जुस्= भूयास् उस् ( Here the स of यासुट् does not elide because it is not संयोगादि )=भयासुः ( by उसपदान्तात् 2214 ). भू यासुट् सिप् = भूयास् स् ( सिप् drops इ by 'इतश्च' ) =भूयाः ( यासुट् drops स् by '( स्कोः etc). भू+यासुट् थस् ( here सुट् comes in because थकार follows ) =भु यास् स् तम् ( तस् is replaced by तम् ) =भू यास् तम् या सुट् drops स् by 'स्कोः' ) =भूयास्तम्। भूयास्त ( here त replaces थ ) भूयासम् ( मिप is replaced by अम्—तस्थस्थमिपां तां तं तामः ) भूयास्व भूयास्म ( वस् and मस् drops स् by 'नित्यं ङितः' 2200 ).

मित—। गकारलोपिनि, ककारलोपिनि, ङकारलोपिनि च निमित्ते सति इको ( इकारस्य—उकारस्य ऋकारस्य ) गुणो वृद्धिर्वा न भवति। 'इको गुणवृद्धी' ( ४४—११२ ) इत्यतः 'इकः' इति 'गुणवृद्धी' इति चानुवर्त्तते। 'न धातुलोपे आर्द्धधातुके' ( २६५६—१।१।४ ) इत्यतो 'न' इति च। 'क्ङिति' इति च निमित्त-सप्तमी। तदाह—गित् कित्ङिन्निमिते इत्यादिना। अत्र चर्त्वेन गकारोऽपि प्रश्लिष्यते

इति तत्त्वबोधिनीकारादयः। तत्र चर्त्वस्य अयम् अर्थः। यथा दिश् इत्यस्य—चर्त्वेन दिक् इति भवति ( जशत्वेन तु दिग् इति ) एवमिहापि ककारात् प्राक् गकारस्य चर्त्वेन निर्देशः। तेनायं सूत्रार्थः—ग् च क् च ङ् च इति ग्क्ङ् ( समाहार द्वन्द्वः ) ग्क्ङ् इत् यस्येति ( बहुव्रीहिः ) तस्मिन् इति सप्तम्यन्तं सूत्रम्। द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकमभिसम्बद्ध्यते इति न्यायात्। इच्छब्दः 'ग्क्ङ्' एषां प्रत्येकमभिसम्बद्ध्यते तेन 'गित् कित् ङित्' इत्येवमर्थो भवति। अत्र भाष्यम्—'क्ङिति प्रतिषेधे तन्निमित्तग्रहणम् ( वार्त्तिक )। क्ङिति प्रतिषेधे तन्निमित्तग्रहणं कर्त्तव्यम्। किङन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति वक्तव्यम्। किं प्रयोजनम्। उपधारोरवीत्यर्थम् ( वार्त्तिक ); उपधार्थं रोरवीत्यर्थं च। उपधार्थं तावत्। भिन्नः। भिन्नवानिति। किं पुनः कारणं न सिध्यति। क्ङितीत्युच्यते। यत्र क्ङित्यनन्तरो गुणो भविष्यति तत्रैव स्यात्। किदन्तमेतत्। इह तु न स्यात्। भिन्नः। भिन्नवात् इति। ननु च यस्य गुण उच्यते तं क्ङित्परत्वेन विशेषयिष्यामः। पुगन्तलघुपधस्याङ्गस्य गुण उच्यते तच्चात्र ङित् परम्। पुगन्तलघूपधस्येति नैवं विज्ञायते पुगन्ताङ्गस्य लघूपधस्य चेति। कथं तर्हि पुकि अन्तः पुगन्तः लघ्वी उपधा लघूपधा। पुगन्तश्च लघूपधा च पुगन्तलघूपधम्। पुगन्तलघूपधस्येति। अवश्यं चैतदेवं विज्ञेयम्। अङ्गविशेषणे सतीह प्रसज्येत। भिनत्ति। रोरवीत्यर्थं च। त्रिधा बद्धो वृषभो रोरवीति' इति। तेन क्ङितीति निमित्तसप्तमीत्युक्तम्। किति गिति ङिति परे सति गुणवृद्धी नस्त इति च न व्याख्यातम् तथा सति छिन्नः—छिन्नवान् इत्यादि हला ( छिद् इत्यस्य दकारेणेत्यर्थः ) व्यवधानात् न सिध्यति। न च येनाव्यवधानन्यायेन सिध्यत्वेवेति वाच्यम्। तत्र तथा सत्यपि चितः स्तुतमित्यादिषु न सेत्स्यतीति दिक्। गित्करणफलं तु ग्लाजिस्थश्च गस्नु'रित्यादौ गुणः इत्वं च यथा न स्यादित्येवमर्थम्। तथाच जिष्णुरित्यादौ गुणोन-भवति। स्थास्नुरित्यादौ च नेत्वमित्यलम्''। भूयात् इत्यादीनां प्रक्रिया आङ्लव्याख्यायां प्रदर्शिता। इति आशीर्लिङ् प्रक्रिया।

**२२१८। लुङ्॥३।२।११०॥**

**दी—। भूतार्थवृत्तेर्धातोर्लुङ् स्यात्।**

लु is attached to a root, expressing ( any ) past tense.

मित—। धातोरिति अधिकृतम् ( २८२९—३।१।९१ )। 'भूते' ( २९९५—३।२।८४) इति च वर्त्तते तदाह—भूतार्थवृत्तेरित्यादि। अद्यतनानद्यतनोभयविधभूतार्थे लुङ् स्यादितिध्येयम्।

## २२१९। माङि लुङ् ॥३।३।१७५॥

दी—। सर्व्वलकारापवादः।

When the particle ( indeclinable ) माङ् is used, लुङ् alone should be attached to the root. This surpercedes ( or overrules ) every sort of लकार ( tense ).

मित—। यदा माङ् (मा) इति अव्ययं प्रयुज्यते तदा धातोर्लुङ् एव स्यादित्यर्थः। तदाह सर्व्वलकारापवाद इति। माङि प्रयुज्यमाने लुङ्वर्जं लकारान्तरं न भविष्यतीत्यर्थः। मिथ्या मा वद इत्यादौ तु 'मा' इत्यव्ययान्तरं निषेधद्योतकम्। न तु 'माङ्' इति ङिदन्तम्। 'मा' इति तु अङिदेव।

## २२२०। स्मोत्तरे लङ् च ॥३।३।१७६॥

दी—। स्मोत्तरे माङि लङ् स्यात् लुङ् च।

When 'माङ्' is followed by 'स्म' then not only लुङ् but लङ् alse is used.

मित—। माङि लुङ् स्यादिति स्थितम्। यदि तु माङः परतः 'स्म' इत्यव्ययं प्रयुज्यते तदा न केवलं लुङ् अपितु लङपि स्यात्। यथा—मास्म भूत् मास्म भवदिति।

## २२२१। च्लि लुङि ।३।१।४३॥

दी—। शबाद्यपवादः।

The affix च्लि is attached to a root in लुङ्। This over-rules शप्, श्नम् etc.

मित—। लुङि धातोः च्लि स्यान्न तु शपाश्नमादय इत्याह—शबाद्यपवाद इति।

## २२२२। च्लेः सिच् ॥३।१।४४॥

### टी—। इचावितौ।

च्लि is replaced by सिच् which drops इ and च्।

मित—। 'च्लि' इत्यस्य स्थाने 'सिच्' इत्यादेशः स्यात्। सिचः इकार—चकारौ लुप्येते। सकारमात्रं तिष्ठति। इकारचकारलोपयोः प्रयोजनमस्ति। इकार—लोपस्य प्रयोजनम् 'अनिदितां हल उपधायाः क्ङिति' (४१५—६।४।२४) इति अतंस इत्यादौ उपधा लोपो यथा न स्यात्। चकारलोपस्तु स्वरप्रयोजनः। एवमन्यत्रापि—अनुबन्धाः सप्रयोजना इति ज्ञातव्यम्।

## २२२३। गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥२।४।७७॥

### टी—। एभ्यः सिचो लुक् स्यात्। गापाविहेणादेशपिवती गृह्येते।

सिच् disappears coming after these roots [गा (the substitute of इण् गतौ, स्था, घु (दा and धा), पा (of which the substitute is पिव्) and भू]. Here गा and पा are taken i. e., explained to be the substitute of इण् (to go) and the स्थानी of पिव i. e., पा to drink respectively.

मित—। गातिस्थाघपाभूभ्यः सिचो 'लुक्' परस्मैपदेषु (विभक्तिषु परेषु) इति पूर्णं सूत्रशरीरम्। गातिस्थेत्यादि पञ्चम्यन्तम्। तदाह एभ्यः इति। सिच इति षष्ठ्यन्तम्। गातिश्च स्थाश्च घश्च पाश्च भूश्च—गातिस्थाघुपाभुवः (द्वन्द्वः); ततः पञ्चमी बहुवचनम्। 'इकश्तिपौ धातुनिर्देशे' (५७५ वार्त्तिक) इति श्तिपा 'गाति' इति निर्दि-

ष्यते । गाधातुरित्यर्थः । घु इति 'दाधाघ्वदाप्' (२३७६—१।१।२०) इति घु-संज्ञकयोः दाधातोः धाधातोश्च ग्रहणम् । 'गा' इति 'इणो गा लुङि' (२४५८—२।४।४५) इति गत्यर्थकइण् धातोः स्थाने आदिष्टः गाधातुः गृह्यते नतु 'गै' इति धातोः । 'पा' इत्यनेन च 'पाघ्राध्मा—' इति सूत्रेण यस्य पाधातोः पिबादेशो भवति तस्यैवात्र ग्रहणम् नतु पालनार्थकस्य, तदाह—गापौ इह इत्यादि [ गाच पाच—गापौ ( द्वन्द्व ); इणादेशश्च पिबतिश्च इणादेशपिबती (द्वन्द्व) ; गापौ इह इणादेशपिबती इति पदच्छेदः] । एवं च भू च्लि तिप् इति स्थिते सिजादेशे भू सिच् तिप् इति जाते सिच इकारचकार-लोपे तिपश्च 'इतश्चे'ति इकारलोपे सति अडागमे च अ भूस् त् इति स्थिते तिपः पित्वात् 'सार्व्वधातुकार्द्धधातुकयो'रिति गुणे प्राप्ते गुणनिषेधकशास्त्रमुपन्यस्यति—

## २२२४ । भूसुवोस्तिङि ॥७।३।८८॥

**दी— । 'भू' 'सू' एतयोः सार्व्वधातुके तिङि परे गुणो न स्यात् ।**

When the सार्व्वधातुक तिङ् ( तिप् तस् etc. ) follows गुण is not directed to the roots भू and सू । Now to bar the augment ईट् to अभूत् he brings forward the rule :—

मित— । 'मिदेर्गुणः (२३४६—७।३।८२) इत्यतो गुण इत्यनुवर्त्तते । 'नाभ्यस्ताच्चि पिति सार्व्वधातुके ( २५०३—७।३।८७ ) इत्यतः सार्व्वधातुके इति च ; तदाह—सार्व्वधातुके इति गुण इति च । सू इति 'षूङ् प्राणिगर्भविमोचने इत्यस्य लुग्विकरणस्य ( लुग्विकरण इति लुक् विकरणं ( शकारादिकं ) यस्येति विग्रहः ) ग्रहणम् । नतु 'सुवति' 'सूयति' इति शविकरण—श्यन् विकरणयोः । अदादिगणीयसूधातो-र्ग्रहणम्, नतु भ्वादिदिवादिगणीययोरित्यर्थः । भूत् अत्यत्र तकारस्य ईडागमं वारयितुमाह—

## २२२५ । अस्तिसिचोऽपृक्ते ॥७।३।९६॥

**दी— । 'सिच' च 'अस' चेति समाहारद्वन्द्वः । सिच्छ-**

व्दस्य सौत्रं भत्वम् । अस्तीत्यव्ययेन कर्मधारयः । ततः पञ्चम्याः सौत्रो लुक् । विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः स्यात् । इति ईट् न । इह सिचो लुप्तत्वात् । अभूत् । 'हलः' किम् ? ऐधिषि । 'अपृक्तस्य' इति किम् ?—ऐधिष्ट । अभूताम् ।

सिच् and अस् ( the root अस् ) form a समाहार द्वन्द्व compound as सिचस् । The word सिच् is a भ संज्ञक one--peculiar to the सूत्रs [ भत्व is directed by 'यचिभम्' ; here, however, सिच् is भसंज्ञक so you cannot expect कुत्व जश्त्व which is sanctioned to पदसंज्ञक words by चोः कुः ( ३७८ ) and 'झलां जशोऽन्ते ( ८४ ) । This sort of भत्व is not to be found in लौकिकप्रयोग—So he says—सौत्रं भत्वम् ( this is a sutra license ) ]. This word सिच् is then compounded with the word अस्ति which is an अव्यय, in the manner of a कर्मधारय compound. Then in a way peculiar to सूत्रs only, the पञ्चमी विभक्ति of सिच् disappears.

The augment ईट् is enjoined to an अपृक्त ( अपृक्त एकाल् प्रत्ययः ) हल् ( consonant—त् ), coming after the root अस् and a root in which exists the affix सिच् । Thus we cannot get ईट् ( before the अपृक्तहल्—त् ) because here the affix सिच् disappears and we get अभूत् । why say 'हलः' witness ऐधिषि ( एध् आत्मनेपद लुङ ईट् ( इ ) first person—gives ऐधिषि—Here there is no ईट् to the अपृक्त इ though it comes after सिच् for it is not a हल् but an अच् । Why say अपृक्तस्य—of an अपृक्त letter— ? Witness ऐधिष्ट (एध् (आत्मने) लुङ् त —third person—gives ऐधिष्ट for the affix त though it follows सिच्

is not an अपृक्त being a combination of त् and अ—। The argument is—In the former case ( ऐधिषि ),—the affix इट् (इ—first person) is an अपृक्त but it is not a हल्, whereas in the latter case (ऐधिष्ट), the affix त is a हल् but it is not an अपृक्त। भू सिच् तस् gives अट् ( लुङ्लङ्लृङ्क्ष्वडुदात्तः ) भूताम् (तस्थस्थमिपां तांतंतामः) equal to अभूताम्; सिच् disappears by गातिस्था—( २२२३ ).

मित—। सूत्रमिदं द्विधा व्याख्यानसहम्। तत्र प्राचीनमतम्—अस्तिश्च सिच्च इति अस्तिसिच् ( समाहारद्वन्द्वः ) तस्मादिति ५मी। ब्रूव ईट्' (२४५२—७।३-९३) इत्यत ईडित्यनुवर्त्तते। अपृक्ते इति षष्ठ्यर्थे ७मी। तेन—'अस्तेरङ्गात् सिचश्च परस्य अपृक्तस्य ईडागमः स्यात् इति काशिका। तदेतत् व्याख्यानं न सम्यक्। तथाचास्मिन्व्याख्याने अस्तेर्भूभावे अभूदिति न सिध्येत्। भूभावस्य स्थानिवद्भावेन अस्तितया तत्र अपृक्तस्य हल ईडागमस्य दुर्व्वारत्वात्। किञ्च अस्थात् अगात् इत्यादौ गातिस्थेति सिचो यद्यपि लुक् भवति तथापि स्थानिवत्वेन सिचः परत्वादीडागमः स्यात्। अतः प्रकारान्तरेण व्याचष्टे—( इदमेव नव्यमतम् द्वितीयव्याख्यानम् ), सिच्च अस् चेति। अस् चेति अस् धातुश्चेत्यर्थः (अत्रापि समाहारद्वन्द्वत्वात् कथं भेद इति न भ्रमितव्यम्—तत्र अस्तिश्च सिच्चेत्युक्तत्वादिति ); एवं समाहार द्वन्द्वे सिचस् शब्दे जाते सिच् शब्दस्य चकारस्य कथं न कुत्वज श्त्वे ( प्रथमं कुत्वं ततोगत्वम् ) न भवत इत्यत्राह—सिच्छब्दस्येति—यद्यपि वागर्थाविव इतीव अत्रापि पदत्वेन कुत्वं जत्वं च प्राप्तं तथापि तन्न, कुतः? सौत्रं भत्वमिति—नेदं पदं किन्तु भं भवति तेन कुत्वजश्त्वं न। ततः समाहार द्वन्द्वान्तस्य सिचस् शब्दस्य, 'अस्ति' इत्यव्ययेन कर्मधारय इत्याह—अस्तीति अस्ति ( विद्यमानम् ) सिचस् अस्तिसिचस् ( विशेषणं विशेष्येणेति समासः। तत्र अस्तीति विद्यमानार्थम् अव्ययं विशेषणम् 'सिचस्' इति च विशेष्यम् )। ततः पञ्चम्या इति। पञ्चमीविभक्तौ सत्यां हि 'अस्तिसिचसः' इति स्यात् तत् तु न दृश्यते अतः आह लुक् इति। लुका लुप्त इत्यर्थः। एवमक्षरशः सूत्रं विभज्य पदार्थं व्यनक्ति विद्यमानात् इति। विद्यमानात् इत्यस्य प्रत्येकं योगः। तेन

अयमर्थः—विद्यमानात् सिचः विद्यमानात् (कृतभूभावादिति तत्त्वबोधिनीकाराः) अस्तेश्च ( अस्धातोश्च ) परस्य—अपृक्तस्य हल ईडागमः स्यात्— । 'अपृक्त एकाल्प्रत्यय' इति अल्मात्र—स्वरूपस्य । हलः इति—'उतो—वृद्धिर्लुकि हलीत्यत्र 'हलि' इत्यस्य षष्ठ्या विपरिणामः । इति ईट् न ; कथं नेत्यत्राह इहेति—अभूत् इत्यत्र । सिचो लुप्तत्वादिति—'गातिस्थे'ति सूत्रेणेत्यर्थः । ननु सूत्रे 'हलः' इति आसजा कथं व्याख्यातम् तत्रोत्तरमाह—ऐधिषि इति—एध ( वृद्धौ ) आत्मनेपदी लुङि उत्तमपुरुषे इट् प्रत्यये परे ईडागमो न भवति । इटोऽपृक्तत्वेऽपि सिचः परत्वेऽपि हल्त्वाभावात् । अपृक्तस्य प्रयोजनं विशिनष्टि ऐधिष्ठ इति एधधातोर्लुङि प्रथमपुरुषैकवचनमिदम् । एध+लुङ् त—तत्र तकारस्य हल्त्वेपि सिचः परत्वेऽपि च अपृक्तत्वाभावादीडागमो न । त इति नेकाल् तकाराकारयोः ( त्+अ ) संघातत्वेन द्व्यल्त्वात् ( द्व्यचरत्वात् ) इति । भू लुङ् तस् इति स्थिते सिचि तामादेशे अडागमे च अभूतामिति भवति ।

२२२६ । सिजभ्यस्तविदिभ्यश्च ॥३।४।१०९॥

दी—। सिचोऽभ्यस्ताद् विदेश्च परस्य ङित्सम्बन्धिनो- झेर्जुस् स्यात् । इति प्राप्ते ।

जुस् is the substitute of झि, related to (i. e. existing in ) an ङित् ( लङ् लुङ् लिङ् etc. ), coming after सिच्, and अभ्यस्त root (जक्षित्यादयः षट्) and the root विद् । This being the case (i.e. झि going to be replaced by जुस्, we look forward ) :—

मित—। 'झेर्जुस्' ( २२१३—३।४।१०८ ) इत्यस्मात् जुस् इत्यनुवर्तते 'नित्यं ङित' ( २२०० ) इत्यस्मात् ङित इति च । सिच् च अभ्यस्तश्च विदिश्च ( इति द्वन्द्वः ) तेभ्यः ( ५मी ), तदाह—सिच इत्यादि । इति प्राप्ते = इति जुसि प्राप्ते इत्यर्थः ।

२२२७ । आतः ॥३।४।११०॥

दी—। सिज्लुक्यादन्तादेव झेर्जुस् स्यात् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ।

When the affix सिच् disappears, जुस् is the substitute of झि—only when झि follows an आकारान्त root. Thus भू being ऊकारान्त we cannot have जुस् as substitute for झि। अभूवन्—Here भू लुङ् झि=भू च्लि अन्ति=भू सिच् अन् ( by इतश्च and संयोगान्तलोपः )=अट् ( 'लुङ्लङ्—' etc. ) भू अन ( by 'गातिस्था, etc. सिच् disappears )=अभू अन्=अभूव् अन् ( भुवोवुक् लुङ्लिटोः )=अभूवन्। अभूः—भू सिच् सिप्=अट् भू+स=अभूस्। अभूतम् अट् भू सिच् थस्=अभु+तम्। अभूत=अट् भू सिच् थ=अभूत। अभूवम्—अट् भू सिच् मिप्=अ भू+अम्=अ भू ( वुक् ) अम्=अभूव् अम् ( Note that वुक् comes in only when it precedes an अच्—vowel ) अभूव=अट् भू सिच् वस् अभूव ( स elides by नित्यं ङितः ) ; similarly अभूम।

मित—। आत इति तदन्तग्रहणम् (येन विधिस्तदन्तस्येतिन्यायात्) ; तद् व्याचष्टे सिज्लुकि—इत्यादिना—यदा सिच् लुप्यते तदा आकारान्तादेव धातोर्नेलन्यस्येत्यादर्थः। अभूवन् इति। च्लेः सिचि, सिचो लोपे 'झेरन्तादेशे' संयोगान्तस्य—तकारस्य लोपे 'अन्' इति जाते, अडागमे, 'भुवोवुक्' इति वुगागमे च अभूवन् इति। एवमन्यत्रापि। तत्र—यत्र यत्र अजादिप्रत्ययः परतो भवति तत्र तत्रैव वुगागम इति द्रष्टव्यम्।

## २२२८। न माङ्योगे ॥६।४।७४॥

**अडाटौ न स्तः। मा भवान् भूत्। मास्म भवत्। भूद्।**

The augments अट् and आट् are not enjoined to a root when it is connected with ( or preceded by ) मा and माङ्। Thus मा भवान् etc. In मास्म etc. भवान् is understood.

मित—। लुङ्लङ्लृङ् क्ष्वडुदात्त इति अट् प्राप्तः 'आडजादीनामिति आट् च। ताभ्यां सूत्रस्य शेषं पूरयति—अडाटौ नेति। मास्म भवत् इत्यत्र उभयत्र भवान् इति कर्तृपदमूह्यम्। भवत् इति 'स्मोत्तरे लङ् च' इति लङ्। इति लुङ् प्रक्रिया।

२२२६। लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥३।३।१३६॥

**दी—। हेतुहेतुमद्-भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम्। अभविष्यत्। अभविष्यताम्। अभविष्यन्। अभविष्यः। अभविष्यतम्। अभविष्यत। अभविष्यम्। अभविष्याव। अभविष्याम।**

The निमित्त (condition) of लिङ् is हेतुभाव ( cause) and हेतुमद्भावः ( effect ) i. e. लिङ् is used to express cause and effect and this is the condition of लिङ्। तत्र i.e. in that sense of cause & effect, लृङ् is used in the future tense when there is indecision or non-settlement ( अनिष्पत्ति ) of action inplied in the sentence. As for instance वृष्टिश्चेदभविष्यत् सुभिक्षमभविष्यत् also कृष्णं नमेच्चेत् सुखं यायात्। Here the first half of each sentence expresses the cause ( हेतु ) and the last half the effect ( हेतुमत् = फल ) for सुभिक्षत्व and सुखप्राप्ति result from वृष्टि ( rain ) and कृष्णनमनम् ( bowing to Krishna ), अभविष्यत्—भू लृङ् तिप् = भू (स्यतासी लृलुटोः ) त् ( इतश्च )=भू इट् ( आर्द्धधातुकस्येड्वलादेः ) स्य त् = अट् ( लुङ्लङ्लृङ्क्ष्वडुदात्तः ) भूइ स्य—त्=अभो ( सार्व्वधातुकोयः ) इ त्=अभव् इ स्यत् अभविष्यत् ( इणकोः, आदेशप्रत्यययोः )। Thus अभविष्यताम् etc.

मित—। 'हेतुहेतुमतोर्लिङ्' ( २८१२—३।३।१५६ ) इत्यतोहेतुहेतुमदित्यनुवर्त्तते। तदाह हेतुहेतुमद भावादीति। 'भविष्यति मर्य्यादावचने' ( २७९४—३।३।१३६) इत्यतोभविष्यतीति च तदाह—भविष्यत्यर्थे इति। क्रियाविपत्तौ (क्रियायाः अतिपत्तिः तस्याम् ) इत्यत्र अतिपत्तिरित्यस्य अनिष्पत्तिरित्यर्थ-स्तदाह अनिष्पत्तौ गम्यमानायामिति। हेतुश्च हेतुमांश्च हेतुहेतुमन्तौ ( द्वन्द्वः ) तयोर्भावः स आदिर्यस्येति विग्रहः। हेतुहेतुमद्भावो यथा कृष्णं नमेच्चेत् सुखं यायात् एवं वृष्टिश्चेदभविष्यत् सुभिक्षमभविष्य-

दिति। तत्र कृष्णनमनं सुखप्राप्तेः, वृष्टिभवनं च सुभिक्षत्वस्य हेतुः। सुखप्राप्तिः सुभिक्षत्वञ्च हेतुमत् (यस्य हेतुर्विद्यते तत् हेतुमत्—फलमित्यर्थः)। क्रियाया अनिष्पत्तिश्च उभयत्रैव स्पष्टा। अभविष्यत् इति भू लृङ् तिप् इति स्थिते स्यतासी लृलुटोरिति लृङः स्यादेशे भू स्यत् इति सम्पद्यमाने स्य इत्यस्यार्द्धधातुकत्वात् वलादित्वाच्च इति प्राप्ते भू इट्स्य त् इति भवति। ततः सार्व्वधातुकार्द्धधातुकयोरिति गुणे अवादेशे अडागमे 'इण्कोः' 'आदेशप्रत्यययो'रिति षत्वे च अभविष्यत् इति सिध्यति। अभविष्यताम्—भू स्य तस् इति स्थिते इडागमे, गुणे, अवादेशे, तसस्तामादेशे, अड़ागमे च अभविष्यताम् इति। एवमन्यत्रापूह्यम्। ग्रन्थगौरवभिया च नात्र प्रदर्शितमिति बालमनोरमादौ अनुसन्धेयमिति। इति लृङ् प्रक्रिया। इदानीं प्रसङ्गादुपसर्गनिमित्तकं णत्वषत्वं व्यवस्थापयति—

**२२३०। ते प्राग्धातोः ॥१।४।८०॥**

**टी—। ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्याः।**

The indeclinable particles, designated as गति and उपसर्ग, must be used before a root (and not after or in the middle).

मित—। 'उपसर्गाः क्रियायोगे' (२२—१।४।५९) इति 'गतिश्च' (२७—१।४।६०) इति चास्मात् पूर्व्ववर्त्ति सूत्रद्वयम्। अतोऽत्र 'ते' पदेन 'गत्युपसर्गसंज्ञका' सम्बद्ध्यन्ते। अत आह—ते इत्यादि। प्रागेवेति—न परतो नापि मध्ये इत्यर्थः।

**२२३१। आनि लोट् ॥८।४।१६॥**

**टी—। उपसर्गस्थान्निमित्तात् परस्य लोडादेशस्यानीत्यस्य नस्य णत्वं स्यात्। प्रभवाणि।**

**"दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः" (वार्त्तिक)— दुःस्थितिः। दुर्भवानि।**

**"अन्तः शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्" (वार्त्तिक)—अन्तर्धा। अन्तर्धिः। अन्तर्भवाणि।**

णत्व is enjoined to the न of आनि, substituted for लोट् ( उत्तम singular), when it (आनि) comes after an उपसर्ग in which exists the reason (निमित्त of णत्व i.e. र and ष). Thus प्रभवाणि ( here र lies in प्र and we get णत्व of आनि)। It should be said that 'दुर्' ceases to be an उपसर्ग (lit. उपसर्गसंज्ञा is prohibited of दुर्) in respect of षत्व and णत्व i. e. the र् ( रेफ ) of दुर् is not to be considered as the cause of षत्व or णत्व of a word which it ( दुर् ) precedes. As for example दुःस्थिति। Here 'षत्व' directed by the rule 'उपसर्गात् सुनोति etc. ( 2270 ) is barred ; दुर्भवानि here णत्व is prohibited.

It should be asserted that the word अन्तर् becomes an उपसर्ग in respect of अङ्विधि, किविधि and णत्व। The word अन्तर् is not included in the list of the उपसर्ग—प्र etc. Hence उपसर्गत्व is enjoined here. अन्तर्धा—अन्तर् + धा + अङ्, then टाप् स्त्रियाम्। अन्तर्धि—अन्तर्—धा + कि। अन्तर्भवाणि—अन्तर्—भू + आनि ( लोट ) here णत्व comes in by 'आनि लोट्'—

मित—। रषाभ्यां नो णः समानपदे' (२३५—८।४।१) इत्यतो 'नो णः' इत्यनुवर्तते। 'उपसर्गादसमासेऽपि णोपदेशस्य' ( २२८७—८।४।१४ ) इत्यत उपसर्गादिति च। तदाह—उपसर्गस्थादित्यादि—रकार षकारात्मकादित्यर्थः। आनीति लोडिति च लुप्तषष्ठीकम्; तदाह लोडादेशस्येति। 'दुरःषत्वे'त्यादिवार्त्तिकम्। दुर् इति उपसर्गः प्रपरादिषु पठितः। अतः गणसामान्यलिङ्गादुपसर्गत्वे प्राप्ते वचनम्। षत्वणत्वविषये दुर् इत्युपसर्गो न भवतीति कथयितव्यमित्यर्थः। तथा च 'दुःस्थिति' इत्यत्र 'उपसर्गात् सुनोतीति' सकारस्यषकारः 'दुर्भवानि' इत्यत्र च 'आनि लोट इति नकारस्य णकारो—यथा न स्यात्॥ 'अन्तः' इत्येतदपि वार्त्तिकम्। पूर्वत्र दुरः उपसर्गत्वं प्रतिषिद्धमत्र तु अन्तःशब्दस्य उपसर्गत्वं विधीयते। अन्तर् इति प्रपरादिगणे न पठितम्। दृश्यते चास्य उपसर्गत्वप्रयुक्तकार्यम्। तेने व्यवस्था। अयमर्थः—अङ्विधौ, किविधौ, णत्व

विषये चेति। विधाविति प्रत्यये इत्यर्थः, अन्तर्धाः इत्यङ् विधि अन्तर—धा+(आतश्चोपसर्गे इति) अङ् ततष्टाप्। अन्तर्धिः इति किविधि अन्तर्—धा+(उपसर्गे घोः किरिति) किः। अन्तर्भवाणि इति णत्वम् अन्तर—भू+आनि (आनि लोट इति)।

२२३२। शेषे विभाषाऽकखादावषान्त उपदेशे ॥८।४।१८॥

टी—। उपदेशे कादिखादिषान्तवर्ज्जे गदनदादेरन्यस्मिन् धातौ परे उपसर्गस्थान्निमित्तात् परस्य नेर्नस्य णत्वं वा स्यात्। प्रणिभवति—प्रनिभवति। इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या, तदुक्तम्।

'संहितैकपदे नित्या नित्या धातूपसर्गयोः,

नित्या समासे वाक्ये तु सा विवक्षामपेक्षते।'

इति। सत्ताद्यर्थनिर्देशश्चोपलक्षणम्। यागात्सर्गो भवतीत्यादावुत्पद्यत इत्याद्यर्थात्। उपसर्गास्त्वर्थविशेषस्य द्योतकाः। प्रभवति। पराभवति। सम्भवति। अनुभवति। अभिभवति। उद्भवति। परिभवतीत्यादौ विलक्षणार्थावगतेः। उक्तं च—

'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।

प्रहाराहारसंहारविहारपरिहारवत् ॥' इति।

In उपदेश, when such roots as are not included in the rule गदनद etc. and as neither begin with क and ख nor end in ष, णत्व is optionally enjoined to the न of the particle नि coming after an उपसर्ग containing the cause or condition of णत्व। Thus प्रणि etc. Here though the उपसर्गs are not compounded, yet the conjunction (सन्धि) is compulsory (नित्यं)। So it is said (by Bhartrihari)—

'Conjunction is compulsory in a single पद ( as वागर्थाविव=नित्य-समास ), in a root and an उपसर्ग and in a compound but in a sentence it depends upon the intention ( of the speaker ).'

And pointing out the sense of 'existence' etc. ( in भू सत्तायाम् to be ) is but an उपलक्षण ( general sign i.e. the general meaning) for in sentences like यागात् स्वर्गो भवति, the root भू means to issue ( उत्पद्यते ) । उपसर्गs signify (helps to bring out) a particular sense. Thus प्रभवति etc. where प्र denotes influence परा denotes defeat etc. सम् denotes possibility etc. अनु signifies feeling etc. अति singnifies to overpower etc. उद् implies to issue from etc. where as परि implies turmoil or to vanquish etc. In this way we come to learn that each उपसर्ग implies or helps to bring out a particular sense of भू etc. And it is also said (by Bhartrihari) :—

'By an उपसर्ग, the sense of a root is forcibly led to else where ( i.e. the root is caused to indicate a special sense ) like प्रहार etc. The significations are easy to be explained.

Here ends the भूधातु and also The परस्मैपद प्रक्रिया ।

मित— । अथ सन्धिविच्छेदः—विभाषा + अकखादौ + अषान्ते + उपदेशे इति । 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च' इत्यत्र ( २२८५—८।४।१७ ) ये धातव उक्ता तेभ्योऽन्यः शेषः ; तस्मिन् परे इति ; तदाह—गदनदादेरन्यस्मिन्निति । अकखादौ अषान्ते, इत्यनयोर्विवरणम्—कादि-खादिषान्तवर्जे इति । कश्चखश्च कखौ (द्वन्द्वः) तौ आदी यस्येति ( बहुव्रीहिः ) न तथा इति अकखादिः (नञ्तत्) तादृशि धातौ परे इत्यर्थः । अषान्ते इति षकारः अन्तः यस्य अन्ते यस्य स षान्तः न तथा अषान्तः तादृशि च धातौ परे । उपसर्गस्थात् निमित्तादि-त्यत्र पूर्ववदर्थोऽवगन्तव्यः । नेरिति—नेर्गदनदेत्यतोऽनुवर्त्तते । ननु णत्वप्रकरणं संहिता-धिकारे वर्त्तते । तस्मात् यदा संहिताविवक्षा तदैव णत्वमन्यथा तु नेति किमत्र 'विभाषा'—

ग्रहणेन इति चेत्—अत्र वदन्ति—इह असमस्तत्वेऽपि धातूपसर्गयोः परस्परं समासा-भावेऽपि संहिता कार्य्येति भावः ।

तत्र अभियुक्तोक्तिं प्रमाणत्वेनाक्षिपति—तत् (तस्मात्) उक्तम् इति ( भर्तृहरिणे-त्यर्थः )। अत्र एकपदे इत्यनेन 'अखण्डं पदं विवक्षितम् । अखण्डत्वञ्च पदभिन्नोत्तर-खण्डत्वम् तथा राजीयतीत्यादौ अतोगुणे इति शपा पररूप एकादेशः पक्षे न स्यादिति बालमनोरमा । विवक्षामिति वक्तुरभिप्रायमित्यर्थः । अपेक्षते आश्रयति । तथा च वाक्यस्था संहिता ( सन्धिः ) प्रयोगकर्त्तुः ( वक्तुः ) इच्छाधीनेति फलितम् ।

भू सत्तायामित्येवंरूपोऽर्थनिर्द्देशः उपलक्षणम् सामान्यलक्षणम्—सामान्येन अर्थ-प्रकाशनमात्रमित्यर्थः न त्वयमेक एव भूधातोरर्थ इति विवक्षितम् । तत्र हेतुमुपन्यस्यति—यागादिति । नन्वत्र भवतीत्यनेन स्वर्गपदस्य सत्ताविवक्ष्यते इत्यर्थः किन्तु उत्पद्यते लभ्यते इत्येवमेवार्थः । ननु भवतेः सर्व्वत्र सत्तैवार्थः अत्र तु लक्षणया उत्पद्यते इति—इतिचेत् ? न । नहि धातुपाठे भगवता पाणिनिना सर्व्वेषां धातूनामर्था विशिष्य प्रोक्ता, असम्भ-वात्, उक्तञ्च—'अनेकार्था हि धातवः' इति । 'अनेकार्था अपि धातवो भवन्ति' इति भाष्यमप्यत्र मानमितिदिक् । ननु यदि धातव सर्व्वान् अर्थान् अभिदधति तर्हि प्रभव-तीत्यादौ प्राद्युपसर्गा व्यर्था अत आह—उपसर्गा इति । उपसर्गास्तावन्नापि व्यर्था नापि तत्तदर्थविशेषस्य वाचकाः किन्तु द्योतकाः साहायका एवेत्यर्थः । उदाहरति—प्रभवतीत्यादि विलक्षणार्थावगतेरितिविशिष्टार्थस्यलाभादित्यर्थः । तथाच—प्रेत्यस्य प्रकाशशक्त्यादि-द्योतकत्वम्, परेत्यस्य पराभवादिविपरीतार्थप्रकाशकत्वम् ; एवमनुभवतिसम्भवतीत्यादवपि यथायथं बोध्यम् । अत्रापि—हरिप्रोक्तमेव प्रमाणत्वेन निर्द्दिशति उपसर्गेणेति ।

बलादिति प्रसह्येत्यर्थः । अन्यत्रेति अन्यस्मिन् अर्थे इत्यर्थः । 'बलादन्यः प्रतीयते' इति पाठभेदोऽपिदृश्यते । अर्थभेदस्तु नास्त्येव । प्रहारेत्यादौ—अर्थः सुगमः स्वच्छः इति ।

इति भूधातुप्रक्रिया सामन्येन—भ्वादीनां परस्मैपदप्रक्रिया च कथिता ।

---

# अथ भ्वादौ आत्मनेपदप्रक्रिया।

'एध वृद्धौ'। कथ्यान्ताः षट्त्रिंशदनुदात्तेतः।

The root एध means to increase. Here are (collected) thirty-six अनुदात्तेत् roots ( those that leave their low pitch ) ending in कथ्।

## २२३३। टित आत्मनेपदानां टेरे ॥३।४।७९॥

टी—। टितो लस्य आत्मनेपदानां टेरेत्वं स्यात्। एधते।

एत्व i.e. एकार is enjoined to the टि ( अचोऽन्त्यादि टि—79 ) of the आत्मनेपद substitutes i.e. to the verbal affixes of such लकारs as drop their टs (as लट्, लोट् etc.). Thus एध्+लट्=एध् शप् ते (here the अ of त ( त्+अ ) is regarded as टि by व्यपदेशिवद्भाव cp.— एकाचो द्वे प्रथमस्य 2175। एध्+अते=एधते।

मित—। टितः+आत्मनेपदानाम्+टेः+ए इति च्छेदः। 'लस्य'( २१५३— ३।४।७७ ) इत्यधिकारसूत्रम्। टित इति विशेषणम्। तदाह—टितो लस्येति। यस्य यस्य लकारस्य टकारः इत् भवति तस्य तस्य आत्मनेपदानां विभक्तीनाम् त आताम्—झादीनाम् टिभागस्य (अचोऽन्त्यादि टि—७९) एकारत्वं भवति। यथा एध् शप् त=एध् अ त=एध् त इति स्थिते 'व्यपदेशिवदेकस्मिन्' इति परिभाषया एकस्मिन् तकारे अकारस्य टित्वं कल्प्यम् एकवत्विन्यायात् ( 'एकाचो द्वे प्रथमस्य' इत्यत्र एतत् प्रपञ्चितमिति तत्रैव द्रष्टव्यम् ); तेन तकारादकारस्य एत्वं सति एध ते=एधते इति लभ्यते। ननु तङानावात्मनेपदम् (२१५६—१।४।१००) इति आत्मनेपदशब्देन आन इत्यपि गृह्यते। आनस्य शानच्कानचोः संज्ञा तथाचैवं शानचप्रत्ययान्ता यजमानसेवमानादयो न सेत्स्यन्ति तत्रापिटेरेत्वादिति चेदत्राहुः। 'आत्मनेपदेनात्र प्रकृताः तङ एव (तातां झ...इट्वहिमहिङ्) गृह्यन्ते तेन आनस्य (ग्रहणं) नेति भाष्ये स्पष्टमिति' इति शब्देन्दुशेखरकाराः। एवञ्च टितस्तङां टेरे इत्येव वक्तुमुचितमिति तत्त्वबोधिनीकाराः। एधधातुरकर्म्मकः। तत्रायं संग्रहश्लोकः—

"वृद्धिक्षयभयजीवितमरणं लज्जासत्तास्थितिजागरणम्।
शयनक्रीड़ारुचिदीप्त्यर्थं धातुगणं तमकर्म्मकमाहुः" ॥—शब्देन्दुशेखरः।

## २२३४। सार्व्वधातुकमपित् ॥१।२।४॥

### दी—। अपित्सार्व्वधातुकं ङिद्वत् स्यात्।

A सार्व्वधातुक affix, which is not a पित् i.e. which has no प् for its indicatory ( अनुबन्ध ), is to be treated as ङित् ( an affix which has ङ् for its indicatory ). In other words an अपित् सार्व्वधातुक is अगुणी।

मित—। 'गाङ्कुटादिभ्योऽञ्णित्ङित्' ( २४६१—१।२।१ ) इत्यतोऽनुवृत्तिलभ्यं ङितं सूत्रानुकूलं विधाय व्याचष्टे ङिद्वत् इति। ये ये सार्व्वधातुकाः पितो ( पकारलोपिनो ) न भवन्ति ते ते ङिद्वत् (गुणवृद्धिरहिता इत्यर्थः)। तिप्, सिप्, मिप्, तुप्, आनिप्, आवप्, आमप्, ऐप, आवहैप्, आमहैप्; लङः—तप्, सप्, अमप्। शप्। एतद्व्यतिरिक्ताः सर्व्वे सार्व्वधातुकप्रत्ययाः तस् झि—इत्यादयः ङिद्वत् भवन्ति इति विवेकः।

## २२३५। आतो ङितः ॥७।२।८१॥

### दी—। अतः परस्य ङितामाकारस्य इय् स्यात्। एधेते। एधन्ते।

इय् is substituted for the आ ( in आत्मनेपद ) of the ङित् affixes ( आताम्, आथाम् ) coming after an अ। Thus एध् + शप् + आताम् = एध् + अ + इय्ताम् = एध + इय्ताम् = एध् इय्ते—here ए replaces आम् ( by—2233 ). एधेय्ते (by आद्गुणः) = एधेते ( य् elides by लोपोव्योर्वलि। एध् + झ = एध + अन्त ( by झोऽन्तः—२१६९ ) = एध + अन्ते ( २२३३ ) = एधन्ते ( by अतो गुणे—१९१ )।

मित—। अतो येय: ( २२१२—७।२।८० ) इत्यतो'ऽतः' इति 'इय्' इति चानुवर्त्तते ( अतः इति पञ्चम्यन्तम् इय् इति लुप्त प्रथमाकम् )। ङित इति अवयवषष्ठी। तदाह—अत: परस्य इत्यादि। पूर्व्वसूत्रात् 'आतां' 'आते इत्यादयो ङित:। तेन: एध् शप् आताम् इति स्थिते तत: २२३३ सूत्रेण एध् अ आते इतिजाते एतेन सूत्रेण एध इय्ते इति भवति। पश्चात् आद्गुणे, य—लोपे च एधेते इति। एधन्ते इति आङ्लव्याख्यायाम् द्रष्टव्यम्।

## २२३६। थास: से ॥३।४।८०॥

**दो—। टितो लस्य थास: से स्यात्। एधसे। एधेथे एधध्वे। 'अतोगुणे' ( १९१ )—एधे। एधावहे। एधामहे।**

से is the substitute of थास् of a ल (लकार as लट् etc.) that drop its ट्। Thus—एध् शप्+थास् =एध् +से =एधसे। एध+आथाम् =एध इय+थे = एधेय्थे—एधेथे (here आ is replaced by इय् and आम—is replaced by ए 'by टित आत्मनेपदानां टेरे' ); similarly अम् of ध्वम् is replaced by ए whence we get एधध्वे। एध + इट् (इ)=एध+ए ( 2233 ). Now by the rule 'अतो गुणे ( 191 ) we get एधे। एधावहे एधामहे—Here दीर्घ comes in by the rule—अतो दीर्घो यञि ; and वहि, महिङ are changed into वहे महे by 'टित आत्मने—'।

मित—सूत्रमिदं टित आत्मनेपदानां टेरे इत्यस्याव्यवहितपरवर्त्ति, तदाह—टितो लेस्यत्यादि। एधसे इत्यादि—शपि थासः से आदेशे च सति रूपम्। एधेथे—शपि, आथाम: आकारस्य इयादेशे, आद्गुणे, यलोपे, थाम: 'आम्' इत्यंशस्य 'टित आत्म'—इति एकारादेशे च रूपम्। एधध्वे इत्यादीनामपि अयं क्रम:। एधे इत्यत्र विशेषमाह 'अतोगुणे' इति एध इति स्थिते एले एध ए इति जाते 'अतोगुणे इति पररूपे एधे इति लभ्यते। एधावहे इत्यादौ 'अतोदीर्घ—' इति दीर्घ:। अथ एधधातो-र्लिट—प्रक्रिया आरभ्यते।

२२३७ । इजादेश्च गुरुमतोऽनृच्छः ॥३।१।३६॥

दी— । इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि । 'आमो मकारस्य नेत्त्वम्' । आसृकासोराम्बिधानाज्ज्ञापकात् ।

In लिट्, आम् is enjoined to a root of which the first letter is one of the इच् प्रत्याहार ( इ उ ऋ ऌ ए ऐ ओ औ ) and a long one ( as ई ऊ etc. ) and which is other than ऋच्छ् । In other words when a root begins with a long vowel except आ it gets आम् attached to it in लिट—but ऋच्छ, though it satisfies this condition, will not get आम् । The म् of आम् does not elide ; for we have a ज्ञापक ( inference ) in the आम्विधान ( enjoining of आम् ) to आस् and कास् । The drift of the saying is this—आम् is enjoined in लिट, to the roots आस् and कास् by the rules 'कास् प्रत्ययादाममन्त्रे लिटि' (2606—3.1.35) and 'दयायासश्च' ( 2324—3.1.37 ). Then had मकार of आम् been मित्, it ( आम् ) would have been attached after the final आकार of कास् by 'मिदचोऽन्त्यात्परः' । Then by 'अकः सवर्णे दीर्घः' we would have का आम्स् । Hence the same thing would have been repeated and the object of enjoining आम् would have failed. Thus it is expressed that आम् is not मित् or म् eliding.

मित— । अथ सन्धिविच्छेदः—( इच् + आदिः—समास ) + च गुरुमतः+( न + ऋच्छः—समास ) इति । 'कास्प्रत्ययादाममन्त्रे लिटि' इत्यतः ( २३०६—३।१।३५ ) आम् इति 'लिटि' इति चानुवर्त्तते । तदाह—इजादिरिति । इच् इति प्रत्याहारः अकाराकारौ विहाय सर्वान् स्वरवर्णानृगृह्णाति । इच् आदिः ( आदिस्थितः ) यस्य

सः (बहुव्रीहिः)। गुरु+अत्यर्थे मतुप्=गुरुमान्। इजादिर्गुरुमांश्च योधातुर्भवति तस्मादुत्तरं लिटि आम् प्रत्ययः स्यात्—किन्तु 'ऋच्छ' धातुर्यद्यपि इजादिगुरुमान् च भवति तथापि तस्मादाम् न स्यात्। इजादिर्गुरुमानित्यनेन—ई, ऊ, ए, ऐ, ओ औ—कारादय एवादिवर्णत्वेन गृहीताः। ईहांचक्रे ईक्षाञ्चक्रे 'उषाञ्चकार कामाग्निर्दशवक्त्रमहर्निशम्' (भट्टिः) इत्यादयश्च उदाहरणानि। आम् इति मित् भवति नवेत्यवाह—आमो मकारस्य नेत्त्वमिति=अस्य मकारो न लुप्यते इत्यर्थः। तत्र ज्ञापकन्यायमूलंहेतुमाह आस्कासोरिति। अयमर्थः—कास्प्रत्ययादाममन्त्रे लिटि' इति कास्धातोः, 'दयायास' श्चेति (२३२४—३।१।३७) आस् धातोश्च उत्तरं लिटि आम्प्रत्ययोविहितः। तत् यदि आम् इति मिदभविष्यत् तदा 'मिदचोऽन्त्यात्परः' इति परिभाषया अयं (आम्-प्रत्ययः) कास्धातोरासधातोश्च अन्त्यादचः आकारात् परोऽभविष्यत्। का आम् स् इति आ आम् स् इति च स्थिते मित्वान्मलोपे—का आ स् इमि आ आ स् इति च जाते अकः सवर्णे दीर्घ इति सूत्रेण सवर्णदीर्घे कास् आस् इत्येवाभविष्यत् ततः पुनरामविधानं व्यर्थं स्यात्। तस्मादस्माभिरेतज् ज्ञायते यदामो मकारस्य नेत्त्वमिति। मतान्तराय अस्माकं लघुकौमुदीव्याख्या द्रष्टव्या। गुरुमान् किम्? इषधातोर्लिटि इयेष। ऋच्छ्स्तु आनर्च्छ इति। एवञ्च एध् आम् लिट् इत्यत्र एध् आम-लि इति स्थिते।

## २२३८—। आमः ॥२।४।८१॥

### दी—। आमः परस्य ले (?) लुक् स्यात्।

लि elides coming after आम्।

मित—। 'मन्त्रे घसह्वरणेत्यादि' (३४०२—२।४।८०)—तः लेरिति 'णयचवियार्षंत्रित' (१२७६—२।४।५८) इत्यतो लुगितिचानुवर्त्तते तदाह—लेर्लुगिति। लिरिति ल्लिरित्यस्य प्राचां संज्ञा। अत्र तु लिडेव ग्राह्यः। अत्र ल्लेरभावात् तत्त्वबोधिन्यां 'आमः परस्य लुक् स्यादित्येव वृत्तिं दृश्यते उक्तञ्च तत्रैव लिरितीह नानु वर्त्तनीयमिति। एवञ्च लेर्लोपे एधाम् इति स्थिते अनन्तरसूत्रमाह—

## २२३९। कृञ्चानुप्रयुज्यते लिटि ॥३।१।४०॥

दी—। आमन्ताल्लिट्परा: कृभ्वस्तयोऽनुप्रयुज्यन्ते। 'आम्-प्रत्ययवत् कृञोऽनुप्रयोगस्य' (२२४०) इति सूत्रे कृञ्ग्रहण-सामर्थ्यात् अनुप्रयोगोऽन्यस्यापीति ज्ञायते। तेन 'कृभ्वस्ति-योगे' (२१२७) इत्यत: 'कृञो द्वितीय' (२१२६) इति ञका-रेण प्रत्याहाराश्रयणात् कृभ्वस्तिलाभ:। तेषां क्रियासामान्य-वाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वय: सम्प-दिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्रयुज्यते। कृञस्तु क्रियाफले परगामिनि परस्मैपदे प्राप्ते।

(Invariably) after a root, ending in (the affix) आम् are placed or used the roots कृ, भू and अस्, all followed by लिट् (affixes) :—In other words, the लिट् forms of the roots कृ, भू and अस् (as चकार-चक्रे, बभूव-बभूवे, आस-आसे etc.) are used invariably after those roots that are आमन्त, i.e. to which आम् has been attached. It is understood, on the authority of enlisting the root कृञ् (डुकृञ् करणे) in the aphorism 'आमप्रत्ययवत् &c. (2240—1.3-63), that the अनुप्रयोग (subsequent attaching) is allowed to other roots also. [ When you say give me the 'Bombay mango' (बोम्बाइ आम) then your pronouncing the word 'Bombay' leads us to think that there are varieties of mangoes ; otherwise had there been only one mango you must have had said 'give me the mango ; similarly अनुप्रयोग is surely sanctioned to other roots also otherwise Panini would not have pronounced the word कृञ in the rule आम्प्रत्ययवत् etc. and would have said

'आमप्रत्ययवदनुप्रयोगस्य' and not आमप्रत्ययवत्कृञोऽनुप्रयोगस्य—This is the authority or significance of the word कृञ् in the rule. ] Hence we get कृ भू and अस् by forming a प्रत्याहार—( प्रत्याहाराश्रयणात् ) beginning from the rule 'कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः' ( 2117—5.4.50 ) and ending in the rule 'कृञो द्वितीय तृतीयशम्बवीजात् कृषौ' ( 2129 —5.4.58 ). [ Note that in Panini's order 'कृभ्वस्ति etc. is the 50th. sutra and 'कृञो द्वितीय etc. is the 58th. sutra. Here we are quoting below the rules in the order of Panini—

( 50 ) कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः ( 2117 ) 5.4.50.

( 51 ) अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।

( 52 ) विभाषा साति कार्त्स्न्ये ।

( 53 ) अभिविधौ सम्पदा च । (2124—5.4.53 ).

( 54 ) तदधीनवचने ( 2125 )

( 55 ) देये त्रा च । ( 2126 ).

( 56 ) देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ( 2127 ).

( 57 ) अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् । ( 2128 ).

( 58 ) कृञो द्वितीयतृतीयशम्बवीजात् कृषौ ( २१२९ ) 5.4.58.

Thus it is evident from the rules above that the 'कृ' of 'कृभ्वस्ति' in the 50th. rule and the 'ञः' of 'कृञः' in the 58th rule form the प्रत्याहार। This sort of forming a प्रत्याहार is openly sanctioned by Patanjali himself in his महाभाष्य—which see under this rule ].

कृ भू and अस् being क्रियासामान्यवाची ( expressing verbs in general ) and आम्प्रकृति roots ( i.e. roots ending in आम् ) being क्रियाविशेषवाची ( expressing a particular verb ), there is no

distinction in relation between them. But the root सम्पद्, though it lies within the प्रत्याहार, is not made use of ( after the आमन्त roots )—its sense having no relation with that of those (आमन्त) roots. The meaning of (तेषाम् क्रिया......प्रयुज्यते)—is this :—

The roots कृ, भू and अस् signify more additional senses than what they have got for their own viz डुकृञ् 'करणे,' भू 'सत्तायाम्' etc. * may also be expressed as स्नानं करोति, भोजनं करोति etc. But the root सम्-पद् has got nothing more in addition to what is assigned to it. Thus कृ भू and अस् are general and सम्पद् is special. And, as a rule, a relation exists between the genus and the species and not between two different species. Here भू, अस् and कृ are general and एधाम् is special, thence the former roots are identified with the latter one for they can express any senses ( क्रियासामान्यवाची ) as in एधाञ्चक्रे ( increased ), कृ expresses the sense of एध। But as the root सम्-पद् cannot so expess, itself being special, it is not used after आमप्रकृतिक roots.

Now परस्मैपद being due to the root डुकृञ्—only when the fruit of the action rests upon ( by the rule स्वरितञित—2158 ) one other than the agent, we look forward :—

मित—। कृञ् ( डुकृञ् करणे ) + च = कृञ्च। 'कास्प्रत्ययादाममन्त्रे लिटि' ( २३०६—३।१।३५ ) इत्यत आमित्यनुवर्त्तते। स च 'येनविधिस्तदन्तस्ये' ति तदन्तत्वेन गृह्यते। ततः प्रयोजनवशात् पञ्चम्यां विपरिणम्याह आमन्तात् इति। लिटि इत्यस्य विवरणम्—लिट्परा इति—लिट् कृम्वस्तय इति अर्थः। ननु सूत्रे कृञ् एव दृश्यते

* Hence they are general verbs—as स्नाति, भुङ्क्ते etc.

तद् भूधातोरस् धातोश्च कृतोग्रहणमिति चेत् तत्राह—आम्प्रत्ययवदिति। 'आम्प्रत्यय-वत् कृञोऽनुप्रयोगस्य (२२४०) इति सूत्रे कृञोऽपि आत्मनेपदं स्यादित्युक्तम्। यदि केवलम् कृञ एकस्यैव अनुप्रयोगः स्यात् तर्हि आम्प्रत्ययसूत्रे कृञ् ग्रहणं व्यर्थं भवेत्। यतः 'आम्प्रत्ययवदनुप्रयोगस्य' इत्युक्ते लघुना आयासेन कार्य्यसिद्धिः स्यात् 'आमप्रत्ययवत्' इत्यस्य उच्चारणमात्रेणैव कृञ् आक्षिपेत धात्वन्तरस्य अनुप्रयोगा-भावात्। धेनुं चारय इत्युक्ते गम्यते एकैवास्य धेनुरिति किन्तु कृष्णां चारय इत्युक्ते गम्यते यत् वर्णान्तरोपलक्षिताः सन्त्यस्य गाव इति। एवमत्रापि कृञ् ग्रहणेनैव अनुप्रयो-गोऽन्यास्यापीति लभ्यते। एतदेव च कृञ्ग्रहणस्य सामर्थ्यम्—शक्तिः। तेन भुवोरस्तेश्च ग्रहणमिति भावः। उक्तञ्च—"सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्" (भाष्यकाराः)। ननु कथंकारं सामर्थ्यमित्यपेक्षायामाह—तेनेति। 'कृभ्वस्ति-योगे-सम्पद्यकर्त्तरि च्विः' (२२४०) इत्यतः 'कृ' इत्यारभ्य—'कृञो द्वितीय-तृतीय-शम्बबीजात् कृषौ' (२११७) इति सूत्रस्थस्य—कृञः ञकारेण 'कृञ्' इति प्रत्याहारः आश्रीयते='क्रियते'। तेन च करोतेः, भुवः, अस्तेश्च ग्रहणं भवति। एष च भाष्य-संवादः—तथा च भाष्यम्:—

"कृञ्चानुप्रयुज्यते लिटि (सू)। किमर्थमिदमुच्यते। अनुप्रयोगो यथा स्यात्। नैतदस्ति प्रयोजनम्। आमन्तमव्यक्तपदार्थकम् (अव्ययमित्यर्थः), तेनापरिसमाप्तोऽर्थ इति कृत्वानुप्रयोगो भविष्यति। अत उत्तरं पठति—'कृञोऽनुप्रयोगवचनमस्तिभुवोः प्रतिषेधार्थम्' (वार्त्तिकम्)। कृञोऽनुप्रयोगवचनं क्रियते। अस्तिभुवोरनुप्रयोगो मा भूदिति। आत्मनेपदविध्यर्थं वा। आत्मनेपदविध्यर्थं च (वा ?)—कृञोऽनुप्रयोगवचनं क्रियते, आत्मनेपदम् यथा स्यात्। उच्यमानेऽप्येतस्मिन् अवश्यमात्मनेपदार्थं यत्नः कर्त्तव्यः। अस्ति-भू-प्रतिषेधेनापि तावन्नार्थः (न प्रयोजनमित्यर्थः)। इष्टः सर्व्वानु-प्रयोगः (वार्त्तिक ?)—सर्व्वेषामेव कृभ्वस्तीनामनुप्रयोग इष्यते। किमिष्यते एव आहो-स्वित् प्राप्नोत्यपि। इष्यते च प्राप्नोत्यपि। कथम्। कृञ् इति नेदं धातुग्रहणम्। किं तर्हि। प्रत्याहारग्रहणम्। कृ सन्निविष्टानां प्रत्याहारः। 'कृभ्वस्तियोगे' इत्यतः प्रभृत्याकृञो ('कृञोद्वितीय'—सूत्रस्य) ञकारात्।"

ननु भवतु कृञग्रहणसामर्थ्यात् कृभ्वस्तीनां लाभः। तेषाम् एधामित्यनेन कुतोऽन्वयः (सम्बन्धः), उभयेषां भिन्नार्थकत्वादिति प्राप्ते आह—तेषामिति। कृभ्वस्तयो हि क्रियासामान्यवाचिनः। डुकृञ् करणे, भू सत्तायामित्यादिरूपविशिष्टार्थका अपितु अन्येषामपि धातूनामर्थं प्रकाशयन्ति। तद् यथा स्नातीत्यत्र स्नानं करोति, गच्छतीत्यत्र गमनं करोतीत्यादि। तेन एते क्रियासामान्यवाचिनः 'क्रियाः सामान्येन वाचयन्ति' इत्यर्थः। यस्य यस्य धातोः (क्रियायाः) अनु प्रयुज्यन्ते तस्य तस्यैवार्थस्य उपकरोति इति स्पष्टार्थः। अतएव एषाम् एधामित्यनेन अभेदेन (ऐक्येन) अन्वयः (सम्बन्धो व्यवहारो वा)। कुत इति चेत्?—सामान्यविशेषान्वयन्यायेनेत्याहुः। सामान्यविशेषयोः सम्बन्धस्य सर्व्वानुभूतिविषयत्वादिति। तत्र कृञादयः सामान्यार्थका एधामित्यादयस्तु विशेषार्थका इति बोध्यमिति संक्षेपः।

ननु योऽयं प्रत्याहारः प्रोक्तस्तत्र 'अभिविधौसम्पदा च' (२१२४) इत्यपि अन्तर्भूतम् सूत्रम्। तत्र च सम्पद इति (सम्—पद) धातुर्दृश्यते। तत् कृभ्वस्तीनामिव तस्यापि आमन्तात् कुतोनानुप्रयोग इत्यत्राह—सम्पदस्त्विति। अन्वितार्थत्वादिति। कृभ्वस्तीनामिव सम्पद धातोरेधाम् इत्येनेन अन्वयो नास्ति विशेषवाचित्वात्। उभयोरपि न हि विभिन्नार्थकस्य विभिन्नार्थकेन सह अभेदान्वयः 'ऐक्यत्वेन—सम्बन्धः' सम्भवति। क्रियासामान्यवाचिन एव क्रियाविशेषवाचिभिरभेदेन अन्वीयन्ते न तु क्रियाविशेषवाचिनोऽपीति निष्कर्षः। अयमप्यंशो भाष्यादुपात्तः विस्तरभयात्त्वस्माभिर्न्नालोचितम इति।

अत्र इदमप्यवधेयम्—"कृञ्चानुप्रयुज्यते इति। व्यवधाने कृञादीनामनुप्रयोगो भवति न वेति विचार्य्यते। तत्र वोपदेवः "भूसकृन्वामः" इत्याह। अस्यव्याख्यायां रामानन्दाचार्य्यः—अनुग्रहणं उपसर्गक्रियाविशेषणव्यवधानेऽपि तदनुप्रयोगज्ञापनार्थमिति विवृतवान्। तस्माद व्यवधानेऽनुप्रयोग इति मौग्धवोधिकाः॥ विषयेऽस्मिन् नीरवो दुर्गसिंहः। 'सप्रादिकृभूस्तिभिश्च' इति क्रमदीश्वर—सूत्रम्। तस्य वृत्तावपि नीरवो जूमरीन्दुः। परं मीमांसितवान् श्रीमद्गोयीचन्द्रः। प्रादिसहितैः कृभूस्तिभिश्चानुप्रयोगो भवतीति अथवायं असाधुरिति यो यथा वुध्यते स तथा व्याचष्टे इति सन्दिग्धमेवोपन्यस्तमिति। अर्थात् कृञ्चानुप्रयुज्यते इति सूत्रस्य व्याख्यायां सर्व्वे प्रमुग्धा अभवन्।

यस्य यन्मतम् स तदेव लिखितवान्। केचन भीत्या दुर्गादयाः किमपि नोचुः। स एव सन्देहः सूत्रमार्गेण प्रदर्शित आचार्य्येण श्रीमता क्रमदीश्वरेण इति गोयीचन्द्रमत—निष्कर्षः। वस्तुतस्तु पाणिनीये शास्त्रे व्यवधाने अनुप्रयोगासिद्धिः विपर्य्यासनिवृत्त्यर्थमिति वार्त्तिकविरोधात्। यथाह श्रीमद्जटीश्वरः कृञ्चानुप्रयुज्यते इत्यनुशब्दस्य व्यवहितनिवृत्त्यर्थत्वात् इति। ननु 'उच्चाम् प्रचक्रुर्नगरस्य मार्गान्' (भट्टि) 'प्रभ्रंशयां यो नहुषं चकार' (रघु)—इत्यत्र अव्यवधानेऽपि कथमनुप्रयोग इति चेत्—नगरस्य उच्चां कथं प्रचक्रुः (?), मार्गान् इत्यस्य क्रियान्तरान्वयित्वात्। 'उच्चान् प्रचक्रुर्नगरस्य मार्गान्' इत्यपि पाठस्तत्र नगरस्य मार्गान् उच्चान् उच्चायुक्तान् सेकयुक्तान् प्रचक्रुरित्यन्वयः। उच्चाशब्दात् अर्श आदिभ्योऽचि उच्चाशब्दस्य मार्गविशेषणस्य द्वितीयाया बहुवचनम्। एतदेव गोयीचन्द्रमतम्। यथोक्तं तेन 'ये उद्यन्ते ते उच्चाः। तान् सिक्तान् प्रचक्रुरितिव्याख्यया ग्रन्थकाराः समादधिरे इति।' इति केचित्—शब्देन्दुशेखरकारास्तु—

"आमन्तादिति निर्द्दिश्यमानपरिभाषया प्रशब्देन च अव्यवहिते एव प्रयोगः। अनुशब्दात् पश्चादेवेति च बोध्यमित्याहुः।" एवं च "प्रभ्रंशयां यो नहुषं चकार" (रघु—१३—३६) "तं पातयां प्रथममास पपात पश्चात्" इत्यादयः प्रयोगाः प्रामादिका एवेति बहवः—भट्टोजिरपि मनोरमायामेवमाह। पचान्तरे हरदत्तस्त्वाह—'कथं भट्टिकाव्ये उच्चां प्रचक्रुः नगरस्य मार्गान्, प्रभ्रंशयां यो नहुषं चकार इति—वार्त्तिककारः पृष्टातां यः पठति विपर्य्यासनिवृत्त्यर्थं वाच्यं व्यवहितनिवृत्त्यर्थञ्च' इति। इति दिक्॥ अत्र भाष्यमप्येवम्—तथा च—'अनुप्रयोगः किमर्थम्—'विपर्य्यासनिवृत्त्यर्थम् (वा)—विपर्य्यासनिवृत्तिर्यथास्यात् ईहाञ्चक्रे—चक्रे ईहामिति माभूत्। 'व्यवहितविवृत्त्यर्थञ्च' (वा) ईहाञ्चक्रे व्यवहितस्य माभूत्—ईहां देवदत्तश्चक्रे' इति।

कृञस्तु क्रियाफले इति 'स्वरितञितःकर्त्रभिप्राये क्रियाफल' इति सूत्रेण क्रियाफलं यदा कर्त्तारं नाभिप्रैति तदा डुकृञ् इति ञित्वात्कृधातोः परस्मैपदित्वमेव। अनुप्रयोगदशायां तु नायं नियम इति दर्शयति—

२२४० । आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य ॥१।३।६३॥

टी— । आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदं स्यात् । इह पूर्ववदेवात्मनेपदं न तु—तद्विपरीतमिति । तेन कर्त्तृगेऽपि फले इन्दाञ्चकारत्यादौ न तङ् ।

The word आम्प्रत्यय forms an अतद्गुणसंविज्ञानबहुव्रीहि—the breaking up of the words being आम् प्रत्ययो यस्मात् ( after which the affix आम् is attached). [ Meaning of अतद्गुणसंविज्ञान :—बहुव्रीहि is of two kinds तद्गुणसंविज्ञान and अतद्गुणसंविज्ञान । The former is illurstrated when the constituent members have any connection ( अन्वय) with the verb ; as सुकेशीमानय 'Bring a woman of excellent hair' —when this is said a woman of bad hair should not be presented. Hence it is obvious that not an ordinary woman is wanted but a woman possesing of beautiful hair ; so hair also is connected with the verb आनय । This is तद्गुणसंविज्ञान । The latter ( अतद्गुण ) is instanced when the censtituent members are not connected with the verb but the possesser alone is meant to-beconnected with the verb. Thus चित्रगुमानय—Bring me a man possessing spotted cows. Here cows are not presented before the speaker but only the man possessing the cows. Hence the cows have no connection with the verb ]. Similarly in this case, आमप्रत्यय—the affix आम् has nothing to do with वति, which is affixed to a root, followed by आम । Hence the root followed by आम is meant.

Atmanepada is enjoined to the root कञ् also, which is used invariably after ( आम् ) like the root, possessing or being followed by the affix आम्. ( Thus it is shown that the root कृ will take आत्मनेपद, when it follows एधाम् or the like no matter if the fruit of the action accrues to the person other than the agent ( कर्त्ता ). Now to show that the root कृ precededby an आमप्रकृतिक root will take परस्मैपद terminations even when the result rests with the agent, he says that here in the rule आम्प्रत्ययवत्—" we should draw the word 'पूर्व्ववत्' from the preceding rule 'पूर्व्ववत्सनः' ( 2735—1.3.62 ) so that there will be two ( different ) sentences —( 1 ) आम्प्रत्ययवत्कञोऽनुप्रयोगस्य and (2) पूर्व्ववत्कञोनुप्रयोगस्य। The latter then means that कृ will be आत्मनेपद or परस्मैपद according as its predecessor ( पूर्व्व ) एध, इन्द etc, are आत्मनेपद or परस्मैपद and not otherwise. Thus even when the fruition rests with the agent, तङ् i.e. त आताम् and the like आत्मनेपद terminations are not to be attached to कृ in इन्दाञ्चकार etc. Hence though the root इदि or इन्द ( with नुम् ) is parasmaipadi it will act as an atmanepadi not being changed into इन्दाञ्चक्रे। Now in the present case the form standing एधाम्+कृ+त—

मित—। 'अनुदात्त ङित आत्मनेपदम्' ( २१५७—३।१।१२ ) इत्यत आत्मनेपदमित्यनुवर्त्तते। सूत्रे 'आम्प्रत्ययवत्' इति दृश्यते। न च आम्प्रत्ययस्य आत्मनेपदं भवति। तत् कस्य आत्मनेपदमित्यपेक्षायां प्रथमं तमेव शब्दं विभज्य तस्य वृत्तिं दर्शयति—आमप्रत्ययोयस्मादिति। अतद्गुणसंविज्ञान इति। तद्गुणसंविज्ञानातद्गुणसंविज्ञानभेदेन हि वहुव्रीहिर्द्विधा विभज्यते। तत्र यदा वृत्तिस्थपदस्य क्रियायामन्वयः स्यात् तदा तत्गुणसंविज्ञानोऽयं वहुव्रीहिः यथा सुमुखामानय इत्युक्ते न तावत् दुर्मुखा

आनीयते किन्तु सुमुखा एव। तस्मात् सुमुखायाः स्त्रिय इव मुखस्यापि क्रियया अन्वयो न घटते तदा अतद्गुणसंविज्ञानोऽयं बहुव्रीहिः। यथा—चित्रगुमानय' इत्युक्ते न खलु गाव श्चित्रा आनीयन्ते किन्तु यस्य ताः स एव ; एवमत्रापि आम्प्रत्ययो यस्माद्धातोरुत्तरं विधीयते तस्यैवात्मनेपदं न लाभ इति। आम्प्रत्ययवदिति तृतीयान्तात्तुल्यार्थे वति इत्याह आम्प्रकृत्यातुल्यमिति। ततः अनुप्रयोगस्य इत्यत्र 'अनुप्रयोग' इति कर्मणि घञोरूपम् ( अनुप्रयुज्यतेऽयमिति ) ; तदाह अनुप्रयुज्यमानात् इति योऽनुप्रयुज्यते तस्मादित्यर्थः। आत्मनेपदं स्यादिति—क्रियाफले परगामिन्यपि अनुप्रयुज्यमानात् कृञः ( कृ धातोः ) आमन्तैधादिधातुवत् आत्मनेपदमेव स्यात् न तु 'स्वरिते' ( २१५८ ) इति प्राप्तं परस्मैपदमित्यर्थः। एवमप्राप्तस्य—आत्मनेपदस्य प्राप्तिर्विहिता इदानीं प्राप्तस्य आत्मनेपदस्यविधिं वारयिष्यन्नाह—इहेति। अस्मिन आमप्रत्ययवत् कृञोऽनुप्रयोगस्येति सूत्रे, 'पूर्व्ववत्सनः' ( २७३५—१।३।६२ ) इति सूत्रात्—पूर्व्ववदिति पदमनुवर्त्त्य अनुकृष्य वाक्यभेदेन विभिन्नवाक्यत्वेन सम्बद्ध्यते अन्वीयते अस्माभिरिति शेषः भाष्यकारप्रवृत्त्यनुसारादितिभावः। तथाच सूत्रमिदं वाक्यद्वयात्मकम्—'आमप्रत्ययवत् कृञोऽनुप्रयोगस्ये'त्येकं वाक्यम्। 'पूर्व्ववत्कृञोऽनुप्रयोगस्ये'त्यन्यत्। तत्र पूर्व्वस्यार्थः प्रागेव व्याख्यातः। द्वितीयस्य त्वयमर्थः-पूर्व्वेण एधादिधातुना तुल्यमनुप्रयुज्यमानात् कृञोऽपि आत्मनेपदं स्यात्। ननु च प्रागपि ( आम्प्रत्ययवदित्यत्र ) एवमेव प्रोक्तत्वात् कोऽत्र विशेषः इति चेत् नियमार्थोऽयमारम्भ इत्याह—पूर्व्ववदेवात्मनेपदं न तु तद्विपरीतमिति। नियमफलमाह—तेनेति ( इदि ऐश्वर्य्ये इति धातुः परस्मैपदी। इदितोनुम् धातोरिति नुम्—ततः आमि लिटि रूपम् )—अत्र आमन्तस्य इदिधातोः परस्मैपदित्वेन अनुप्रयुज्यमानस्य कृञः ञित्त्वप्रयुक्तं 'स्वरिते ( २१५८ ) ति सूत्रप्राप्तं आत्मनपदं प्रतिषिध्यात्र फलं कर्त्तारमेव अभिप्रैति, धातुश्च ञिदेव भवति तथापि ( हेतुद्वयसत्त्वेऽपि ) कृञोऽत्र ( इन्दाञ्चकार इत्यत्र ) परस्मैपमेव भवति। अत्रायं संक्षेपः—'आम्प्रत्ययवतोऽनुप्रयोगस्य' इत्यनेन परगामिन्यपि फले—आत्मनेपदं विहितम्—( परस्मैपदं निषिद्धम् ) ; पूर्व्ववत् कृञोऽनुप्रयोगस्य इत्यनेन तु कर्त्तृगामिन्यपिफले—परस्मैपदमेव विहितम् ( आत्मनेपदं निषिद्धमिति नियमद्वयम् )।

अत्र भाष्यम्—'आम्प्रत्ययवदिति। कृञ्ग्रहणं नियमार्थम्। इह माभूत् ईहामास। कथं चास्तेरनुप्रयोगो भवति। प्रत्याहार ग्रहणं हि तत्र विज्ञायते। कथं पुनर्विज्ञायते तत्रप्रत्याहारग्रहणमिति। इह कृञ्ग्रहणात्। अथेह कस्मान्न भवति। उदुब्भाञ्चकार। उदुरजाञ्चकार! ननु चाम्प्रत्ययवदित्युच्यते। ननु चास्मात् प्रत्ययात् आत्मनेपदं पश्यामः न ब्रूमोऽनेनेति। किं तर्हि। स्वरितञितः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवतीति। नैष दोषः। इदं नियमार्थं भविष्यति। आम्प्रत्ययादेवेति। यदि नियमार्थं विधिर्नप्रकल्पते। ईहाञ्चक्रे। ऊहाञ्चक्रे। विधिश्च प्रक्लृप्तः। कथम्। पूर्ववदिति वर्त्तते। आम्प्रत्ययवत्—पूर्ववच्चेति''।

एवं प्रकृते लिटि एधाम् कृ त इति स्थिते—

### २२४१। लिटस्तझयोरेशिरेच् ॥३।४।८१॥

**दी—लिडादेशयोस्तझयोः 'एश्' 'इरेच्' एतौस्तः। एकारोच्चारणं ज्ञापकं—'तङादेशानां टेरेत्वं ने'ति। तेन डारौ-रसां न। 'कृ' 'ए' इति स्थिते।**

'एश्' and 'इरेच्' replace respectively त and झ, the substitutes for ( affixes of ) लिट। The pronunciation of एकार in एश् and इरेच् indicates this—that एत्व i.e. एकार is not enjoined to the टि (अचोऽन्त्यादि-) of the substitutes for तङ् ( आत्मनेपद affixes), [derived by the rule 'टित आत्मनेपदानां टेरे' ( २२३२ )]. Hence डा, रौ and रस् the substitutes for third person triad of लुट्, which is a टित् ( ट्-eliding ), hare no एत्व ( एकार ) in their टि portion. Now the form being एधाम् + कृ + ए—[ Note that एश् is शित्, and therefore it replaces the whole affix त (and not अ only ofit) by the परिभाषा —'अनेकाल् शित् सर्व्वस्य ( 45. )—इरेच also being अनेकाल्—containing more than one अल् or letter replaces the whole of झ ]।

मित—। तश्च भश्च 'तझौ' (द्वन्द्वः), तयोः (स्थानषष्ठी) स्थाने एश्, इरेच् च क्रमात् स्यात्। तस्थाने एश् झस्थाने इरेच् इति विवेकः। 'टित आत्मनेपदानां टेरे' (२२३३) इति सूत्रेण लिडादेशतझयोष्टिभागस्य एत्वं (एकारः) स्यात् लिटष्टित्वात्—तथापि यत् 'अश् इरच्' इत्यनुक्त्वा 'एश् इरेच्' इति एकारत्वेन निर्द्देशः क्रियते तेन ज्ञाप्यते यत् तङादेशानां तङामात्मनेपदविभक्तीनां स्थाने ये आदिश्यन्ते तेषां टेः टिभागस्य एत्वं एकारत्वं न भवतीत्यर्थः। किञ्च तद् ज्ञापकफलमित्यपेक्षयामाह तेनेति—लुटः त, आताम्, झ इत्येषां स्थाने डा, रौ, रस् इत्येते विधीयन्ते। अत्र लुटष्टित्वेऽपि तदादेशानां डारौरसां टेरेत्वं न भवति। अथ प्रकृते एधाम् कृ इति स्थिते ('अनेकाल् शित् सर्व्वस्येति परिभाषया एशः शित्त्वात् इरेचश्च अनेकालत्वात्—सर्व्वादेशः)।

## २२४२। असंयोगाल्लिट् कित् ॥१।२।५॥

दी—। असंयोगात् परोऽपिल्लिट् कित् स्यात्। 'क्ङिति च' (२२१७) इति निषेधात्—'सार्व्वधातुकार्द्धधातुकयोः' (२१६८) इति गुणो न। द्वित्वात् परत्वाद्यणि प्राप्ते।

An अपित् लिट्, coming after a non-conjunct letter (single letter), becomes (is to be treated as) कित् and not ङित् by the rule 'सार्व्वधातुकमपित्' (2234) for लिट् substitutes are आर्द्धधातुक। Here त (the आत्मनेपद affix) has no प् after it hence it is अपित् and thus the rule applies. According to the prohibition enjoined in the rule 'क्ङिति च' (2217) the ऋ of कृ is not gunnated by the rule 'सार्व्वधातुकार्द्धधातुकयोः' (2168) for ए (here) is कित्। After the root कृ is first reduplicated by 'लिटि धातोरनभ्यासस्य' (2177), the यणादेश (र) being due by the subsequent rule 'इको यण् अचि' (47—6. 1. 77)—(एधाम् कृ कृ ए) we look ahead :—

मित—। असंयोगात्+लिट् कित् इतिच्छेदः। 'सार्व्वधातुकमपित्' इति पूर्वसूत्रम्—तस्मादपिदित्यनुवर्त्त्य आह, असंयोगादिति—असंयोगात् (हलोऽनन्तराः संयोगः इति) संयोगसंज्ञावहिर्भूताद् वर्णात्—परः परवर्त्ती यः अपित् लिट् 'लिडादेशः स कित्= अगुणी' स्यात्। ततः 'सार्वधातुकार्द्धधातुकयोरिति गुणे विहितेऽपि—अत्र लिटः कित्त्वात् 'क्ङितिचेति' निषेधात् न गुणः। ततः एधाम् कृ कृ ए इति कृते द्वित्वे ( लिटि धातोरनभ्यासस्य इति सूत्रेणेत्यर्थः ) 'इको यणचि' (४७—६।२।७७) इति सूत्रस्य परवर्त्तित्वात् ऋकारस्य यणादेशेन रेफे प्राप्ते विशेषमाह—( यदि तु प्रथमं यणादेशः क्रियेत तदा'कृ' इत्यस्य 'क्र' इत्येवंरूपे जाते एकाच्त्वाभावात् लिटिधातोरितिन-प्रवर्त्तेत द्वित्वं च नो भवेदित्युक्त'—द्वित्वादित्यादि )—

२२४३। द्विर्वचनेऽचि ॥१।१।५६॥

**टी—। द्वित्वनिमित्तेऽचि परे अच आदेशो न स्यात् द्वित्वे कर्त्तव्ये।**

When an अच् (vowel) due to which reduplication is enjoined (to what precedes) follows, then the substitution for a vowel (अच्) is prohibited—if (i.e. on condition that) reduplication has to be done. Here in एधाम् कृ ए—कृ has reason to be duplicated owing to the existence of (लिट) 'ए' after it, for the substitute ए for त is आर्द्धधातुक (लिट्) by स्थानिवद्भावः। Again this ए being an अच् the ऋ of कृ must be replaced by यण् (र्)। Thus we are between the horns of a dilemma. But this rule 'द्विर्वचनेऽचि' solves this difficulty with the help of the exposition 'द्वित्वे कर्त्तव्ये अच आदेशो न स्यात्'—'substitions for vowels are not enjoined when duplication has to be done.' Thus द्वित्व or duplication comes in first and then follows यणादेश though the

rule 'इको यणचि' ( 47—6. 1. 77 ) follows upon the द्वित्वविधायक rule 'लिटिधातोरनभ्यासस्य' ( 2177—6. 1. 8). Note that the terms द्वित्वनिमित्ति etc.—has special significance. What is the significance of द्वित्वनिमित्त ?—Witness दुद्यूषति। Here in दिव् ( दिवुक्रीड़ायाम्) + उठ सन् तिप्—ऊठ् is not a द्वित्वनिमित्त ; hence by ऊठ् we first get द्यू and then we duplicate द्यू and the form is दुद्यूषति ; but if the duplication would have been first adhered to we would have got दिद्यूषति and not दुद्यूषति which is the correct form. For the significance of अचि and अच: see the 'मित'—Tika below. The form yet remaining एधाम् क्र क्र ए—

मित—। 'स्थानिवदादेशोऽनल्विधौ' ( ४९—१।१।५६ ), 'अच: परस्मिन् पूर्वविधौ' ( ५०—१।१।५७ ), 'न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वार दीर्घ जश्चर्विधिषु' (५२—१।१।५८) 'द्विर्वचनेऽचि इति पाणिने: सूत्रक्रम:। तदत्र द्विर्वचनेऽचि इत्यत्र 'स्थानिवदादेश' इति' परस्मिन्' इति 'पूर्वविधावि'ति 'न' इति चानुवर्त्तते। द्विर्वचने इत्यस्य च द्विरुच्यते येन परनिमित्तेन तत् द्विर्वचनम् (बहुव्रीहि:) इति विग्रह: = द्विर्वचन—निमित्तमिति लभ्यते ; अथवा द्वि: वचनम् द्विर्वचनम् (सुपसुपा) तदस्ति अस्य इति अर्श आदिभ्योऽच्—तत: द्विर्वचनञ्च द्विर्वचनञ्चेत्येकशेष:। अत्राप्यनुक्तमपि द्विर्वचननिमित्तमिति गम्यते आयुर्घृतम् इत्यत्र यथा—आयुषो निमित्तम् घृतमिति बोध:। तदेतत् सर्वं मत्वाह—द्वित्वनिमित्ते इत्यादि। द्वित्वे कर्त्तव्ये इति अच: पूर्व्वत्वेन दृष्टस्य द्वित्वस्य विधौ कर्त्तव्ये सतीत्यर्थ:। एवं क्र ए इत्यत्र द्वित्व' कर्त्तव्यम्। तेन 'इको यण् अचीत्य नेन इक: (अच:—ऋकारस्येति यावत्) स्थाने यण् (रेफ:) प्राक्—न कर्त्तव्य:। प्रथमं अजादेशे तु क्रे इति भवति। ततो रूपातिदेशपक्षाश्रयणे यद्यपि 'क्रे' इत्यमुमेव स्थानिवत्—मत्वा द्विरुच्चार्य्ये 'चक्रे' इति लभ्यते तथापि 'प्रक्षालनाद्धि पङ्कस्य दूराद-स्पर्शनं वरमि'ति न्यायात् प्रथमं द्वित्वं कर्त्तव्यं ततोऽजादेश: कर्त्तव्य: लाघवात् इति भाव:। किञ्च रूपातिदेशपक्षाश्रयणे दोषान्तरमपि भवति। 'क्रे' इतीद स्थानि

वन्मत्वा यदि द्वित्वं विधीयते तर्हि—'क्रे' इत्यत्र ( करए ) रेफोऽपि स्थानिवद्भावात् ऋकार एव भवति ततश्च एकाच्त्वं न भवति किन्तु द्व्यच्कत्वमेव ततः कुतो द्वित्वमतः —सुष्ठुक्तं द्वित्वे कर्त्तव्ये प्राक् अजादेशो नकर्त्तव्य—इति। प्रथमं क्र क्र ए इति कर्त्तव्यं तत उत्तरखण्डस्य (द्वितीय 'क्र' इत्यस्य अभ्यासभिन्नस्येत्यर्थः) यणादेशो विधातव्यः। द्वित्वनिमित्ते इति किम्? दुद्यूषति। दिव् ( दिवुक्रीड़ायाम् )+सन् इति स्थिते "च्छ्वोः शूडनुनासिके च" ( २५६—६।४।१० ) इति वकारस्य ऊठि दिव्+ऊ+सन् इति जाते ऊकारस्य न द्वितनिमित्तत्वं किन्तु सन एव तस्य च व्यवहितत्वात् परत्वं न भवति तेन प्राक ऊट्—कार्य्ये कृते द्यू सन् इति सम्पद्यमाने द्वित्वं ततो हलादिशेषेण—दुद्यूषति इति लभ्यते, प्राक् द्वित्वे कर्त्तव्ये तु दिद्यूषति इत्यनिष्टं प्रसज्येतेति बोध्यम्। अचि किम? जेघ्रीयते। देध्मीयते। जेघ्रीयते इत्यत्र घ्रा+यङ् इति स्थिते 'ईघ्राध्मोः' ( २६४८—७।४।३१ ) इति 'घ्रा' इत्यस्य ईकारान्तत्वे विहिते ईकारस्य द्वित्वनिमित्तकयङो निमित्तत्वं,न तु द्वित्वनिमित्ताज्-निमित्तकत्वमिति प्राक् ईत्वं ततो द्वित्वम्। एवं देध्मीयते इत्यत्र। अचः किम? असूषुपत्। स्वापि (स्वप्+णिच्)+चङ्+तिप् इति स्थिते चङि (२३१५—६।१।११) इति चङो द्वित्वनिमित्ते 'स्वापेश्चङि' (२५८४—६।१।१८) इति स्वापेः संप्रसारणम्। तेनात्र कार्य्यद्वयं वर्त्तते। स्वापेर्द्वित्वमित्येकं कार्य्यम्। तस्य च सम्प्रसारणमित्यपरम्। तदनयोः कतरत् प्रथमं क्रियताम् इति कार्य्यसन्देहे "सम्प्रसारणं तदाश्रयकार्य्यञ्चबलव-दि"ति परिभाषया—प्रथमं सम्प्रसारणमेव कार्य्यं ततो द्वित्वं स्वापे वंकारस्य यत् सम्प्रसारणम् 'उ' इति यावत् ( इग्यणः सम्प्रसारणम्) तस्य अजादेशत्वाभावात्। अयं स्पष्टार्थः—स्वापेर्वकारस्य—उत्वं विधीयते। तदत्र व इति स्थानी उ इति आदेशः। व इति तु अज् न भवति। किन्तु हलेव तेन उकारस्य अजादेशत्वं नास्ति ( अचः आदेश इति अजादेशः) किन्तु हलादेशत्वमेव। तेनात्र निर्बाधं सम्प्रसारणमेव प्राग् भवति ततो द्वित्वम् (सन्वत्त्वदीर्घत्वषत्वाणि च ) इति। सम्प्रसारणेन सुप् इति जाते सुप्सुप चङ्ति इति स्थिते लुङादेशत्वादडागमे अट् सुपसुप् अ तिप् इति सम्पद्यमाने 'दीर्घो लघोः' (२३१८) इति अभ्यासदीर्घे असूषुपत् इति लभ्यते (आदेशप्रत्यययोरिति-

षलम् )। [अत्र भाष्यम् 'द्विर्वचनेऽचीति—आदेशे स्थानिवदनुदेशा तद्वतोद्विर्वचनम् (वार्त्तिक)। आदेशे स्थानिवदनुदेशतद्वतः, किंवतः। आदेशवतो द्विर्वचनं प्राप्नोति। तत्र को दोषः। तत्राभ्यासरूपम् (वार्त्तिक)। तत्राभ्यासरूपं न सिध्यति। चक्रतुश्चक्रुरिति। 'अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद् भावस्य, ( वार्त्तिक )। यदयमज्ग्रहणं करोति तद् ज्ञापयत्याचार्यो यद्रूपंस्थानिवद् भवतीति। क ' कृत्वा ज्ञापकम्। अज्ग्रहणस्यैतत् प्रयोजनम्। इह मा भूत्। जेघ्नीयते देध्मीयते। यदि च रूपं स्थानि—वद् भवतीति ततोऽज्ग्रहणमर्थवद्भवति। अथहि कार्य्यम्। नार्थोऽज्ग्रहणेन। भवतेरवात्र द्विर्वचनम्। तत्र गाङ्प्रतिषेधः (वार्त्तिक)। तत्र गाङः प्रतिषेधो वक्तव्यः। अधिजगे। इवर्णाभ्यासता प्राप्नोति। न वक्तव्यः। गाङ् लिटीति द्विलकारको निर्देशः। लिटि लकारादाविति। कृतेरजन्तदिवादि-नामधातुष्वभ्यासरूपम् (वार्त्तिक)। कृतेरजन्तदिवादिनामधातुष्वभ्यासरूपं न सिध्यति। कृति। अचिकीर्त्तत्। एजन्ता जग्ले—मम्ले। दिवादि। दुद्यूषति। सुष्यूषति। नाम धातुः। भवनमिच्छति भवनीयति भवनीयतेः सन् विभवनीयिषति। एवं तर्हि प्रत्यय इति वक्ष्यामि। प्रत्यय इति चेत् कृत्येजन्तनामधातुष्वभ्यासरूपम् (वार्त्तिकम्)।

'प्रत्यय इति चेत् कृतेरजन्तदिवादिनामधातुष्वभ्यासरूपं न सिध्यति। दिवादय एके परिहृताः। एवं तर्हि द्विर्वचननिमित्ते अचि अजादेशः स्थानिवदिति वक्ष्यामि। स तर्हि निमित्तशब्द उपादेयः। नह्यन्तरेण निमित्तशब्दं निमित्तार्थो गम्यते। तद् यथा। दधि त्रपु ( दस्ता इति भाषायाम् ) संप्रत्यचो ज्वरः। ज्वरनिमित्तमिति गम्यते। लड्डूलोदकं पादरोगः। ( लड्डूलोदकमिति पूत्यादिगन्धविशिष्टं दूषितं जलमित्यर्थः ) पादरोगनिमित्तमिति गम्यते। आयुर्घृतम्। आयुषोनिमित्तमिति गम्यते। अथवा अकारो मत्वर्थीयः। द्विर्वचनमस्मिन्निति सोऽयं द्विर्वचनः द्विर्वचने इति। एवमपि न ज्ञायते कियन्तमसौ कालं स्थानिवद्भवतीति। यः पुनराह द्विर्वचने कर्त्तव्ये इति। कृते तस्य द्विर्वचने स्थानिवन्न भविष्यति। एवं तर्हि प्रतिषेधः प्रकृतः सोऽनुवर्त्तिष्यते। क्व प्रकृतः। न पदान्तद्विर्वचनेति। द्विर्वचननिमित्ते अचि अजादेशो न भवतीति। एवमपि न ज्ञायते कियन्तमसौकालमजादेशो न भवतीति। यः पुनराह द्विर्वचने

कर्त्तव्ये इति कृते तस्य द्विर्वचने अजादेशो भविष्यति। एं तर्हि उभयमनेन क्रियते। प्रत्ययश्च विशेष्यते द्विर्वचनश्च। कथं पुनरेकेन यत्नेनोभयं लभ्यम्। लभ्यमित्याह। कथम्। एकशेषनिर्देशात्। एकशेषनिर्देशोऽयं द्विर्वचनञ्च द्विर्वचनञ्च द्विर्वचने। द्विर्वचने कर्त्तव्ये द्विर्वचने अचि प्रत्यये इति। ]'॥ एवं प्रकृते एधाम् कृ कृ ए इति स्थिते।

२२४४। उरत् ॥७।४।६६॥

टी—। अभ्यासऋवर्णस्य ( ? ) अत् स्यात् प्रत्यये परे। रपरत्वम्। 'हलादिः शेषः' ( २१७९ )। 'प्रत्यये' किम्। वव्रश्च।

The ऋकार of the अभ्यास is replaced by अत् when a प्रत्यय or affix follows. अ of अत् is followed by a र् (by the rule उरण्रपरः 70—1. 1. 51.). This र् disappears by the rule—हलादिः शेषः ( 2179 ). Why say प्रत्यये परे? Witness वव्रश्च। व्रश्च् (ओव्रश्चू छेदने) +लिट्णल् ( अ )=व्रश्च् व्रश्च् ( द्वित्व ) अ = वृश्च् ( लिड्यभ्यासस्योभयेषाम्—2408 ) इति (सम्प्रसारणम् ) = व्रश्च = वर्श्च् (उरत् ) व्रश्च = वव्रश्च by हलादिः शेषः। Here the अभ्यास 'व्र' is first changed into वृ by सम्प्रसारण then into वर् by उरत् (अत्)- Hence, because अत् (अ) in वर् is the substitute of ऋ, which is a सम्प्रसारण ( इग्यणः सम्प्रसारणम् ), has to be treated as स्थानिवत् i. e. like the स्थानी 'ऋ'. Thus व् of वर् is not allowed to have सम्प्रसारण, for it is followed by a सम्प्रसारण अ ( स्थानिवत् ) cp. the rule 'न संप्रसारणे संप्रसारणम्' (363—6. 1. 27). Thus the rule न संप्रसारणे etc is valid here. But had the word 'प्रत्यये' not been mentioned (in the वृत्ति of Bhattoji), the i.e. अ ( अत् ) of वर् would not have been treated as स्थानिवत (ऋवत्), there being no परनिमित्त cp. the rule 'अचः परस्मिन etc' ( 50—1. 1. 57). And अ ( अत् )

not being a स्थानिवत्), the rule न ' ' रणे etc does not apply (for there is no संप्रसारण following). Thus the अभ्यास 'र' of वव्रश्च is going to have सम्प्रसारण but in that case you cannot get वव्रश्च, but you are to get ओव्रश्च. Thus it is clear that the expression 'प्रत्यये परतः' should be mentioned in the वृत्ति।

मित—। उः+अत् इतिच्छेदः। उरिति ऋकारस्य षष्ठ्यां रूपम् 'मातृपित्र' इत्यत्र यथा। 'अत्र लोपोऽभ्यासस्य' (२६२०—७।४।५८) इत्यतोऽभ्यासस्य इत्यनुवर्त्तते। 'आसप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः' इति भाष्यवचनात् अङ्गस्येत्यधिकृतं वर्त्तते। तदाह—अभ्यास-ऋवर्णस्य इत्यादि। प्रत्यये परे इति। 'अङ्गस्य' इत्यनेन प्रत्ययः आक्षिप्यते एव अन्यथा प्रत्ययपरत्वाभावेन तस्य अङ्गसंज्ञात्वस्यैव अभावात्—उक्तं हि भगवता सूत्रकारेणैव—'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गमिति' (१९९)। अत उक्तं प्रत्यये परे इति। रपरत्वमिति—'उरण् रपरः' (७०—१।१।५१) इति सूत्रेण 'अत्' इत्यस्य अकारः रपरः सन्नेव प्रवर्त्तते इत्यर्थः। ततश्च 'क्ल' क्ल ए इत्यत्र 'क' क्ल ए इति स्थिते 'हलादिः शेषः' (२२७७) इति सूत्रेण—रलोप इत्याह—हलादिरिति। एवञ्च क क्ल ए इति स्थितम्।

स्वव्याख्याने प्रत्यये इति पदं कथमन्तर्भुक्तं इति कारणं फलञ्च निर्द्दिशन् पृच्छति, प्रत्यये किमिति। उत्तरमाह—वव्रश्चेति। ओव्रश्चु च्छेदने इति धातुः। तस्य लिटि णलि रूपम्। तदित्थं प्रक्रिया। व्रश्च् लिट् णल् (अ) इति स्थिते द्वित्वम्, लिट्यभ्यासस्योभयेषाम्, (२४०८) इति अभ्यासस्य संप्रसारणम्, 'उरत्' इति अभ्यासस्थ ऋकारस्य अकारादेशः, रपरत्वम्, हलादिः शेषः (व्रश्च् व्रश्च् अ=वृश्च् व्रश्च् अ=वर्श्च् व्रश्च अ=वव्रश्च); अत्र अभ्यासस्य 'व्रश्च्' इत्यस्य सम्प्रसारणेन य ऋकारोभवति (वृश्च) स स्थानी। तस्य स्थाने पुनरुरदित्यनेन योऽकारोविधीयते स च 'अचः परस्मिन् पूर्व्वविधा' वित्यनेन स्थानिवत्। ऋकारोऽयं इग्यणः सम्प्रसारण' मित्यनेन सम्प्रसारणसंज्ञकमित्युक्तं भवति। तस्मात् तत् स्थाने य आदिश्यते अकार इति सोऽपि स्थानिवत्त्वेन सम्प्रसारणसंज्ञकमेव भवति। ततश्चामुमकारमाश्रित्य 'न संप्रसारणे संप्र-

सारणम्' ( २६२ ) इति निषेधः प्रवर्त्तते वकारस्य उत्वं च न भवति वव्रश्चेति च सिद्ध्यति। किन्तु यदि अत्र 'प्रत्यये' इत्युक्तं नाभविष्यत् तर्हि परतः प्रत्ययाभावात् अकारस्य स्थानिवत्त्वमपि नाभविष्यत्, प्रत्यये परतः सत्येवहि अङ्गसंज्ञाविधानात्। ततश्च स्थानिवत्त्वाभावेन सम्प्रसारणत्वस्याप्यभावात् 'न संप्रसारणे संप्रसारणमिति निषेधोऽपि न प्रावर्त्तिष्यत। तेन च वकारस्य सम्प्रसारणेन 'वव्रश्च' इति रूपमपि दुरुपपादमभविष्यदिति सुष्ठूक्तं 'प्रत्यये परे' इति।

## २२०५। कुहोश्चुः ॥७।४।६२॥

दी—। अभ्यासकवर्गहकारयोश्चवर्गादेशः स्यात्। एधाञ्चक्रे। एधाञ्चक्राते। एधाञ्चक्रिरे।

चवर्ग (चछजझञ) replaces both कवर्ग ( कखगघङ ) and हकार existing in an अभ्यास। Thus the क of कक्रए is replaced by च and then by यणादेश: ( 'इको यणचि ) we get चक्रे। Then एधाम् चक्रे =एधाञ्चक्रे।

मित—। कुरिति कवर्गः। चुरिति चवर्गः। ह् इति हकारः। कु च ह् च कुहौ ( द्वन्द्वः ) तयोः ( स्थानषष्ठी )। 'अत्र लोपोऽभ्यासस्येत्यभ्यासस्येति अनुवर्त्तते तदाह—अभ्यासकवर्गहकारयोश्चवर्गादेश इति। अत्र कवर्गीयवर्णानां हकारस्य च समष्ट्या षट्त्वम् चवर्गीयानाञ्च पञ्चतया यथा संख्येन नान्वयः। किञ्च यद्यपि उभयोः ( कवर्गहकारस्य चवर्गस्य च ) मध्ये प्रयत्नभेदोऽप्यस्ति तथापि सूत्रारम्भसामर्थ्यात् आदेशो बोध्य इति। एवञ्च प्रकृते एधाम् च-क्र ए इत्यत्र एधाम् च क्र ए इति जाते यणादेशे 'अनुस्वारस्य ययि परसवर्ण' ( १२४ —८।४।५८ ) इति परसवर्णे च एधाञ्चक्रे इति लभ्यते। एधाञ्चक्राते इति 'टित आत्मनेपदानां टेरे' इत्याताम्मित्यत्रैते रूपम्। एधाञ्चक्रिरे इति झस्य इरेजादेशे रूपम्।

इदानीं 'थासः से' ( २२०६) इति थासः 'से'भावे सकारस्य वलादित्वात् आर्द्धधातु-

कास्येड्वलादेरिति इडिह कथं न भवति इति दर्शयितुमिट् निषेधपरं सूत्रमवतारयति :—

२२४६। एकाच उपदेशेऽनुदात्तात् ।७।२।१०॥

दी—। उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्धधातुकस्य इट् न स्यात्। उपदेशे इत्युभयान्वयि। एकाच इति किम्—यङ्लुग्व्यावृत्तिर्यथा स्यात्। स्मरन्ति हि—श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च। यत्रैकाजग्रहणं चैव पञ्चैतानि न यङ्लुकि।—इति। एतच्च इहैव एकाज्ग्रहणेन ज्ञाप्यते। अच इत्येव एकत्वविवक्षया तद्वतोग्रहणेन च सिद्धे एकग्रहण—सामर्थ्यादनेकाच्कोपदेशो व्यावर्त्त्यते। तेन वधेर्हन्तुरुपदेशे एकाचोऽपि न निषेधः। आदेशोपदेशेऽनेकाच्त्वात्। अनुदात्ताश्चानुपदमेव संग्रहीष्यन्ते। एधाञ्चक्रषे। एधाञ्चक्राथे।

The augment इट is not enjoined to a वलादि-आर्धधातुक which follows a root that is mentioned to be अनुदात्त and एकाच् (having a single vowel only) in उपदेश (i.e. धातुपाठ)। The word 'उपदेशे' is related with both 'एकाचः' and 'अनुदात्तात्'; why say एकाचः?—It (i.e. the word एकाचः) is enlisted in the rule so that इड्विधि may be barred to एकाच roots in यङ्लुक्। In other words एकाच is included with a view to prohibiting the augment इट् to एकाच roots in यङ् लुक्—cp.—the saying (of old Grammarians) :—

Rules, in which the roots have been taught in these five sorts or ways, viz—by affixing श्तिप् (ति), शप् (अ), अनुबन्ध, by taking up the whole class (गण and by pronouncing the qualifying word एकाच् beforehand, will cease to have, in यङ्लुक

( the operations which they exercise upon the simple roots in लट् लिट् etc. ).

[ 1. श्तिपा—(By श्तिप) :—The rule 'भरतेः' (2181—7.4.32) contains the root भू ending in श्तिप् or ति and enjoins अ ( अकारान्तत्व ) to the reduplicate or अभ्यास in लिट् consequenly भू is replaced by भ । But this rule will not apply to the same root भू in यङ्लुक्—thus भू+यङ् लुक् लिट् अ=बोभवाञ्चकार and not बभवाञ्चकार ( for formation see under the rule 'यङो वा' 2651 ). Similarly the rule 'नेर्गदनद etc. ( 2285 ) directs णत्व to नि ( प्रणिहन्ति ) but as हन् is expressed by adding श्तिप् ( हन्ति ) after it, the नि cannot have, by this rule, the णत्वविधि in यङ्लुक् as प्रणिजङ्घनीत् ।

2. शपा—By शप् :—( This शप् is a Vikarana ). The rule 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' ( 261—7.2.49 ) enjoins the augment इट् optionally to the roots mentioned here. But as भृ is pointed out with the affix शप् attached to it ( भृ+शप्= भर ) it will not have, in its यङ्लुक् form, the augment इट् । Thus बर्भर्त्ति, बरिभर्त्ति, बरीभर्त्ति are without इट् ।

3. अनुबन्धेन—By an अनुबन्ध or an indicatory ( as the eliding word—क् in क्त and क्तवतु or ल् उ in लुङ् &c.) ; Direction by अनुबन्ध is possible in two ways ( 1 ) by स्वरूप i.e. by attaching an अनुबन्ध such as ङ to the root itself and (2) by an इत्संज्ञकपद or word :—

( 1 ) By स्वरूप is illustrated in the rules 'शीङः सार्वधातुके गुणः' ( 2441—7.4.21 ) and 'दीङो युडचि' ( 2507—6.4.63 )—शेशितः—देदियतः—( शी+यङ् लुक् तस् )—( दीङ् यङ् लुक् तस् ) where शी and दी are gunnated in the अभ्यास by the rule 'गुणो यङ्लुकोः' ( 2630—

7.4.82 ) and not by the rules cited above ( 'शीङः सार्वे'—and दीङो युङचि ).

( 2 ) इत्संज्ञकपद is exemplified in the rule 'अनुदात्तङित आत्मनेपदम्—( 2157—1.3.12 ). Now the root स्पर्ध् is अनुदात्तेत and the root शीङ् is ङित् but they will cease to be so ( आत्मनेपद ) when यङ्लुक् follows—पास्पर्द्धीति, शेषयीति ( स्पर्ध् + यङ्लुक् + तिप् :—शी+यङ् लुक्+तिप् ) ।

4. गणेन—By a गण—a class or group :—This is illustrated in the rules 'रुधादिभ्यः श्नम्' ( 2543—3.1.78 ) and 'दिवादिभ्यः श्यन्' ( 2505—3.1.69 ) etc, But भिद् (a root of the रुधादि class ) and दिव् have no श्नम् ( ण ) and श्यण् ( य ) in their यङ्लुक् forms—बेभिदीति देदिवीति ।

5. यत्रैकाज्ग्रहणम्—By the mention of एकाच् :—It is illustrated in the present rule एकाच उपदेशेऽनुदात्तत्—which prohibits the augment इट् to वलादि आर्द्धधातुक affixes with reference to एकाच् ( single अच् or vowel-consisting ) roots. But witness बेभिदिता [ भिद् + यङ् लुक् ता ( लुट् ) ] and चेच्छिदिता [ छिद्+यङ् लुक् ता ( लुट् ) ] where this rule does not hold good and we have the augment इट् prefixed to वलादि आर्द्धधातुक—ता ।

In this verse श्तिपा शपा etc., take the word यद् in यद् गणेन च to mean यत्र—where ( in which rule ).

It is thus explained by prof, Kielhorn in his valuable and faithful translation of परिभाषेन्दुशेखर:—

P. CXX., 3. ( परिभाषा—120. ( ग ) page 517 ).

"( Of operations which concern primitive roots there are )

five ( that do ) not ( take place ) in case ( those roots ) are followed by यङ् लुक्; they are :—[(a) and (b) an operation that may be taught in a rule ) in which ( the primitive root ) is put down with ( the termination ) ति or with ( the Vikarana ) शप् (c) ( an operation that may be taught in a rule ) in which ( the primitive root) is put down with an Anubandha or Anubandhas attached to it as well as an operation which is stated ( to concern generally all primitive roots ) that have a particular; Anubandha or particular Anubadhas ( attеched to them ). (d) ( an operation ) that may concern a whole class ( or group of primitive roots ) ; and (e) ( an operation that may be taught in a rule ) in which the word एकाच् mono-syllabic has been employed."

Examples are nearly the same as we have given above.

N. B.—( This परिभाषा—is not adopted by the भाष्यकार hence Nagesha gives a different explanation and एकाच in the rule is taken up to be related with the rule श्रुकः किति ( 2381—7.4.11 ). See the शब्देन्दुशेखर—'under this rule beginning with परेतु etc. and also the परिभाषेन्दुशेखर under this परिभाषा No. 120—( ग ) P.—105 ) ].

एतच्च etc.—The existence of this परिभाषा ( श्तिपा शपा etc. ) is inferred from Panini's using the word एकाच् in the rule ( except this rule 'एकाच उपदेशेऽनुदात्तात्' there is no other ज्ञापक rule where—by we can come to a conclusion that Panini admits the authority of this परिभाषा) । Hence भट्टोजि says इहैव etc. ( In this very rule

etc. ) Had Panini used the word 'अच:' only in place of एकाच then this अच: would have been sufficient to give the sense of एकाच (consisting of only one vowel) hence through the authority and significance of एक in the rule, roots having more than one vowel ( अनेकाच्कोपदेश ) have been excluded ( व्यावर्त्त्यते ) ।

तेन etc.—Now in reply to the rejoinder 'why the augment इट् is prefixed to the वलादि आर्द्धधातुक (in लुङ्) affix (तिप्) coming after the root वध which is the substitute of हन् which istaught to be एकाच् ( monosyllabic ), he says तेन etc. It is true that the root हन् is replaced by the root वध in लिङ् and लुङ् ( cp.—'हनो बधलिङि' ( 2433—2.4.42 ) and 'लुङि च' ( 2434—2.4.43) ). But it ( वध ) ought not to be considered एकाच् or monosyllabic by स्थानिवत्त्व for in the rule 'हनोवध etc.'—वध is taught to be अनेकाच्क or having more than one vowel. Hence the rule एकाच उपदेशेऽनुदात्तात्—will not hold good there and cosequently वध will have the angment इट—giving अवधीत् ( in लुङ् ) though the prohibition of the augment इट् applies to हन् which gives हन्तुम् and not हनितुम् ।

[ N. B.—Here we quote the opinion of Nagesha as to the authority of this परिभाषा ।

"एकाच उपदेशेऽनुदात्तात्—( ७।२।१० ) इति सूत्रे एकाज् ग्रहणेन एकादेशानुमत्या एषा (परिभाषा) ज्ञाप्यते।अन्यथा उपदेशेऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति तदपि न भाष्यानुक्तत्वादेकाज्ग्रहणस्य वधिव्याहत्त्यर्थमावश्यकत्वाच्च । न च वधि: स्थान्युपदेशे एकाजेवेति वाच्यम् । साक्षादुपदेशसंभवेन एतद्विषये स्थान्युपदेशाग्रहणाद् उपदेशत्वावच्छेदेन एकाजित्यर्थाच्च । किञ्च उत्तरार्थम् एकाज् ग्रहणम् ।

अतएव जागरितवान् इत्यादौ उपदेशे उगन्तत्वमादाय 'श्र्युकः किति' ( ७।२।११ ) इति इट् निषेधो न। तत्रोपदेशे इत्यनुवृत्तिश्च स्तीर्णमित्यादौ इण्निषेधाय इत्याकरे ( =महाभाष्ये ) स्पष्टम्''। इत्यादि—

परिभाषेन्दुशेखर Page—150.

Translation :—'( The existence of ) this ( परिभाषा ) is indicated by the word एकाचः in the rule P. VII. 2. 10., the employment of which proves ( that at any rate ) part of the Paribhasha must have been adopted by Panini ; ( had the Paribhasha ) on the other hand ( not exist ) then एकाचः ( in the rule P. VII. 2. 1o.), would clearly be superfluons, because (the roots) which in the original enunciation ( उपदेश ) are not monosyllabic, are all *Udatta*.

'All this ( can ) likewise not ( be admitted to be correct ), for the above Paribhasha has not been given in the Bhashya and the word एकाचः ( in the rule P. VII. 2. 10., which was supposed to indicate the existence of it because it would otherwise be superfluons ) is necessary ( in that rule ) to exclude ( from it ) वध, ( the substitute of हन् ) । Nor can one object that, as the original ( हन् ) is monosyliabic in the original enunciation, ( its substitute ) वध may ( likewise be regarded as ) monosyllabic, ( and that it therefore cannot be excluded from P. VII. 2. 10. by the word एकाचः ) ; for when it is possible ( for the expression एकाच उपदेशे in P. VII. 2. 1o ) to denote something which is actually enunciated as monosyllabic, ( that expression ) cannot, so far as regards the ( prohibition of इट्

taught in that rule), be teken to denote something which (though it is itself actually enunciated as dissyllabic or polysyllabic), is substituted for something else which is enunciated as monosyllabic; besides (the words उपदेशे एकाच्) denote that which in *any and every* original enunciation is monosyllabic. Moreover the word एकाच (of P. VII. 2. 1. is necessary) for the subsequent (rule P. VII. 2. 11.;) it is (namely) for the validity of एकाचः in P. VII. 2. 11. that (the addition of) इट् is not by that rule forbidden in (the formation जागरितवान्) etc., notwithstanding that (जागृ) in the original enunciation does end with one of the vowels (contained in the Pratyahar) उक्। उपदेशे 'in the original enunciation' however, is valid in the latter rule in order that that rule may forbid the addition of इट् in the formation of forms like स्तीर्णं (from स्तॄ) etc. All this is clear from भाष्य etc.—Kielhorn's परिभाषेन्दुशेखर P.—519—20.]

अनुदात्ता etc.—We shall later on collect the roots that are अनुदात्तs। Thus एधाम्+क्ल+थास्=एधाम्+क्ल क्ल से=एधाम् चक्लसे=एधाञ्चक्लषे। आथाम्= आथे by टित आत्मनेपदानां टेरे'।

मित—। 'ऋत इद्धातोः' (२३९०—७।१।१००) इत्यतो धातोरित्यनुवर्त्तते। नेड्वशि कृति' (२९८१—७।२।८) इत्यतो न इति च। 'एकाच' इति 'अनुदात्ताद्' इति च पञ्चम्यन्तम्—धातोर्विशेषणम्। तदाह—उपदेशे यो धातुरित्यादि। उपदेशे इति पानिणीये धातुपाठे इत्यर्थः। एकः अच् यस्येति वहुव्रीहि नं कर्म्मधारयः व्याख्यानात्। आर्द्धधातुकस्येति। इड्विधानं आर्द्धधातुकाधिकारे विहितम् नान्यत्र, तेन सूत्रेऽनुक्तमपि अनुवृत्तेरलभ्यमपि अर्थवलादिदं लभ्यते इति भावः। उपदेशे इत्युभयान्वयीति। उपदेशे इति पदम् मध्यवर्त्तित्वात् 'मध्यमणिन्यायेन'—'देहलीदीपन्यायेन पूर्व्वोत्तराभ्यां

संबध्यते' इति तु तत्त्वबोधिनीकाराः—'एकाच' इत्यत्र 'अनुदात्तादि'त्यत्र च अन्वेति। यदि 'उपदेशे' इति 'एकाचः' इत्यत्र अन्वितो नाभविष्यत्तर्हि कर्त्तुमित्यत्र इण्निषेधो नाभविष्यत्। कृञ्धातोरुदृदन्तैरित्यादिना—अनुदात्तत्वस्य वक्ष्यमाणत्वेऽपि तुमुन्-प्रत्यये कृति ञ्नित्यादिर्नित्यम् ( ३६८६—६।१।१९७ ) इत्याद्युदात्तत्वात्। यदि च उपदेशे इति पदम् अनुदात्तादित्यत्राप्यन्वितो न स्यात्—तर्हि एधाञ्च कृषे इत्यादौ इण्-निषेधो न स्यात्—नहि द्वित्वे कृते कृञ एकाजुदपदेशत्वं सम्भवति किन्तु अनेकाच्—त्वमेव। तत्रोत्तरान्वयस्य कर्त्तुं गन्तुमित्यादौ इण्निषेधः फलम्। नित्स्वरेण सम्प्रत्यु-दात्तत्वात्। पिपक्षति (पच्+सन् ति) बिभित्सति (भिद्सन्ति) इत्यादौ इण्निषेधस्तु पूर्व्वान्वयस्य फलम्। द्वित्वेकृते अ..काच्त्वादिति तत्त्वबोधिनी।

एकाच इति किमिति—सूत्रे यदि 'एकाचः' इति पदस्य ग्रहणं क्रियते तर्हि उपदेशे इति पदेन तस्य अन्वयः अवश्यं स्वीकर्त्तव्यः। तस्मादेकाचः इति पदस्य ग्रहणं मास्तु केवलं 'उपदेशेऽनुदात्तादित्येव सूत्रमस्तु का क्षतिरिति चेत् न। यङ् लुकि इट् निषेधस्य व्यावृत्त्यर्थं व्यपोहार्थं यथा स्यात्। यङ्लुकि एकाचां धातूनाम् पचिभि-द्यादीनाम् अनेन ( २२४६ ) सूत्रेण इण्निषेधो यथा न प्रवर्त्तते ( किन्तु इड्विधीयते एव) इत्येवमर्थमिड्ग्रहणम्। अयं स्पष्टतरोऽर्थः—अनेन सूत्रेण सनि एकाचः धातवः पचिभिद्यादयः ( पिपचति बिभित्सति इत्यादयः ) इटं न लभन्ते। किन्तु यङ्लुकि एत एव धातवः अनेन सूत्रेण इटं न, लभन्ते इति न किन्तु इटं लभन्त एव तत्र इड्विधीयत एव। कुत इति चेत् सूत्रे एकाज्ग्रहणसामर्थ्यादिति ब्रूमः। कथं कृत्वा ज्ञायते इति चेत्। एकाजित्येतेनैव। किंच् तत्र मानम्। अत्राह स्मरन्तिहीति पूर्व्वाचार्य्या इत्यर्थः।

'यत् ( यत्र ) श्तिपा, शपा, अनुबन्धेन गणेन च निर्द्दिष्टम् धातुपदमित्यर्थः यत्र च एकाज् ग्रहणं ( क्रियते ) एत—एतानि पञ्च यङ्लुकि न भवन्ति—( विध्यर्थ-कानि सूत्राणि विधिपराणि निषेधार्थकानि च सूत्राणि निषेधपराणि न भवन्तीत्यर्थः )। यत्र सूत्रे श्तिपा इति प्रत्ययेन ( इक् श्तिपौ धातुनिर्द्देश इति वार्त्तिकात् ) निर्द्दिष्टः कश्चिद धातुर्दिश्यते स धातुस्तेन सूत्रेण विहितगुणवृद्धिनिषेधादिकं कार्य्यं यङ—

लुकि न लभते। यथा—'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहति-शाम्यतिचिनोतिदेग्धिषु च' (२२८५—८।४।१७) इति सूत्रेण गदनदादेः प्राक् स्थितस्य 'नि'रित्युप-सर्गस्य णत्वं विधीयते—तथा च प्रणिघ्नन्तीत्यादिरूपं भवति। परन्तु यदा 'हन्ति' इति हन्धातुः श्तिपा श्तिप्प्रत्ययेन ( हन्+श्तिप्=हन्+ति ) निर्द्दिष्टः अतः हन्धातोर्यङ्लुकि तस्मात्पूर्व्वस्थितं निरित्यव्ययं 'अनेनैव' सूत्रेण णत्वं न लभते; तथाच प्रन्यजङ्घनीदित्यादि रूपं सिध्यति।

शपा निर्द्देशो यथा 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' ( २६१८—७।२।४९ ) अत्र भृधातोः सनि इटविकल्पः प्राप्तः यथा—विभरिषति बुभूर्षति इति किन्तु शपा निर्द्दिष्टत्वाद् यङ्लुकि नित्य एव इण्निषेधः—यथा वर्भर्ति वरिभर्त्ति वरीभर्त्ति ( 'रुग्रिकौ च लुकि' २६५२ तथा—ऋतश्च २६५३ ) इति रुकि रिकि रीकि च रूप-त्रयम्। तत्त्वबोधिन्यां तु 'तेन विभर्त्तेः सनि विभरिषति' इत्यत्र 'सनीवन्तर्ध' इति इड्विकल्पो न, किन्तु नित्यमेवेट्' इत्युक्तं; तच्चिन्त्यम् 'बुभूर्षति' इत्यस्यापि भ्रियतेः पाक्षिकत्वादिति दिक्।

अनुबन्धेन ( अनुबन्धो यथा क् इति क्तक्तवत्वोः, ल् उ च लुटि ) निर्द्देशो द्विधा, स्वरूपेण इत्संज्ञकेन पदेन च। तत्र स्वरूपेण यथा—'शीङः सार्व्वधातुके गुणः' (२४४१—७।४।२१) 'दीङो युडचि क्ङिति' ( २५०७—६।४।६३ ) इति च। अत्र एकेन शीङो गुणो विधीयते अन्येन दीङो युट्। यङ्लुकि परे तु तदेतत्सूत्रद्वयमपि व्यर्थम् यथा—शेशितः देदितः ( यङ्लुकि शीङोर्दीङश्च तसि रूपम् ), इत्संज्ञकेण पदेन यथा—'अनुदात्तङित आत्मनेपदम्' ( २१५७ ) तदेतत् सूत्रं यङ्लुकि न प्रवर्त्तते, यथा शीङोर्यङ्लुकि शेशयीति इति परस्मैपदित्वमेवेति द्रष्टव्यम्। गणेन निर्द्देशो यथा—वेभिदीति ( भिद्+यङ्लुक तिप् ) अत्र भिद्धातौ रुधादित्वेऽपि 'रुधादिभ्यः श्न'मिति श्नम् न। एकाजग्रहणेन निर्द्देशो, यथा अत्रैव; तेन वेभिदिता ( भिद् यङ्लुक् लुट् ता ) चेच्छिदिता ( छिद् यङ्लुक् लुट् ता ), इत्यादिषु इण्निषेधो नास्ति।

एतच्चेति—एतत् श्तिपाशपेति परिभाषाशास्त्रमित्यर्थः। इह अस्मिन् सूत्रे एकाज्-

ग्रहणेन 'एकाचः' इति पञ्चम्यन्तपदस्य ग्रहणेन ज्ञाप्यते अनुमीयते। एकाजिति श्लोकांश-मात्रग्रहणेन एकदेशानुमत्या—( यो हि कस्यचिद् विषयस्य एकांशमपि गृह्णाति स तेनैव ग्रहणेन कृत्स्नमपि विषयं गृह्णाति इति एकदेशानुमतेरर्थः—परिभाषेयं यदि पाणिनेरभिमता नाभविष्यत् तर्हि एकाच उपदेशेऽनुदात्तादित्यत्र—एकाज्ग्रहणं नाकरिष्यत् किन्तु 'अच उपदेशेऽनुदात्तात्' इत्येवमसूत्रयिष्यत् इति फलितार्थः )—कृत्स्नापि परिभाषा गृह्यते इति भावः।

न च शितपाशपाद्यंशे कथमिदं ज्ञापकमिति वक्तुं शक्यम्। एकदेशानुमतिद्वारा सर्व्वत्र ज्ञापनस्य 'उपपदमतिङ्' इत्यादौ दृष्टत्वात्। अतएव तत्र 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति सिद्धमित्युक्तम्। अनन्यार्थैः स्यति-हन्तिभरेत्यादिभिः शितपादिभिरेव ज्ञापनसंभवाच्च। 'अपरस्पराः'—इति सूत्रे सातत्य—ग्रहणेन एकदेशानुमत्या 'लुम्पेदवश्यमः कृत्ये' इत्यादि पूर्व्वाचार्य्यश्लोको ज्ञापित इति तु तत्रैवावोचाम। मनोरमायां त्वेकदेशानुमतिद्वारा पूर्व्वाचार्य्यपठितपरिभाषाया ज्ञापनस्य—'गतिकारकोपपदानामित्यादौ दृष्टत्वादित्युक्तम्। तदयुक्तमिति नव्याः। 'गति-कारकोपपदानां—' इत्याद्येव हि पूर्व्वाचार्य्याणां परिभाषा। न च तज्ज्ञापनं तत्रैव दृष्टमिति युज्यते वक्तुमिति तत्त्वबोधिनी (३४८ पृष्ठे)। ननु 'हनो वध लिङि' 'लुङि च' (२४३३—२४३४) इत्यत्र वधधातोरनेकाच्त्वेऽपि एकाचो हन्धातोरादेशत्वात् 'स्थानिवदादेश' इति सूत्रेण तस्यापि (वधधातोरपि) एकाच्त्वादिण्निषेधः स्या-दिति प्राप्ते आह—अचः इति। एकाच उपदेशे इति सूत्रे अकृतेऽपि 'एक'ग्रहणे केवल'मचः' इत्येवोक्ते सति ( अच उपदेशे ऽनुदात्तादिति सूत्रे सतीत्यर्थः ) तद्वतः एकत्ववतः ( एकत्वसंख्यां बोधयतः इत्यर्थः ) ग्रहणे सिद्धे यतः पुनरेकग्रहणं करोति तदेकग्रहणसामर्थ्याज् ज्ञाप्यते—यत् उपदेशे सर्व्वत्र एकाजेव न तु कस्मिंश्चिदुपदेशे अनेकाजित्यर्थः। अतएव अनेकाच्कोपदेशो धातुर्व्यावर्त्त्यते—अस्मात् पृथक् क्रियते—एकाजुपदेशस्याविषयो भवतीत्यर्थः। फलितमाह—तेन वधेरिति वधधातोर्हन्त्युपदेशे ( यदायम् उपदेशे हन् धातोः स्थले आदिश्यत इत्यर्थः तदा ) एकाचोऽपि न निषेध इडागमस्येत्यर्थः। तत्र कार ' दर्शयति—आदेशोपदेशे इति—हनोवध लिङि इत्यत्र

आदेशस्य वधेरनेकाच्त्वेन ( वध=व्+अ+ध्+अ ) निर्द्देशादित्यर्थः। अतएव अवधीदित्यत्र इट्भवत्येवेति भावः।

[ 'वधेरिति—यस्तु तद्व्यावृत्तये ( वधिव्यावृत्तये ) अनिट्कारिकासु अदन्तपर्य्युदास उक्तो व्याघ्रभूतिना स एव प्राचा अनुसृतः। 'अदूदृदन्तरुस्नुक्ष्णु शीयुनुक्षुश्विडीङ्श्रिभिः। वृङ्वृञ्भ्यां च विनैकाचः स्वरान्ता धातवोऽनिटः'॥ स चादन्तपर्य्युदास इहोपेक्षितः। सूत्राननुगुणत्वात्। तथाहि 'सर्व्वे' सर्व्वपदादेशा इति न्यायेन क्त इत्यादेः कारित्याद्यादेशस्तस्य यथा स्थानुप्रदेशं गृहीत्वा कर्त्ता हर्त्तेत्यादौ निषेधः प्रवर्त्तते तथैव वधादेशेऽपि प्रवर्त्तमानः केन वार्य्यताम्। अदन्त पर्युदाससामर्थ्यादिति चेत्। न। सूत्रकारेणापर्य्युदस्तत्वादिति भावः।' —इति तत्त्वबोधिनी ३४८ पृष्ठे ]—।

वृत्तौ 'एकग्रहणसामर्थ्यादनेकाच्कोपदेशो व्यावर्त्त्यते' इति यदुक्तं न तन्नागेशसम्मतम्। तथाच तद्वचनम् :—'परे त्वेकाज्ग्रहणव्यावर्त्त्योऽत्र वधिरेव। किञ्च उत्तरार्थमेकाज्ग्रहणम्। अतएव जागरितवानित्यादौ उपदेशे उगन्तमादाय श्र्युकः इति इण्निषेधो न। तत्वोपदेशानुवृत्तिश्च स्तीर्णमित्यादौ इण्निषेधाय इत्याकरे स्पष्टम्। श्लिप श्पा—इत्यादि नास्त्येव, भाष्यानुक्तत्वादि'त्यादि। लघुशब्देन्दुशेखरे—२६९ पृः।

[ N. B.—अत्र भाष्यम्—"एकाच उपदेशेऽनुदात्तात्। १०॥

एकाज्ग्रहणं किमर्थम्—। एकाज् ग्रहणं जागर्त्त्यर्थम्। एकाज्ग्रहनं क्रियते। जागर्त्तेरिट्प्रतिषेधो मा भूत्। जागरिता जागरितुम्। नैतदस्ति प्रयोजनम्। उपदेशेऽनुदात्तादित्युच्यते। जागर्त्तिश्चोपदेशे उदात्तः। न ब्रूमः, इहा" जागर्त्त्यर्थम् एकाज्ग्रहणं कर्त्तव्यमिति। किं तर्हि? उत्तरार्थम्। श्र्युकः कितीतीट्प्रतिषेधं वक्ष्यति स जागर्त्तेर्मा भूदिति। जागरितः जागरितवान् इति। एतदपि नास्ति प्रयोजनम्। जागर्त्तेर्गुण इत्युच्यते। वृद्धिविषये—प्रतिषेधः विषये च स बाधको भविष्यति। तत्र गुणे कृते रपरत्वे अनुगन्तत्वात् इट् प्रतिषेधो न भविष्यति। ननु च उपदेशाधिकारात् प्राप्नोति। उपदेशग्रहणं निवर्त्तयिष्यते। यदि निवर्त्तते। स्तीर्त्वा पूर्त्वा। इत्वोत्वयोः कृतयोः रपरत्वे

चानुगन्तत्वादिट्प्रतिषेधो न प्राप्नोति। नैष दोषः। आनुपूर्व्यात् सिद्धमेतत्। नावाकृते-ट्प्रतिषेधे इत्वोत्वे प्राप्नुतः। किङ्कारणम्। न क्त्वा सेडिति कित्त्वप्रतिषेधात्। इदं तर्हि प्रयोजनम्। आसीर्णं निपूर्ताः पिण्डाः। इत्वोत्वयोरपरत्वे चानुगन्तत्वादिट् प्रतिषेधो न प्राप्नोति। मा भूदेवम्। इट् सनि वेति सनि विभाषा। यस्य विभाषेति प्रतिषेधो भविष्यति। इहार्थमेवतर्हि वध्यर्थमेकाज्ग्रहणम्। वध इट्प्रतिषेधो मा भूत्। वधिषीष्टेति। एतदपि नास्ति प्रयोजनम्। क्रियमाणेऽपि वै एकाज्ग्रहणे वध इट् प्रतिषेधः प्राप्नोति वधिषीष्टेति। किङ् कारणं वध इट् प्रतिषेधः। सन्निपात एकाच्त्वात् प्रकृतेश्चानुदात्तत्वात्। सन्निपाते चैव हि वधिरेकाच् श्रूयते प्रकृतिश्चानुदात्ता। किं पुनः कारणमे विज्ञायते उपदेशेऽनुदात्तादेकाचः श्रूयमाणादिति। यङ्लोपार्थम्। यङ्लोपे मा भूदिति। वेभिदिता वेभिदितुम् चेच्छिदिता चेच्छिदितुम्। एकाच उपदेशेऽनुदात्तादितुपदेशवचनमनुदात्तविशेषणं चेत् कृञादिभ्यो लिटि नियमानुपपत्तिरप्राप्तत्वात् प्रतिषेधस्य (वार्त्तिक)। एकाच उपदेशेऽनुदात्तादितुपदेशवचनम्—अनुदात्तविशेषणं चेत् कृञादिभ्यो लिटि नियमानुपपत्तिः। किङ्कारणम्। अप्राप्तत्वात् प्रतिषेधस्य। द्विर्वचने कृते उपदेशेऽनुदात्ता-देकाचः श्रूयमाणादितीट्प्रतिषेधो न प्राप्नोति। असति इट्प्रतिषेधे नियमो नोपपद्यते। असति नियमे को दोषः। तत्र पचादिभ्य इड्वचनम् (वार्त्तिक)। तत्र पचादिभ्य इड् वक्तव्यः। पेचिव शेकिव। सनश्चेट्प्रतिषेधः (वार्त्तिक)। सनश्चेट्प्रतिषेधो वक्तव्यः। विभित्सति चिच्छित्सति। द्विर्वचने कृते उपदेशेऽनुदात्तादेकाचः श्रूय-माणादितीट्प्रतिषेधो न प्राप्नोति। इह च नीत्तः (नि-दा+क्त)। तत्वेऽनच्कत्वादिट्-प्रतिषेधो न प्राप्नोति। नैष दोषः। आनुपूर्व्यात् सिद्धमेतत्—। नात्र कृते इट्प्रतिषेधे तत्वं प्राप्नोति। किङ्कारणम्। ति कितीत्युच्यते। यदप्युच्यते एकाच उपदेशेऽनुदात्तादित्यु-पदेशवचनमनुदात्तविशेषणमिति चेत् कृञादिभ्यो लिटि नियमानुपपत्तिरप्राप्तत्वात् प्रति-षेधस्य इति। मा भून्नियमः। ननु चोक्तं तत्र पचादिभ्य इड्वचनत् इति। नैष दोषः। उक्तं तत्रथल्ग्रहणस्यप्रयोजनम्। समुच्चयो यथा विज्ञायेत। यत्नि च सेटि किङति च सेटीति। यदप्युच्यते सनश्चेट्प्रतिषेध इति। उभयविशेषणत्वात्,

सिद्धम् । उभयमुपदेशग्रहणेन विशेषयिष्यामः । उपदेशेऽनुदात्तादुपदेशे एकाच इति । यङ्लोपे कथम् । यङ्लोपे च तदन्तद्विर्वचनात् । सन्यङन्तस्य स्थाने द्विर्वचनम् । तत्र सम्प्रसुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः स भवति यः स एकाच् उपदेशे अनुदात्तः । अथापि द्विः प्रयोगो द्विर्वचनम् एवमपि न दोषः । न ह्यस्य ( आचार्य्यस्य ) भिद्यपदेश उपदेशः । किं तर्हि वेभिद्यपदेश उपदेशः । अथापि भिद्यपदेश उपदेश एवमपि न दोषः । अकारेण व्यवहितत्वान्न भविष्यति । ननु च लोपे कृते नास्ति व्यवधानम् । स्थानिवद्भावाद्व्यवधानमेव । न सिद्ध्यति । पूर्व्वविधौ स्थानिवद्भावः । न चायं पूर्व्वस्मादपि विधिः पूर्व्वविधिः । कः पुनरुपदेशो न्याय्यः । यः कृत्स्नः । कश्च कृत्स्नः । य उभयोः । यदि तर्हि य उभयोः स कृत्स्नः स च न्याय्यः । वध इट् प्रतिषेधः प्राप्नोति वधिषीष्टेति । नैष दोषः । आद्युदात्तनिपातनं करिष्यते । स निपातस्वरः प्रकृतिस्वरस्य बाधको भविष्यति । एवमपि उपदेशिवद्भावो वक्तव्यः । यथैव हि स निपातस्वरः प्रकृतिस्वं बाधते एवं प्रत्ययस्वरमपि बाधेत । आवधिषीष्टेति । नैष दोषः । आर्द्धधातुकीयाः सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु । तत्रार्द्धधातुकसामान्ये वधिभावे कृते सतिशिष्टत्वात् प्रत्ययस्वरो भविष्यति" ।]—महाभाष्यम्—७।२।१

के अनुदात्ता इत्यपेक्षायामाह—अनुदात्ताश्चेति—अनुपदमेवेति अनन्तरमित्यर्थः । एधाञ्चकृषे—कृञो द्वित्वम्, उरदत्वम्, रपरत्वम्, हलादिः शेषः, चुत्वम्, थासः सेत्वम् ततः षत्वम् । एधाञ्चक्राथे—आथाम् इत्यस्य 'टित आत्मनेपदानां टेरे' इति एत्वम् एधाम् + चकृ + ध्वे इति स्थिते—

## २२४७ । इणः षीध्वं लुङ्लिटां धोऽङ्गात् ॥८।३।७८॥

दी—। इणन्तादङ्गात् परेषां षीध्वंलुङ्लिटां धस्य मूर्धन्यः स्यात् । एधाञ्चकृढ्वे । एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधाम्बभूव । अनुप्रयोगसामर्थ्यादस्तेर्भभावो

न। अन्यथा हि 'कस्यानुप्रयुज्यते' इति 'कभू—' इति वा ब्रूयात्।

The ष of षीध्वम् and of (i.e. coming after) लुङ् and लिट् become cerebral ( ढ ) when this षीध्वम्, also लुङ् and लिट् follow an इण— ending इणन्त अङ्ग or root ( इण is a प्रत्याहार constituting all the letters from the beginning up to लण except अ।) Thus एधाम्चकृध्व = एधाम्चकृध्वे ( by टित आत्मने etc. )=एधाञ्चकृढ्वे। एधाञ्चक्रे इट्—of first person singular ( उत्तमपुरुष, एकवचन ) has been replaced by ए by टित आत्मनेपद—etc ; similarly वहे, महे etc.

मित—इण् इति प्रत्याहारः। अनेन अइउण् इत्यस्य सूत्रस्य इकारात् आरभ्य लण्सूत्रावधि—वर्णाः संगृह्यन्ते। अनुदित्सवर्णं विहाय पूर्वेणाण्ग्रहणं परेणेण्ग्रहण-मिति भाष्यसिद्धान्तात्। षीध्वम् ( आत्मनेपदी आशीर्लिङ् ) च लुङ् च लिट् च इति षीध्वं लुङ् लिटः (द्वन्द्वः) तेषाम्। 'धः' इति षष्ठ्यन्तं धस्येत्यर्थः। 'अप दान्तस्य मूर्धन्यः' (२१०—८।३।५५) इत्यतो मूर्धन्य इत्यनुवर्त्तते। इण् इत्यनेन तदन्तमङ्गमाक्षिप्यते ; तदाह—इणन्तादित्यादि। इण्कोः ( २११—८।३।५७ ) रित्यनुवर्त्तमानेपुनरिण्-ग्रहणम् कवर्गात् परस्य मा भूदित्येतदर्थम्। तेनेह न पचीध्वम् इति तत्त्वबोधिनी। एधाम् चकृध्वम् इति स्थिते टित—इति एत्वे कृते एधाञ्चकृध्वे इति जाते अनेन धकारस्य ढकारादेशे एधाञ्चकृढ्वे इति। एधाञ्चक्रे इति। इटः एत्वम्, यणादेशः। एधाञ्चकृवहे महे—टित इत्येत्वमिति।

'अस्तेर्भूरि'ति सूत्रबलात् अनुप्रयोगकालेऽपि अस्तेर्भूभावे कृते एधामास इत्यादि पदं न लभ्येत इति मत्वाह—अनुप्रयोगसामर्थ्यात् इति। यतः अयम् असधातुराम्प्रकृतिक—धातुमनुप्रयुज्यते अतः अस्य भूभावो न। कथं जानीमः इति चेत्। उच्यते। अन्यथा-हीति 'कस्‌‌चानुप्रयुज्यते लिटि' इति 'कभ्वनुप्रयुज्यते लिटि' इत्येव वा उच्येत सूत्रकारेण, ननु कृञ्चेत्यादि। कस् इति—कृ+अस्। कस् इत्युक्ते अस्तिना भूभावो लभ्येत। ननु कभ् इत्युक्तौ लाघवमस्ति इति कृत्वा एवं पठ्यते इति चेत्। न। तत्र प्रत्याहार-

क्ञो दुर्ज्ञ यत्वस्य दुर्वारमिति दोष एव। तर्हि कथं क्रसचानु इत्यादि नोक्तमिति चेत्; अनुप्रयोगे अस्तेर्भूभावो यथा न स्यात् इत्येवमर्थं न तथोक्तम्। अतएव—'अनुप्रयोगे तु नास्तेरबाधनमिष्यते' इति 'अतउत्सार्वधातुकसूत्रस्थ'' भाष्यं सङ्गच्छते। स्पष्टञ्चेदं शब्देन्दुशेखरे इति दिक्।

**२२४८। अत आदेः ॥७।४।७॥**

**दी—। अभ्यासस्यादेरतो दीर्घः स्यात्। पररूपापवादः। एधामास। एधामासतुरित्यादि। एधिता। एधितारौ। एधितारः। एधितासे। एधितासाथे।**

दीर्घ (आ) is the substitute of अभ्यास of a root having अत् (अ) for its beginning letter. This overrules पररूप directed by अतोगुणे (191—6. 1. 97). Thus अस्+लिट् अ=अस् अस् अ =अ अस् अ=आ अस् अ=आस (by अकः सवर्णे 85—6. 1. 101). Then एधाम्+आस=एधामास। Similarly एधामासतु: etc. [Note that as a primitive root अस् will not have the form आस in लिट्. In that case it will be बभूव by the rule 'अस्तेर्भूः' but here it is आस because it follows an आम्प्रकृतिक root. Note also that neither अस् nor भू like क्ञ will have आत्मनेपद conjugation; for भाष्य says that कृञ् occuring in the rule आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य (in the active voice) is not the result of प्रत्याहार (see भाष्य on—कृञ्चानु etc. 2239) but it is the primitive root कृ.

एधिता etc—एध+लुट् ता=एध् इट्ता (by आर्द्धधातुकस्येट् etc)= एधिता। Similarly in तारौ तारः। एध्+इट +ता+थास्=एध्+इ+ता+से (by थासः से)=एधितासे। For further clear explanation see Sanskrit Tika below.

मित—। अतः + आदेरितिच्छेदः। 'अत्र लोपोऽभ्यासस्य (२६२०—७।४।५८ इत्यतः अभ्यासस्येत्यनुवर्त्तते। दीर्घ इणः किति (२४५६—७।४।७९) इत्यतो दीर्घं इति च। तदाह—अभ्यासस्येत्यादि। परूपापवाद इति—'अतो गुणे'(१९१—६।१।९९ इत्यनेन विहितं यत् पररूपं तस्येदं वर्त्तमनसूत्रं बाधकम् इत्यर्थः। नित्यत्वात् परत्वाच्चेति भावः। 'कर्त्तुः क्यङ् सलोपश्च' (२६६५) इत्यत्र अइवाचरति अति इत्यत्रास्य नामधातोः 'अ'-रूपस्य लिटि भट्टोजिना यदुक्तं तदेतेन विरुद्ध्यत इत्याहु-स्तत्त्वबोधिनीकाराः। [तथाच तदुक्तिः—

'पररूपापवाद इति—। अपवाद इत्ययं ग्रन्थो नामधातुप्रक्रियास्थस्वग्रन्थेन सह विरुध्यते। तत्र हि अ इवाचरति अति। प्रत्ययग्रहणमपनीय कास्यनेकाजि-त्युक्तेर्नाम्। औ अतुः उः। द्वित्वम् 'अतो गुणे' 'अच आदेः' इति दीर्घः। णल औ वृद्धिरितुरुक्तत्वात्। हलादि—शेषात् प्रागेव परत्वात् 'अत आदे'रिति दीर्घे कृते तु पररूपशङ्कापि तत्र नास्ति इति चिन्त्योऽयं ग्रन्थ इति नव्याः' इति। (तत्त्व-बोधिनी पृ—३४८-४९)]। एधितेति—एध + लुट् त इति स्थिते 'स्यतासी लृलुटो'-रिति शवपवादस्तास्। ततः एध् + तास् + त इति स्थिते, लुटः प्रथमस्य डा रौ रसः' इति डादेशे—एध् + तास् + डा इति डित्वसामर्थ्यादभस्यापि टेर्लोपे—आर्द्धधातुकस्येट्' इति इटि च प्राप्ते—एध + इता इति भवति; ततः एधिता। दीधीवेवीटामिति लघूपधगुणो न। एध + तास् + आताम्=एध + इट् + तास्+रौ = एधितारौ—रि चेति सलोपः। एध + इट् + तास् + झ = ्ध् + इट्—तास्—रस् = एधितारः; रि चेति तासेः स लोपः। ततो रसः सकारस्य रुत्वं विसर्गत्वमिति। एधितासे इति अत्रा-प्यसावेव प्रक्रिया थासः से इति त्वधिकम्। एधितासाथे 'टितआत्मने—' इति आथामित्यस्य आथे जाते रूपम्।

## २२४९। धि च ॥८।२।२५॥

### दी—। धादौ प्रत्यये परे सलोपः स्यात्। एधिताध्वे।

When an affix beginning with a धकार follows, the सकार

elides. Thus एध—इट् तास्—ध्व=एधितास् ध्वे =एधिताध्वे ( टित आत्मने etc—enjoining ए to ध्व ).

मित—। "सस्यार्द्धधातुके:" इत्यत: सस्येत्यनुवर्त्तते तासस्त्योर्लोप इत्यतो लोप इति च। धि इत्यनेन च तदादि: प्रत्ययो लक्ष्यते। तदाह धादाविति—एधिताध्वे इति—एध्इट् तास् ध्व = एध इ ता ( सलोप ) ध्वे ( टित आत्मने ) इति एत्वम्।

## २२५०। ह एति ॥७।४।५२॥

**टी—। तासस्त्यो: सस्य ह: स्यादेति परे। एधिताहे। एधितास्वहे। एधितास्महे। एधिष्यते। एधिष्येते। एधिष्यन्ते। एधिष्यसे। एधिष्येथे। एधिष्यध्वे। एधिष्ये। एधिष्यावहे। एधिष्यामहे:।**

हकार is the substitute of सकार of the affix तास् and the root अस् when an एकार follows. Thus in the first person sing. एध्+इट्+तास्+इट् (इट् वहिमहिङ्)=एध् इ ताह् इ=एध् इ ताह् ए (by टित आत्मने etc. )=एधिताहे। एधितास्वहे एधितास्महे here by 'टित'—वहि and महि are changed into वहे and महे, and तास् has not dropped its स् because no र् or ध् follows.

एधिष्यते etc—एध् इट् स्य त ( इट् by वलादि, स्य for लृट् ) एधिष्यते (षत्व and एकार: by इण्को: and टित etc' ) एधिष्येते—एध् इट्स्य आताम् =एध् इ स्य इयताम् ( by आतोङित: 2235 )=एध् इ स्य इयते ( by टित etc )= एधिष्येयते ( by आद्गुण: )=एधिष्येते ( यलोप by लोपो व्योर्वलि ). एध् इट स्य झ=एध् इ स्य अन्त =एध् इ स्यअन्त =एधिष्यन्ते ( by अतोगुणे cp. भवन्ति etc ). एधिष्यसे by थास: से। एधिष्येथे=एध्+इट्स्य आथाम् ( same as एधिष्येते ; एधिष्यध्वे like एधिताध्वे)। एधिष्ये—एध् इटस्य इ (ए). एधिष्या-

वहे—एध् इट् स्य वहि, स्य=स्या by अतो दीर्घो यञि and वहि=वहे by 'टित etc. Similarly एधिष्यामहे।

भित—। ह:+एति इतिच्छेदः। सस्यार्द्धधातुके इत्यतः सस्येत्यनुवर्त्तते।' तासस्त्योर्लोप इत्यतः तासस्त्योरिति च। तदाह तासस्त्योरिति। अलोऽन्त्यस्येति तासस्त्योः सकारमात्रस्यैव हकारादेशः। हकारस्य अकार उच्चारणार्थः। एतीति एकारस्य ग्रहणम्। एकारस्य च अव्यवहितपरत्वं बोध्यते तेन 'एधितास्वहे' इत्यादौ एकारस्याव्यवहितत्वात् सकारस्य हकारादेशो न। एधिताहे इत्यादि—एध्+इट्+तास्+इट् (उत्तमैकवचनम्)=एध इ ताह् ए (टित—इति उत्तमैकवचनस्य एत्वम्)= एधिताहे। एध् इट् तास् वहि=एध् इतास् वहे=एधितास्वहे। एवम् एधितास्महे। लृटि एधधातौ रूपमाह एधिष्यते इति एध् इट् स्य (वलादित्वादार्द्धधातुकत्वाच्चेट्) त=एध् इस्यते (टित इत्येत्वम्)=एधिष्यते (इण्कोः, आदेशप्रत्यययोरिति षत्वम्) एधिष्येते—अत्र आताम् इत्यस्य आकारस्य इयादेशः (आतोङित) आम् इत्यंशस्य एत्वम् तत्र एधिष्य इय्ते इति स्थिते आद्गुण इति एधिषेय्ते इति जाते लोपो व्योर्वलि इति यलोपे रूपम्। एवम् एधिष्येथे इत्यत्र। ऐधिष्यन्ते—झस्य अन्तादेशे एत्वे अतो गुणे इति पररूपे च पूर्ववत्। एधिष्यसे—अत्र थासः से अन्यत् समानम्। एधिष्यध्वे इट्त्वषत्वैत्वानि। एधिष्ये उत्तमैकवचनस्य इकारस्य एकारादेशे पररूपे पूर्ववत्। एधिष्यावहे एधिष्यामहे अत्र उभयत्र इट्त्वषत्वदीर्घत्वे (अतो दीर्घ यञि) त्वानि।

अधुना एधधातौ लोटि रूपमाह—

**२२५१। आमेतः ॥३।४।९०॥**

**दी—। लोट एकारस्याम् स्यात्। एधताम्। एधेताम्। एधन्ताम्।**

आम् replaces एकार of लोट् विभक्ति। Thus एध+शप्+ते (by टित etc.)=एध+अ+ताम्=एधताम्। एध् शप्+आते=एध्+अ+आताम्=एध +आताम्=एध+इय ताम् (by आतो ङित—२२३५)=एधेय्ताम् (by आद्

गुणः )=एधेताम् ( by लोपो व्योर्वलि ) ; एधन्ताम् अत्र झ=अन्ते=अन्ताम्—then पररूप by 'अतोगुणे'।

मित—। आम्+एत इतिच्छेदः। 'लोटो लङ्वत्' ( २१९८—३।४।८५ ) इत्यतो लोट इत्यनुवर्त्तते। तेनाह—लोट इत्यादि। लोट इति षष्ठ्यन्तमिति द्रष्टव्यम्। अनेकाल् शित् सर्व्वस्येति सर्व्वादेशः। रूपमाह—एधताम् इति। एध्+शप्+ते ( टित इत्येत्वम् )=एध् अताम् ततो रूपम्। एधेताम् अत्र शप्, इयादेशः, गुणः, यलोपः (एध् शप् इट् आताम् (इय्ताम्))। एधन्ताम्—झस्य अन्तादेशे एतः पुनरामादेशे पररूपे च रूपम्।

## २२५२। सवाभ्यां वामौ ॥३।४।९१॥

**दो—। सवाभ्यां परस्य लोडेतः क्रमात् 'व' 'अम्' एतौ स्तः। एधस्व। एधेथाम्। एधध्वम्।**

'व' and 'अम्' come, in order, in the places of ए coming after 'स' and 'व' in लोट्। In other words, से is changed into स्व ( थास्=से=स्+ए=स+व ) and ध्व is changed into ध्वम् (ध्व=ध्वे=ध्व्+ए=ध्व्+अम्)। Thus एध्+शप+से=एध्+अ+स्व=एधस्व। एधेथाम् ( गुणः by आतोङित ( 2235 ) ). एधध्वम्—एध्+अध्वे=एध् अध्वम्।

मित—लोटो लङ्वत् इत्यतः अत्रापि लोट इति षष्ठ्यन्तमनुवर्त्तते, आमेत इत्यतः एत इति च। सवाभ्यामिति च पञ्चम्यन्तम्—सश्च वश्च सवौ ( द्वन्द्वः ) ताभ्यामिति। वश्च आम् चाव मौ अत्रापि द्वन्द्वः। यथासंख्यमन्वयः, तदाह—सवाभ्यां परस्येति। लोडेतः इति लोटः एकारस्य इत्यर्थः। तथाचायं क्रमः—थासः से इति यः से इति भवति तस्य एकारस्य स्थाने वः भवति तेनासौ 'स्व' भवति। एवम् ध्वमित्यस्य लोटि 'टित आत्मने' इत्येत्वे कृते पुनरेतेन सूत्रेण तस्यैकारस्य 'अम्त्वम्' विहितं तेन ध्वमेव भवति। उदाहरणमाह—एधस्व इति—एध्+शप्+थास्=एध+अ+से=एध+स्व=एधस्व ; एवमेधध्वमित्यत्र। एधेथामिति—एधेताम् इतिवत् द्रष्टव्यम्।

२२५३। एत ऐ ॥३।४।९३॥

दी—। लोडुत्तमस्य एत ऐ स्यात्। आमोऽपवादः। एधै। एधावहै। एधामहै।

ऐ is the substitute of ए of the first person singular, dual & plural. This bars आम् directed by 'आमेतः' (2251—3. 4. 90.) Thus एधै etc—एध्+शप्+इट्=एध्+अ+ए=एध+ऐ=एध+आट् (by आडुत्तमस्य—2204—3. 4. 92)+ऐ=एध+आ+ऐ=एधै .(by आटश्च 269—6. 1. 90) and वृद्धिरेचि—72-6. 1. 88). In एधावहै, एधामहै—ध is transformed into धा by अतो दीर्घो यञि; and वहि-महि=वहे-महे=वहै-महै।

मित—। एतः+ऐ इतिच्छेदः। अत्रापि लोटो लङ्वत् इत्यतः लोट इत्यनुवर्त्तते। आडुत्तमस्य इत्यत उत्तमस्य इति च। तदाह लोडुत्तमस्येति। लोट उत्तम—पुरुषस्य इत्यर्थः। आमोऽपवाद इति आमेतः (२२५१) इति सूत्रविहितस्य आम इति भावः। एधै इति—एध्+शप्+इट्=एध्+अ+ए=एध+ऐ=एध्+आट्+ऐ (आडुत्तमस्येति सूत्रात्)=एध्+ऐ (आटश्चेति (२६९) वृद्धिः=एधै (वृद्धिरेचि (७२—६।१।८८) इति पुनर्वृद्धिरेकादेशः)। एधावहै एधामहै इत्युभयत्र अतो दीर्घो यञीति दीर्घः। अन्यदविशिष्टम्। एधधातोर्लङि रूपमाह—

२२५४। आडजादीनाम् ॥६।४।७२॥

दी—। अजादीनामाट् स्याल्लुङादिषु। अटोऽपवादः। 'आटश्च' (२६९)। ऐधत। ऐधेताम्। ऐधन्त। ऐधेथाः। ऐधेथाम। ऐधध्वम्। ऐधे। ऐधावहि। ऐधामहि।

The augment आट् comes in before the roots beginning with a vowel in लुङ् लङ् and लृङ्. This overrules अट् direct-

ed by 'लुङ्लङ्लृङ्क्ष्वडुदात्तः (2206—6. 4. 71). [The object of prohibiting the augment अट् from being prefixed to अजादि roots is to bar पररूप enjoined by अतो गुणे in which case the form would have been एधत aud not ऐधत]. The rule आटश्च (269—6. 1. 90) comes in and enjoins the single वृद्धि substitute in place of the augment आट् (आ) and the following अच or vowel. [We could have the वृद्धि substitute here by the rule वृद्धिरेचि (72—6. 1. 88) also, but as forms like ऐच्छत (इच्छ्+लङ् त) cannot be obtained without this rule (आटश्च) so it has been laid down here.] Thus ऐधत etc—एध्+लङ् त=एध+शप्+त= आट्+एध्+अ+त=आएधत=ऐधत। ऐधेताम्—एध्+शप्+आताम्=आट् +एध्+अ+आताम्=आ+एध+आताम्=आ+एध+इय्ताम् (आतोङितः 2235) आएधेय्ताम् (by आद्गुणः)=आएधेताम् (यलोप by लोपो व्योर्वलि) =ऐधेताम् (वृद्धिः); ऐध्+शप्+झ=एध्+अ+अन्त (by झोऽन्तः)=आ+एध अन्त=आ+एधन्त by पररूप like भवन्ति etc)=ऐधन्त (वृद्धिः); लङ् not being टित्, the rule टित etc does not apply. एध+शप्+थास् =आ एध् थास्=ऐधथाः। So ऐधध्वम्। ऐधे-(ऐध+इ by आद्गुणः). एधा-वहि—महि (by अतोदीर्घ etc.)

मित।—'वृद्धिरेचि' (७२—६।१।८८) इति वृद्धिं वाधित्वा अतो गुणे (१९१—६।१।९१) इति परत्वात् पररूपे प्राप्ते आह—आडिति। आट्+अजादीनाम् इति च्छेदः। अजादिरिति अच् आदिर्येषामिति विग्रहः। लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यतः परमेव आडजादीनामिति सूत्रम्। तत्—लुङ् लङ् इत्यादि सर्व्वमनुवर्त्तते। तदाह लुङादिष्विति। अटोऽपवाद इति—वार्त्तिककृता तु 'वृद्धिरेचि' इति सूत्रबलात्—अटैव ऐधतेत्यादि सिद्धमिति एतत् (आडजादीनामिति सूत्रं) प्रत्याख्यातम्। न च वृद्धिरेचीत्यनेन ऐधतेत्यादि सिद्धावपि 'ऐन्दत्' 'आस्ताम्' 'आसन्' इत्यादि कथमटा

सिद्धं दिति वाच्यम् 'उपसर्गादृति धातौ' इत्यतो धाताविल्यपकृष्य अजादौ धाताविति व्याख्यानात्। आस्तामित्यादौ च अन्तरङ्गत्वात् प्रागेव अडागमे कृते वृद्धौ कृतायां पश्चात् असोरल्लोपस्य अप्रसक्तेरित्यादि ३४९ पृष्ठे तत्त्वबोधिनीग्रन्थे स्पष्टम्। आटश्चेति—वृद्धि-रित्यर्थः, यद्यपि उक्तप्रकारेण वृद्धिरेचीति एत्येधत्यूठ्स्विति वा वृद्धौ सत्यामिदं ऐधतेत्यादि सिद्धं तथापि स्वमते ऐच्छत ऐन्ददित्यादि न सिध्येदिति न्याय्यत्वादिहापि उपन्यस्तम्। ऐधतेति—एध् + शप् + त = आट् + एध् + अ + त = आ एध त। तत—आटश्चेत्यनेन वृद्धौ रूपम्। आडित्यस्य टित्त्वादाद्यन्तौ टकिताविति धातोः प्राक् प्रयोग इति सर्व्वत्र बोध्यम्। ऐधेताम् इति—आताम् इत्यस्य आकारस्य इयादेशे, गुणे, यलोपे, ङित्त्वा-देत्वाभावे च रूपम्। ऐधन्त झस्य अन्त्यादेशे—पररूपे च पूर्व्ववत्। ऐधथाः—लङो टित्त्वाभावात् 'थासः से' (२२३६) इति थासः सेभावाभावे पूर्व्ववद्रूपम्। ऐधेथामिति ऐधेतामितिवत्। ऐधध्वम् शवादयः पूर्व्ववत्। ऐधे इति शपि आडादेशे गुणे च रूपम्। ऐधावहि ऐधामहि इति। अत्र उभयत्र शपि, आडादेशे 'अतो दीर्घो यञि' इति दीर्घादेशे एत्वाभावे च यथोक्तं रूपं सिध्यति। इति लङ् प्रक्रिया।

एधधातोः लिङ्प्रक्रिया—

**२२५५। लिङः सीयुट् ॥३।४।१०२॥**

**टी—। लिङात्मनेपदस्य सीयुडागमः स्यात्। सलोपः। ऐधेत। एधेयाताम्।**

The augment सीयुट् comes in before the आत्मनेपद affixes of the लकार—लिङ्। सलोप etc.—The स of सीयुट् disappears by the rule लिङः सलोपोऽनन्त्यस्य (2211—7. 2.79), the उकार is for facility in pronunciation and the टकार stands as an indicatory (टित्-करणार्थम्). Thus एध्+शप् (this is विधिलिङ् which is a सार्व्वधातुक and therefore शप् comes in)+सीयुट्+त=एध्+अ+सीय्+त=एध-

सीयुत=एध्ईयुत ( सलोप by 2211 )=एधेयुत ( आद्गुणः )=एधेत ( यलोप by लोपो व्योर्वलि (873—6. 1, 65 ). एधेयाताम्=एधेय् आताम्, here there being no letter of the वल्प्रत्याहार the preceding य् does not elide by लोपो व्योर्वलि and we have एधेयाताम् ।.

मित—। यद्यपि टित आत्मानपदानां टेरे इत्यस्मात् परं परस्मैपदानां णलतुसि-त्यादिना परस्मैपदमपि प्रकृतं तथापि व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायात् आत्मानेपदमेवात्र सूत्रेनुवृक्ष्यते न्याय्यत्वात् योग्यत्वाच्चेति बोध्यम्। तदाह लिङात्मनेपदस्येति। सलोप इति। लिङः सलोपः अनन्त्यस्येत्यनेन (२२११—७।२।७९) इतिभावः। सीयुटि—उकार उच्चारणार्थं टकारश्च टित्करणार्थम्। ततश्च सीष्ट इति तिष्ठति। ईय् इत्यस्यापि पुनर्वलि परे यलोपो भवति, अतएव कलापादौ ईत, ईयाताम् ईरन् इत्यादि पठितम्। एधेत इति एध्+शप्+सीयुट्+त इति स्थिते पूर्व्वदर्शितप्रकारेण एध+इय् त इति स्थिते आद्गुणे यलोपे च रूपम्। एधेयाताम् इति अत्रापि पूर्व्ववत् एधेय् आताम्—इति जाते 'आताम्' इत्यस्य आकारस्य वलप्रत्याहारस्थत्वाभावात् यलोपाभावे यथोक्तं रूपं सिध्यति।

## २२५६। झस्य रन् ॥३।४।१०५॥

**टी—। लिङो झस्य रन् स्यात्। एधेरन्। एधेथाः। एधेयाथाम्। एधेध्वम्।**

रन् is the substitute of झ of the लिङ् ( in आत्मनेपद )' Thus ऐधेरन् etc एध्+शप्+सीयुट्+झ=एध्+अ+ईय्+रन्=एध इयरन्=एधेरन् (यलोप and the न् has not become cereberal (मूर्द्धन्य ) by इण्कोः for it is a पदान्त witness the rule पदान्तस्य (198—8. 4. 37 ). एधेथा —एधे+थास् ( गणः यलोपः and थास् becoming थाः ) एधेयाथाम् like एधेयाताम्। एधेध्वम्—एध+इय् ध्वम् ( यलोपः ).

मित—। 'लिङः सीयट्' इत्यतो 'लिङः' इत्यनुवर्त्तते ; तदाह लिङ् इति।

एधेरन्निति एध+शप्+सीयुट्+झ इति स्थिते 'लिङः सलोपेति' सलोपे 'आद्गुणः' इति। 'लोपो व्योर्वलि' इति यलोपे रन्नादेशे च रूपम्। एवमन्यत्र।

२२५७। इटोऽत् ॥३।४।१०६॥

**टी—। लिङादेशस्येटोऽत् स्यात्। एधेय। एधेवहि। एधेमहि।**

अत् replaces इट् the substitute of लिङ् ( in first per. sing. ). Thus एध्+शप्+सीयुट्+इट्=एध्+अ...ईय+अत्=एध+इय्अ (त् elides )=एधेय्अ=एधेय। Similarly एधेवहि एधेमहि—( here, after गुण the यकार elides by लोपोव्योः—" )

मित—। 'लिङः सीयुट्' इत्यतोऽत्रापि—लिङ् इति सम्बध्यते; तदाह लिङा-देशस्येति। इट् वहिमहिङ् इत्यत्रतस्य इटः अदादेश इति बोध्यम्। 'अत्' इत्यत्र त्-कार उच्चारणार्थ इति शब्देन्दुशेखरे 'अचचिः' इति 'दिवऔत्' इति चानयोः सूत्रयो-र्व्याख्यानावसरे निरूपितम्। इत्संज्ञकमेतदित्यन्ये। उच्चारणार्थं वा भवतु इत्त्वार्थं वा भवतु त—कारस्तु उभयत्रापि लुप्यते। तदेवम्—एध्+शप्+सीयट्+इट् इति स्थिते पूर्व्वदर्शित-प्रकारेण—एध+ईय्+अत् इति जाते एधेय् अ इति भवति। तत एधेय इति। एवमन्यत्रापूह्यम्।

**टी—। आशीर्लिङि आर्द्धधातुकत्वाल्लिङः सलोपो न। सीयुट्सुटोः प्रत्ययावयवत्वात् षत्वम्। एधिषीष्ट। एधिषीयास्ताम्। एधिषीरन्। एधिषीष्ठाः। एधिषीयास्थाम्। एधिषीध्वम्। एधिषीय। एधिषीवहि। एधिषीमहि॥ ऐधिष्ट। ऐधिषाताम्।**

( Now in connection with आशीर्लिङ forms he says that—as

आशीर्लिङ् is आर्द्धधातुक so the सकार of सीयुट् does not elide by 'लिङः सलोपोऽनन्त्यस्य' ( 2211 ) which concerns विधिलिङ् or सार्व्वधातुक लिङ्। The सकार existing in सीयुट् and सुट् ( see सुट्तिथोः 2210) becomes cerebral ( मूर्द्धन्य ), being a part of the affixes or augments सीयुट् and सुट् cp. 'आदेश—' ( २१२ )। Thus एधिषीष्ट etc, एध्+आशीर्लिङ्—त=एध्+सीयुट्+सुट्+त ( note that here शप् does not come in for आशीर्लिङ् is आर्द्धधातुक )=एध+इट्+सीयुट्+सुट्+त ( the augment इट् comes because the स of सीयुट् is वलादि आर्द्धधातुक )=एध+इ+सीय्+स्+त= एधिषीय् स् त=एधिषीष्ट (य elides by 'लोपो व्योर्वलि'(873—6.1.60); षत्व of both the सs is by the above way (प्रत्ययावयवत्वात्) and the तकार at the end becomes ट by 'ष्टुना ष्टुः' (1113—8. 4. 43 ); एध्+इट्सीयुट्+ आ सुट् ताम्—(Note that the ruleसुट्तिथोः directs सुट् before त (ताम् ) and not before आ hence it ( सुट् ) stands in the middle ) एधि-षीय् आस्ताम्=एधिषीयास्ताम्। एधिषीरन् here झ is replaced by रन् (by झस्य रन् ) and झ being other than तकार or थकार there is no सुडागम। एधिषीष्ठाः=एध्+इट्+सीयुट्+सुट्+थास्=एध् इ सीय् स् थास्—थ is changed into ठ by—ष्टुना ष्टुः ( 113 )। एधिषीयास्थाम् like एधिषीयास्ताम् ( here the स of 'स्ताम्' is not cerebral for it is inter-vened by आ ). एधिषीध्वम्—easy.

एधिषीय—इट् ( first per. sing. ) is changed into अत् ( अ ) by 'इटोऽत्' ( २२५७ ). एधिषीवहि एधिषीमहि—easy. ऐधिष्ट etc :—These are the लुङ् forms—एध्+लुङ् त=एध्+च्लि+त=एध्+सिच्+त=एध्+ इट्+सिच्+त=आट्( आडजादीनाम् (२२५४) )+एध्+इट्+सिच्+त=आ+ एध्+इ+स्+त=आ+एधिष्ट ( षत्व and टत्व as before )=ऐधिष्ट ( here

वृद्धि comes in by 'आटश्च' (२६९)). एध् + इट + सिच् + आताम् = आट् + एध् + इट् + सिच् + आताम् = आ + एध + इ + स् + आताम् = ऐधिषाताम् ( षत्व + वृद्धिः )। Now to bar the अन्तादेश of झ ( in आ—एध् णिच् + झ ) he reads :—

मित—। आर्द्धधातुकात्वादिति—'लिङाशिषि' ( २२१५—३।४।११६ ) इति सूत्रादार्द्धधातुकत्वमित्यर्थः। आर्द्धधातुकत्वादेव च सीयुटः सलोपो न, 'लिङः सलोपोऽनन्त्यस्य' ( २२११ ) इत्यस्य सार्व्वधातुकमात्रविषयत्वादिति ध्येयम्। सीयुट्सुटो रिति सकारस्य इत्यर्थः। प्रत्ययस्य सीयुटः सुटश्च अवयवत्वादंशत्वात् षत्वमिति आदेश—प्रत्यययोरिति सूत्रात् ( २१२—८।३।५९ )। एधिषीष्ट इति—एध् + इट् + सीयुट् + सुट् + त (आर्द्धधातुकस्येड् वलादेरितीट्) = एध + इ + सीय् + स् + त = एधिषीय् त (षत्वविधिरुक्ता) = एधिषीष्ट (ष्टुनाष्टुरिति तकारस्य टकारादेशः = यलोपः प्रागवत्)। एध् + इट् + सीयुट् + सुट् + आताम् = एध् + इट् + सीयुट् + आ + सुट् + ताम् ( सुट् तिथोरिति तकारात् प्रागेव सुट्, नतु आकारात्प्रागिति द्रष्टव्यम् ) = एध इ सीय् आस्ताम् = एधिषीयास्ताम् ( आकारव्यवहितत्वात् सुटः सकारस्यात्र षत्वाभावः षत्वाभावाच्च तकारस्य टुत्वं न )। एधिषीष्ठाः इति पूर्व्ववत् इट्—सीयुट्—सुट—षत्वष्टुत्वानि ; अन्त्यसकारस्य रुत्वविसर्गौ चेति। एधिषीयास्थाम् इति एधिषीयास्तामितिवत्। सुटःषत्वाभावात् थकारस्य च टुत्वाभावः। एधिषीध्वम्—एध + इट् + सीयुट + ध्व = एध् इषीय्ध्वम् = एधिषीध्वम् ('लोपो व्योर्वलि' (८७३—६।१।६६) इति यलोपः); अत्र 'षीध्वम्' इत्यस्य—इणः इण्प्रत्याहारस्थात् यकारात् परत्वेऽपि 'इणः षीध्वं लुङ्लिटां धोऽङ्गात्' ( २२४—८।३।७८ ) इत्यादिना धकारस्य ढकारादेशो न भवति सूत्रे अङ्गादित्यनेन तस्य (इणः) अङ्गविषयकत्वात् इट इकारस्य च प्रत्ययमात्रविषयत्वेन भक्तत्वात् 'गौणमुख्ययोर्मुख्ये कार्य्यसंप्रत्यय' इति न्यायाच्चेति विवेचनीयम्। एधिषीय इति। एध + इट + सीयुट + इट् (उत्तमैकवचनम्) = एध इ सीय् अत् ( अ )—ततः षत्वं यथोक्तं रूपञ्चेति। एधिषीवहि—महीति स्पष्टम्॥ इदानीमेधधातोर्लुङ्रूपमाह—ऐधिष्ट इति—एध + लुङ् + त = एध + च्लि + त = एध् + सिच् + त = आट् ( आडजादीनामित्य-

नेनाट्) + एध + इट् ('सिच्'—आर्द्धधातुकत्वादिट्) + सिच् + त = आ एध इ स् त = आ एधिष्ट (षत्वं टुत्वञ्च) = ऐधिष्ट (आटश्चेति (२६९) वृद्धिः) ; ऐधिषाताम्—एध् + सिच् + आताम् = आ + एध् + इट् सिच् आताम् = आ एधि सातान् = आ एधिषाताम् = ऐधि षाताम्। अथ झस्य अन्तादेशे प्राप्ते तं वारयन्नाह—

२२५८। आत्मनेपदेष्वनतः ॥७।१।५॥

टी—। अनकारात् परस्यात्मनेपदेषु झस्य 'अत्' इत्यादेशः स्यात्। ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। 'इणः षीध्वं लुङ्लिटांधोऽङ्गात्' (२२४७)। ऐधिढ्वम्।

इड्भिन्न एव इणिह गृह्यते इति मते ऐधिध्वम्। ढधयोर्वस्य मस्य च द्वित्वविकल्पात् षोड़शरूपाणि। ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि। उदात्तत्वाद् वलादेरिट्। प्रसङ्गादनुदात्ताः संगृह्यन्ते।

अत् is the substitute for झ् (of झ), coming after a letter other than अ in the आत्मनेपद। Thus ऐधिषत—एध् + लुङ् + झ = एध् + च्लि + झ = एध् + सिच् + झ = एध + इट् + सिच् + झ = आट् + एध् + इट् + सिच् + झ = आ + एध् + इ + स् + अत् + अ (N. B.—अत् replaces the झ् only and not झ (along with अ (झ = झ् + अ)—आ + एधिषत् + अ = आ एधिषत = ऐधिषत। Why do you say आत्मनेपदेषु? Witness अदन्ति here झ् comes after an अनकार (other than अ) letter but the root is परस्मै—, hence (झ् is not replaced by अत्। Why say अनतः? Witness एधन्ते, प्लवन्ते etc—here एध (एध् + शप् = एध् + अ = एध is आत्मनेपदी but झ् is not replaced by अत् because there is an

अकार ( of शप् ) in एध so the rule does not apply. ऐधिष्ठाः—आट् + एध् + इट् + सिच् + थास्। ऐधिषाथाम् easy. एध् + इट् + सिच् + ध्वम् = आट् + + एध् + इ + स् + ध्वम् = आ एध् इस् ध्वम् (here स् elides by the rule 'धि च' ( 2249 ) and इ stands in place of the elided सिच्; so इ has been a part of सिच् and consequently एधि forms an इन्नन्त अङ्ग; hence the rule 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' applies and we get by ढत्व = ऐधिढ्वम्.) (In case of ऐधिषीध्वम्—observe that इट् was not thus connected with सीध्वम् and hence no ढ for ध )।

Here there are two different opinions :—

( i ) Some ( along with दीक्षित also ) say that the इण् प्रत्याहार of the rule इणः षीध्वम् etc, suggest that any इ ( e. g. the इ of इट् ) is concerned with षीध्वम्, लुङ् and लिट् and ( अङ्गभूत ) will change the following designating itself as an अङ्ग धकार therein, to ढ। Thus ऐधिढ्वम्—

( 2 ) Others hold that the इण् प्रत्याहार of the rule इणः षीध्वम् etc does not so suggest, so that the ध coming after such an इकार will not be transformed into ढकार—thus ऐधिध्वम् is the correct form in their opinion. ( The latter is not instituted in the भाष्य while the former is ).

ढधयोर्वस्य मस्य च etc—There are sixteen forms in all due to the duplication of ढ, ध, व and म. Thus—when the form is ऐधिढ्वम् then because the ढ which is a यर् letter follows an अच् and precede another letter (व् ) which is not an अच् (अनच्) therefore by the rule 'अनचि च' (48—8. 4. 47) it (ढ ) is optionally doubled, hence this gives *two forms*—two ढs (ढ् ढ्व) and one (ढ्व ). Similarly

ऐधिध्वम् gives *two forms* —two धs (ध्ध्व) and one (ध्व). Again by the Vartika 'यणो मयो द्वे वाच्ये' under the rule 'संयोगान्तस्य लोपः' (54—8. 2. 23), we have *two forms* more in ऐधिढ्वम् (once two वs and then one व). Similarly ऐधिध्वम् gives *two forms* more (once two वs and at another time one व). Thus these *two forms* are fourfold and therefore give 2+2+2+2=eight forms. In each case again the last letter म् will once be doubled and at another time remain as it is; thus eight × two = sixteen forms in all. ऐधिषि etc—एध्+लुङ् इट् = आट्+एध्+सिच्+इ = ऐधिषि। Similarly ऐधिष्वहि etc. Now he gives लृङ् forms—ऐधिष्यत—एध्+लृङ् त = आट्+एध्+स्य त = आ+एध्+इट+स्य त = आ एधिष्यत = ऐधिष्यत (षत्व and वृद्धि). ऐधिष्येताम्—आट्+एध्+इट्+स्य+आताम् = आ+एध्+इ+स्य+इय्ताम् (by आतो ङितः—2235) = ऐधिष्येताम् (यलोप)। ऐधिष्यन्त (by पररूप by अतो गुणे). ऐधिष्यथाः easy. ऐधिष्येथाम् like ऐधिष्येताम् and ऐधिष्यध्वम् easy. ऐधिष्ये—(by आद्‌ गुणः 69—6. 1. 87). ऐधिष्यावहि and ऐधिष्यामहि (दीर्घ by अतो दीर्घो यञि—2170—7. 3.101) Though the root एध is अनुदात्तेत् yet when the अनुदात्त pitch disappears (इत्), it becomes उदात्त and hence its वलादि आर्द्धधातुक affixes take the augment इट् and consequently the rule 'एकाच उपदेशेऽनुदात्तात्' (2246) does not apply. By the by, we give a list of अनुदात्त roots :—

मित—। आत्मनेपदेषु+अनतः—इतिच्छेदः। न अत्=अनत् (नञ्तत्) तस्मादिति पञ्चमी। फलितमाह—अनकारात् इति—अकारभिन्नादिति भावः। 'झोऽन्तः' इत्यतः झ इति षष्ठ्यन्तम् अनुवर्त्तते। आत्मनेपदेष्विति च षष्ठ्यर्थद्योतिका सप्तमी। आत्मनेपदावयवस्य झकारस्येति चार्थो भवति। 'अदभ्यस्तात्' (२४७८

—७।१।४) इत्यतः अत् इत्यनुवर्त्तते। तदेतत् सर्व्वं मनसि कृत्वाह—झस्य अत् इत्यादेश इति। झस्य='झ्+अ' इति संघातरूपः। तस्य झकारस्य अदादेशे अवशिष्टेन अकारेण मिलित्वा—'अत' इति भवति इति विभावनीयम्। उदाहरण—माह—ऐधिषत इति। एध्+लुङ् झ इति स्थिते लुङश्च्लेस्तस्य सिच्, तस्य वलादार्द्धधातुकत्वादिट्=आडजादीनाम् (२२५४) इति आडागमः झस्य च पूर्व्वदर्शितनियमेन 'अत्' इत्यादेशः—ततः आदेशप्रत्यययोः (२१२) इति षत्वम् तेन—आ+एध+इ+स्+अत=ऐधिषत। ऐधिष्टाः—आट्+एध्+इट्+स्+थास्=आ+एधिष्थास्=ऐधिष्ठाः वृद्धिः—षत्वम्, थकारस्य ष्टुनाष्टुरितिष्टुत्वम् च। ऐधिषाथाम्—सुगमा प्रक्रिया।

इणः षीध्वमि—(२२४७) त्यत्र मतद्वयमप्यस्ति। तदेकेन मतेन अनेनैव सूत्रेण इट इकारस्य लुप्तसिज्भक्ततया सिजन्तस्य अङ्गस्य अन्तर्भूततया इणन्ताङ्गत्वं सम्भवति तेन धकारस्य ढत्वं तथाच—एध+इट्+सिच्+ध्वम्=आ एध् इस् ध्वम्=आ एधि ध्वम् (धिचेति सलोपः)=ऐधिध्वम् (ततो धकारस्य ढत्वम्)। अपरेषाम् मतमाह इङ्भिन्नएवेति—'विभाषेटः' इति परवर्त्तिसूत्रेण इटो विशिष्य-ग्रहणाद् गोवलीवर्द्दन्यायेन इङ्भिन्न एव इण् इह गृह्यते तेन इणन्ताङ्गत्वं न सम्भवति अतो ढत्वाभावे ऐधिध्वमिति रूपम्। अयं स्पष्टार्थः—यथा 'गौ'रित्युक्ते तद्विशेषस्य वलीवर्द्दस्यापि प्रत्यायने सत्यपि वलीवर्द्दशब्दस्य कथञ्चिद् विशेषविवक्षामादायैव प्रयोगः तद्वदत्रापि 'इणः षीध्वमित्यनेनैव गतार्थत्वेऽपि 'विभाषेटः' इति इड्वचनं विशेषविवक्षावशादेव तेनेटो इणन्ताङ्गत्वं न सम्भवति इति। ढधयोर्वस्य मस्यचेति—षोड़शरूपाणीति—। मतभेदेनेति शेषः। तथाच 'ऐध्—इ—ढ्-वम्' इत्यत्र इकारस्य अच्त्वम् ढकारस्य यर्त्वम् वकारस्य च अनच्त्वं तेन 'अनचिच' (४८—८।४।४७) इत्यनेन सूत्रेण ढकारस्य विकल्पेन द्वित्वम्। तदेकाढं द्विढमिति रूपद्वयम्। मतान्तरेतु धकारस्यापि विकल्पेन द्वित्वे एकधं द्विधमिति रूपद्वयम्, एवं चत्वारि रूपाणि। किञ्च यणो मयो द्वे वाच्ये (५४-) इति वार्त्तिकात् वकारस्यापि प्रत्येकं द्वित्वे एकत्वे च रूपद्वये सति पूर्व्वचतुर्भेदेन सह गुणनेन—(४ × २ = ८) अष्टौ रूपाणि; किञ्च अननैक

वार्त्तिकेण मकारस्यापि पाक्षिकद्वित्वादेकमं द्विममिति पुना रूपद्वयम्। तेन पूर्व्वाष्टभेदेन सह गुणिते सति ( ८×२ ) षोड़श रूपाणि। सम्पद्यन्ते। ऐधिषि इति एधधातोर्लुङि उत्तमैकवचने रूपम्—आ+एध्+इ+स्+इ इति—( वृद्धिफले )। ऐधिष्वहि—महि—सुगमे। ऐधिष्वत इति। एतानि लृङि उदाहरणानि। आडजादीनामिति अत्रापि आट्। तदित्थं प्रक्रिया—आट्+एध्+इट्+स्य+त ( वृद्धिफले )। ऐधिष्येतामिति। आट्+एध्+इ+स्य+आताम् = आ+एधिस्य+इय्ताम् (आतो ङित ( २२३५ ) इति आकारस्य इय् आदेशः )। ततोगुणयलोपवृद्धय इति बोध्यम्। एधिष्यन्त इति। झस्य अन्तादेशे पररूपे च रूपम्। ऐधिष्यथाः स्पष्टम्। ऐधिष्येथाम् इति ऐधिष्येतामितिवत्। ऐधिष्यध्वम् स्पष्टम्। ऐधिष्ये इति आद्गुण इति गुणः। ऐधिष्यावहि—महि—अतो दीर्घो यञि इति दीर्घादेशः। उदात्तत्वादिति—एधधातोरनुदात्तत्वे 'एकाच उपदेशेऽनुदात्तादि'ति इटो निषेधे प्राप्ते वचनम् यद्यपि एधधातुरनुदात्तेत् तथापिअनुदात्तस्य इति लोपे सति परिशिष्टो नानुदात्त किन्तु उदात्तएव। तेन आर्द्धधातुकस्येड्वलादेरितिसूत्रप्रवृत्त्या लुट्—लृट्, लृङादिषु इड्—विहितमिति भावः। प्रसङ्गादिति। अत्र प्रतिज्ञानुसरणं प्रसङ्गः। उक्तञ्च पूर्व्वम्—एकाच उपदेशे' इति सूत्रव्याख्यानान्ते 'अनुदात्ताश्चानुपदमेव संग्रहीष्यन्ते' इति तदिदानीं ते संगृह्यन्ते—

दी—। ऊदॄदन्तैर्यौतिरुक्ष्णु शीङ्स्नुनुक्षुश्विडीङ् श्रिभिः।
वृङ् वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः॥ १॥

Of the अजन्त roots ( ending in vowel )—all the एकाच् roots having only one vowel are remembered (treated) as अनुदात्त ( निहत means अनुदात्त ) except the ऊकारान्त, ॠकारान्त, यु, रु, क्ष्णु, शीङ्, स्नु, नु, क्षु, श्वि, डीङ्, श्रि, वृङ् and वृञ् ( ङ् and ञ elides hence they are also अजन्त ).

मित—। एते संगृहीतधातवः पाणिनिना अनुदात्तत्वेन उच्चारिता इति

विभाव्यम्। तत्र प्राक् अजन्तान् आह—अजन्तेषु ऊदन्तैः (ऊकारान्तैः) ऋदन्तैः (ऋकारान्तैः) च धातुभिर्विना यु रु क्ष्णु शीङ् स्नु नु क्षु श्वि डीङ् श्रि एभिश्च धातुभिर्विना वृङ्वृञ् आभ्याञ्च धातुभ्यां विना सर्व्वे एकाचो धातवः निहताः अनुदात्तास्मृताः पाणिनिशिष्यपरम्परया ज्ञाता इत्यर्थः।

टी—। शक्ल पच मुचिरिच वच विच सिच प्रच्छित्यजनिर्जिर् भजः।
भञ्जभुज् भ्रस्ज् मस्जि यज युज रुज रञ्ज विजिस्वञ्जिसज सृजः ॥२॥
अद् क्षुद् छिद् खिद् तुदिनुदः पद्य भिद् विद्यति विनद्।
शद् सदो स्विद्यति स्कन्दिहदी क्रुध् क्षुधिबुध्यती ॥३॥
बन्धिर् युधिरुधी राधिव्यधशुधः साधिसिद्ध्यति।
मन्यहन्नाप्क्षिप्छुपितप्तिपः तृप्यतिदृप्यती ॥ ४ ॥
लिप् लुप् वप् शप् स्वप् सृपि यभ् रभ् लभ् गम् नम् यमो रमिः।
क्रुशिर्दंशिदिशो दृश् मृश् रिश् रुश् लिश् विश् स्पृशः कृषिः ५॥
त्विष् तुष् द्विष् दुष् पुष्य पिष् विष् शिष् शुष् श्लिष्यतयोघसिः।
वसतिर्दहदिहिदुहो नह् मिह्, रुह् लिह् वहिस्तथा ॥ ६ ॥
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ॥ ६॥ ॥

Of the हलन्त roots ending in consonants the undermentioned one hundred and two are known as अनुदात्त beginning from शक्ल in the 2nd verse and ending in वहि in the sixth verse.

नित—। अथ हलन्तेषु अनुदात्तान् धातून् परिगणयति। ते च संख्यया द्व्यधिक,—शतम् (१०२) इत्याह—शक्ल इति शक् (अनुबन्धरहित एव भाष्ये पाठः), इत्येक एव कान्तेषु अनुदात्तः।

चान्तेषु—पच्, मुच्, रिच्, वच्, विच्, सिच् इति षडनुदात्ता अनिटश्च ( सर्व्वत्र अनुदात्ता धातव एकाच उपदेशे इति सूत्रादनिट इति ज्ञेयम् )।

छान्तेषु—प्रच्छ इत्येकः। प्रच्छि इति प्रच्छधातोरिक्प्रत्ययेन निर्द्देशः।

जान्तेषु—त्यज्, निजिर ( निज् ), भज्, भञ्ज, भुज्, भ्रस्ज्, मस्जि ( मज् ) इति पञ्चदश ( निजिर विजिरित्यादिषु इरित्करणम् इडर्थम् )

दान्तेषु—अद्, चुद्, खिद्, छिद्, तद्, नुद्, पद्य ( पद् इत्यस्य श्यना निर्द्देशः ) भिद्, विद्यति ( विद् इत्यस्य श्यना निर्द्देशः तेन श्यनविकरणो दिवादिर्गृह्यते ), विन्द् ( विद् इत्यस्य श्नमा निर्द्देशः तेन श्नम्विकरणो रुधादिर्गृह्यते ), शद्, सद्, खिद् ( खिद्यति इति श्तन्विकरणस्य श्तिपा निर्द्देशः ), स्कन्द , हद् इति पञ्चदश।

धान्तेषु—क्रुध्, क्षुध्, बुध् ( बुध्यति इति श्यनविकरणस्य श्तिपा निर्द्देशः ) बन्ध्, युध्, रुध्, राध्, व्यध्, शुध्, साध्, सिध् ( दिवादि ), इति एकादशः।

नान्तेषु—मन्, हन् इति द्वौ अनिटौ इति सम्बद्धाते।

पान्तेषु—आप्, चिप्, क्षुप् ( स्पर्शे ); तप्, तिप्, तृप्, दृप्, लिप्, लुप्, वप्, शप्, स्वप्, सृप् इति त्रयोदश अनिट इति ज्ञेयम् एवमन्यत्र।

भान्तेषु—यभ्, रभ्, लभ् इति त्रयः।

मान्तेषु—गम्, नम्, यम्, रम् इति चत्वारः।

शान्तेषु—क्रुश्, दन्श्, दिश्, दृश्, मृश्, रिश्, रुश लिश् ( लिश् अल्पीभावे दिवादिः ), विश्, स्पृश् इति दश।

षान्तेषु—कृष्, त्विष्, तुष्, द्विष्, दुष्, पुष्य, पिष् विष् ( विष्लृ व्याप्तौ ), शिष्, शुष्, श्लिष् इति एकादश।

सान्तेषु—घस् ( घस्लृ अदने ) वस् इति द्वौ।

हान्तेषु—दह्, दिह्, दुह्, नह् ( नहो बन्धने ), मिह ( सेचने ), रुह्, दिह् वह् इति अष्टौ। अनुदात्ताः ( अनिटः )।

एवं समष्ट्या ( एकः + षट् + एकः + पञ्चदश + पञ्चदश + एकादश + द्वौ + त्रयोदश + त्रयः + चत्वारः + दश + एकादश + द्वौ + अष्टौ ) द्व्यधिकंशतमिति द्रष्टव्यम्। शक्

पच्मुचीत्यादिषु सर्व्वत्र द्वन्द्वसमासेन निर्द्देशः। छन्दोरक्षार्थं क्वचित्श्तिपा, क्वचित् श्यनेत्यादिभिर्निर्द्देशः कृत इत्यपि विभाव्यम्। तृप्राति दृप्यति इत्यत्र तु 'तृप् दृप्' इति धातुद्वयम् केचित् तुदादौ चुरादौ च पठन्ति। तत्र तुदादित्वं वारयितुं श्यना इह निर्द्देशः कृत इत्याह तुदादाविति—

**दौ—। तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥७॥**
**तृप्दृपौ तौ वारयितुं श्यना निर्द्देश आदृतः ॥ ७॥ ॥**

The roots तृप् and दृप्, through difference of opinion, are read as तुदादि and चुरादि in the धातुपाठः; but we prefer them to be read in the दिवादि class; so, to bar their तुदादित्व and चुरादित्व they are here read by adding श्यन्विकरण and not without विकरण।

मित—। यौ तृप्दृपौ मतभेदेन तुदादौ चुरादौ च स्थितौ (धातुपाठे इत्यर्थः) तौ (कर्म्म) वारयितुं श्यना श्यन्विकरणेन दिवादित्वेनेत्यर्थः आदृतः (अभ्युपगतः) अस्माभिरिति शेष इत्यन्वयः। कथमेवं विहितमिति चेदत्राहः— दिवादित्वादेव 'शेसुचादीनामितिसूत्रभाष्ये 'तृपितो दृपित' इत्युदाहृतं सङ्गच्छते' इति शब्देन्दुशेखरे स्पष्टमित्यलम्।

**दौ—। किञ्च—, खिद्यपद्यौ सिध्यबुध्यौ मन्यपुष्यश्लिषः श्यना ॥८॥**
**वसिः शपा लुका यौतिर्निर्द्दिष्टोऽन्यनिवृत्तये।**
**णिजिर्विजिश्शलु, इति सानुबन्धा अमी तथा ॥ ९ ॥**

Moreover, to exclude other विकरणs from खिद्, पद्, सिध्, बुध्, मन्, पुष् and श्लिष—they are read by attaching the विकरण श्यन् to them, वस् with शप् and यु with लुक् (लुक्विकरण which is an indicatory of अदादि class). And also (for the same purpose),

निज् विज and शक् are directed by adding the indicatories ( इर् and लृ ).

मित—। ननु खिद्यतीत्यादि कथं श्यना निर्दिष्ट इत्यताह—क्विञ्च इति = अन्नार्थेति तदर्थः। अन्यनिवृत्तये अन्यस्य इतरस्य विकरणस्य निवृत्तये वारणाय खिद्, पद्, सिध्, बुध्, मन्, पुष' श्लिष इत्यादयः श्यना श्यन्विकरणेन दिवादित्वेन निर्दिष्टा उल्लिखिताः। तथा वसिः वस् धातुः शपा ( शब्विकरणेन ) निर्दिष्टः कथितः अस्माभिरिति शेषः। तथा—क्विञ्च, अन्यनिवृत्तये इत्यत्रापि योजनीयम्। निज्, विज्, शक् एते त्रयोऽपि अनुबन्धेन इर् इत्यनेन लृ इत्यनेन च सह निर्दिष्टा इति वचन = विपरिणामेनान्वयः।

दी—। विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते।
व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम्॥ १०॥
रञ्जिमसजौ अदिपदौ तुद् क्षुध् शुषिपुषौ शिषिः।
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसम्मतेः॥ ११॥

The root विद् is seen to be enlisted in the तुदादि class in the grammars of Chandra, Durgasinha (Kalap) and others and also in महाभाष्य; but व्याघ्रभूति and others did not read it here.—This is the custom.

The nine roots रञ्ज, मसज्, अद्, पद्, तुद्, क्षुध्, शुष्, पुष् and शिष्, though clearly not stated in the महाभाष्य, are enlisted here at the instance ( lit. according to the opinion ) of व्याघ्रभूति and others.

N. B.—These nine roots though not expressly mentioned in the महाभाष्य—yet they are not rejected by the भाष्यकार।

मित—। विन्दतीति—विदॢलाभे इति 'लृ'-अनुबन्धकः विद्धातुः। चान्द्र-

दौर्गादेरिष्टः तैः तुदादौ पठित इत्यर्थः। चान्द्र इति चन्द्रनिर्म्मितव्याकरणम, दौर्ग इति दुर्गसिंहो नाम कलापव्याकरणव्याख्याता। किञ्चायं विद्धातुर्भाष्येऽपि तुदादावेव पठितः। व्याघभूतिप्रभृतयस्तु वैयाकरणा इमं धातुं इह तुदादौ न पेठुः न परिगणयामासुरित्यर्थः।

रञ्जिमस्जीति—रञ्ज्, मस्ज्, अद, पद, तुद, चुध्, शुध्, पुष, श्लिष् एते नव धातवः भाष्ये उक्ता धातुपाठेऽनन्तर्भूता न तु प्रत्याख्याता इति बोध्यम्। अतएव नास्ति भाष्येण विरोधः। व्याघ्रभूत्यादिभिस्तु पठिता इति तदनुरोधादिह अनिट्कारिकायामुक्ता अस्माभिरिति शेषः।

**दौ—'स्पर्ध संघर्षे'। संघर्षः पराभिभवेच्छा। धात्वर्थेनोपसंग्रहादकर्म्मकः। स्पर्धते।**

स्पर्ध् means to challenge ( to overpower ). It is intransitive for the object is implied in the meaning because to challenge means 'to call some one to fight.'

मित—'टित आत्मनेपदानां टेरे' ( २२३३ ) इत्यत्र एधधातो रूपप्रदर्शनावसरे 'कत्थान्ताः षट्त्रिंशदनुदात्तेतः' इत्युक्तम् तद्दिष्टोक्तः स्पर्धधातुः तस्यां गणनायां द्वितीयः। अनुदात्तेत्त्वात् 'अनुदात्तङित आत्मनेपदम्' इति आत्मनेपदम्। स्पर्ध इति—संघर्ष इति। परेषाम् अभिभवः पराजयस्तस्य तद्विषयिनी इच्छेति विग्रहः। धात्वर्थेनोपसंग्रहादिति। अत्रेयं युक्तिः—यदि सकर्म्मकः स्यात् तर्हि 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माकर्म्मकाणामणिकर्त्ता स णौ' (५४०—१।४।५२) इति सूत्रेण 'देवदत्ता यज्ञदत्तं स्पर्धयति' इत्यादौ अणिकर्तुर्णौ कर्म्मत्वं न स्यात्। अकर्म्मकत्वाभावात्। यदि चाकर्म्मकः स्यात् तर्हि—धातोरस्य अर्थ एव भिद्येत नहि कञ्चिदनुद्दिश्य स्पर्धा सम्भवति। तस्मात् कर्म्मत्वं नास्ति इति न किन्तु तद्धातोरर्थे अन्तर्भूतं सद् विद्यते न वहिः प्रकटमितिभावः। सुप आत्मनः क्यजिति ( २६५७ ) सूत्रभाष्ये च 'धात्वर्थवहिर्भूतकर्म्मकत्वमेव सकर्म्मकत्वम्' इति विस्तरेण प्रतिपादितम्। तत्त्वबोधिनी-

कारास्तु—'अत्र केचित् । अभिभवेच्छा धात्वर्थस्तथा च स्पर्धार्थकस्य सकर्मकता दृश्यते—'आह्वास्त मेरावमरावतीं या' इति । उदाहरिष्यते च 'स्पर्धायामाङ'—(२७०४—१।३।३१) इत्यत्र स्वयमेव 'कृष्णश्चाणूरमाह्वयते स्पर्धते इत्यर्थः' इति । श्रीहर्षोऽपि प्रायुङ्क्त—'तन्नासत्ययुगान्तं वा वेधा स्पर्धितुम' इति । अतोऽस्य सकर्मकत्वं न्याय्यम् इत्याहुरि'ति । वस्तुतस्त्वत्र ग्रन्थविरोधो नः तत्र स्पर्धधातोरभिभवपूर्वकाह्वाने वृत्तेरिति । उक्तञ्च—

> 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
>
> प्रसिद्धेरविवक्षातः कर्मणोऽकर्म्मिका क्रिया ॥' इति दिक् ।

**२२५६ । शर्पूर्व्वाः खयः ॥ ७।४।६१॥**

**टी—अभ्यासस्य शर्पूर्व्वाः खयः शिष्यन्ते । 'हलादिः शेषः' (२२७९) इत्यस्यापवादः । पस्पर्धे । स्पर्धिता । स्पर्धिष्यते । स्पर्धताम । अस्पर्धत । स्पर्धेत । स्पर्धिषीष्ट । अस्पर्धिष्ट । अस्पर्धिष्यत । 'गाधृ ४ प्रतिष्ठालिप्सयोर्ग्रन्थे च' । गाधते । जगाधे । 'बाधृ ५ लोड़ने' । लोड़नं प्रतिघातः । बाधते । 'नाथ ६ नाधृ ७ याचञोपतापैश्वर्य्याशीःषु' ।**

**"आशिषि नाथ इति वाच्यम्" (वार्त्तिक) । अस्याशिष्येवात्मनेपदं स्यात् । नाथते । अन्यत्र नाथति । नाधते । 'दध ८ धारणे' । दधते ।**

Of the अभ्यास (reduplication) the खय letters (खफछ......कपय्) only, which are preceded by शर letters (शषस), are retained and the शर letters (श्, ष् and स्) elide. Thus here the खय् letters are retained and the beginning ones are dropped so this rule (शर्पूर्व्वाः खयः) overrules हलादिः शेषः (2179—7.4.60)

where the beginning letters only are retained. Thus by 'लिटिधातोरनभ्यासस्य—( 277—6.1.8. ) स्पर्ध्+लिट् त=स्पर्ध् स्पर्ध ए ( by 'लिटस्तझयोरेशिरेच' 2241—3.4.81 )=प स्पर्ध् ए=पस्पर्धे। स्पर्धिता —स्पर्ध्+लुट् ता like एधिता। स्पर्धिष्यते—स्पर्ध्+लृट् ते। स्पर्धताम् in लोट्। अस्पर्धत in लङ्। स्पर्धेत in विधिलिङ्। स्पर्धिषीष्ट in आशीर्लिङ्। अस्पर्धिष्ट in लुङ and अस्पर्धिष्यत in लृङ्।

N. B.—The order of conjugation is—

लट्, लिट्, लुट्, लृट्, लोट्, लङ्, विधिलिङ्, आशीर्लिङ्, लुङ् and लृङ् ( This order should always be kept in mind in our Kaumudi ).

गाधृ means प्रतिष्ठा ( establishment ), लिप्सा ( hankering) ग्रन्थ ( collection )—गाधते etc. बाधृ means लोड़न ( obstruction ) नाथृ and नाधृ means begging etc. Vartikakara says that it should be stated that the root नाथ ( नाथृ ) is used in the आत्मनेपद only in the sense of आशीः ( blessing ) Thus नाथते- elsewhere नाथति ( परस्मै— ). The root दध means to hold दधते—

मित—। 'शर् पूर्व्वौ येभ्य' इत्यतद्गुणसंविज्ञानोऽयं बहुव्रीहिः। तेन शरः ( शषस इत्येषां ) न शेषः किन्तु खयाम् (खफछठथचटतकपाम् ) एव शेषः। 'अत्र लोपोऽभ्यासस्य' (२६२०—७।४।५८) इत्यतोऽभ्यसस्येत्यनुवर्त्तते। तदाह अभ्यासस्येति। शर इति शषसा इति। खय इति खफछठथचटतकपाः इति। हलादिः शेषः इति स्पष्टम्। हलादिः शेषः इति सूत्रात् शेषपदमनुवर्त्त्य शिष्यन्ते इत्युक्तम्। अत्रादि— रित्यप्यनुवर्त्तते। तत्र शर्व्यतिरिक्तवर्णापेक्षया धात्वादिभूता इत्यर्थः। तेन वत्रश्चेत्यत्र चस्य न शेषः। नन्द्राः संयोगादयः ( २४४६—६।१।३ )—इति निषेधस्याप्रवृत्तेः पक्षे रेफस्यापि द्वित्वम्। द्वितीयैकाजवयवस्यैव तन्निषेधात् इति बोध्यम्। पस्पर्धे इति स्पध्+लिट् त=स्पर्ध् स्पर्धत स्पर्ध्स्पर्ध ए ( लिटस्तझयोः—( २२४१ ) इति एतादेश ) पस्पर्धे। स्पर्धितेत्यादीनामयं क्रमः—( लट् लिट् ) लुट्, लृट्, लोट्,

लङ् विधिलिङ्, आशीर्लिङ्, लुङ्, लृङ् इति सर्व्वत्र ऊह्यम्। एषां (स्पर्धि त्वे- त्यादीनाम्) रूपञ्च एधधातुवद् बोध्यम्।

गाधृ इति प्रतिष्ठा—आस्पदं, स्थापनं, अवस्थापनं वा प्रतिष्ठा। एकत्र स्थापनं सन्दर्भो वा। ग्रन्थ (ग्रन्थ्+अच्)। प्रतिघाती बाधनम्। नाधृनाधृ इति। अत्र वार्त्तिकमाह—आशिषीति। अस्यार्थमाह अस्याशिषि एव आत्मनेपदं नान्यत्रेति। उदा- हरति नथातीति। दधधारणे इति। लिटि रूपं वक्ष्यन्नाह—

## २२६०। अत एकहल्मध्येऽनादेशादेर्लिटि ॥६।४।१२०॥

### दो—। लिट्निमित्तादेशादिकं न भवति यदङ्गं तदवय- वस्यासंयुक्तहल्मध्यस्थस्याकारस्य एकारः स्यादभ्यासलोपश्च किति लिटि।

When in लिट्, a कित् (क-eliding) affix follows, then एकार is the substitute of the short अ (अत्) existing between—two non—conjanct ('असंयुक्त---simple' as द् (अ) ध्) consonants which अकार or short अ is a part of a verbal stem (अङ्ग) that (the अभ्यास or the redupicate of which) is not preceded by an आदेश or substitute due to लिट्, and also the redupli- cate (अभ्यास) elides. Thus दध्+लिट् त=दध्+दध्+ए (लिटस्त- झयोरेशिरेच् (2241))=दध्+द (अ) ध+ए=0+द (ए)+ध+ए (Here by this rule the reduplicate or the अभ्यास elides and अ is replaced by ए) Thus we have देधे। This कित्व is instructed in the rule असंयोगात् लिट् कित् (2242—1. 2. 5).

मित—। 'अत:+एकहल्मध्ये+अनादेशादे:+लिटि' इतिच्छेदः। अत इति षष्ठी। एकहल्मध्ये इति सप्तम्यन्तमपि षष्ठ्यन्तं द्रष्टव्यम्। 'एक' शब्दश्चासहाय- वचनः। 'एके मुख्यान्यकेवला' इत्यमरात्। एकमात्रं हलित्यर्थः। अतएव वृत्तौ

असंयुक्तहल्मध्यस्थस्य इत्युक्तम्। अनादेशादेरितिच 'अत' इत्यस्यैव विशेषणम्। तदिह अत इत्यस्य विशेषणद्वयम्—एकहलमध्ये (असंयुक्तहल्मध्यस्थस्य) इत्येकम्—अनादेशादेः (लिण्निमित्तादेशादिकं न भवति यदङ्गम्) इत्यन्यत्। 'घ्वसोरेद्धावभ्यासलोपश्च' (२४७१—६।४।११९) इत्यत 'एदिति 'अभ्यास लोपश्चे तिचानुवर्त्तते। तदाह 'अकारस्यैकारः अभ्यासलोपश्चेति'। 'गमहनजनखनघसां लोपः क्ङित्यनङि' २३६३—६।४।९८) इत्यतः 'किति' इत्यनुवर्त्तते नतु' ङिति' इत्यपि—असम्भवात् 'असंयोगाल्लिट कित्—(२२४२—१।२।५) इति किद्वचनाज् ज्ञापकात्। तत् फलितमाह—किति लिटीति। 'एकहलमध्ये' इत्यस्य व्याख्यानम् 'असंयुक्तहल्मध्यस्थस्येति—एकौ असंयुक्तौ हलौ एकहलौ (कर्म्मधारयः)—तयोर्मध्यम् (षष्ठीतत्) तस्मिन् तिष्ठतीति तत्स्थः, तस्य। व्यञ्जनान्तरेणासंयुक्तव्यञ्जनद्वयमध्यवर्त्तिन इत्यर्थः। अनादेशादेरिति—आदेशः आदिर्यस्येति (बहुव्रीहिः)। न तथा अनादेशादिः तस्य। अङ्गस्येत्यधिकृतं वर्त्तते 'आसप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः' इति भाष्यवचनात्। लिटीति परनिमित्तकसप्तमी अनादेशादेरित्यस्य एकदेशे 'आदेशे' इत्यत्र सम्बद्ध्यते। अतो व्याचष्टे—लिण्निमित्तादेशादिकं न भवति यदङ्गमिति। लिडेव निमित्तम् लिन्निमित्तम्। तस्मात् आदेशः स आदिर्यस्येति वृत्तौ लिण्निमित्तेति विग्रहः। समासान्तः। कप्प्रत्ययः एवञ्च अङ्गमित्यस्य विशेषणमिति विज्ञेयम्। तदयमस्य सूत्रस्य स्पष्टार्थः। लिटं निमित्तं (हेतुं) अवलम्ब्य यस्य अङ्गस्य आदौ आदेशः (वैरूप्यसम्पादकः 'विकृतिविधायकः' वर्णविशेषः यथा—चकणतुरित्यत्र चकारः ककारस्य वैरूप्यसंपादकः रूपान्तरप्रतिपादकः तद्वत् कश्चिद्वर्णः) न विद्यते (अभ्यासे इत्यर्थः) तस्य तादृशस्य (अङ्गस्य—यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम—१९९—१।४।१३) असंयुक्तहलद्वयमध्यस्थस्य अकारस्य (तस्यैवाङ्गस्यावयवस्य) एकारादेशः स्यात् किति लिटि परे इति। किञ्च न केवलमकारस्य एकारादेशः किन्तु अङ्गात् प्राग्वर्त्तिनोऽभ्यासस्यापि लोपः स्यात् किति लिटीतिइति। 'देधे' इत्युदाहरणम्। दध्+लिट् त इति स्थिते द्वित्वे कृते लिटस्तझयोरेशिरेच् इति (२२४१) एशादेशे द्वित्वे च दध्+दध्+ए इति जाते पूर्व्वखण्डे (अभ्यासे दध इत्यत्र) न कश्चिद् विरूपता-

विधायकः वर्णः आदिश्यते। ततः उत्तरखण्डस्य (अङ्गस्य) दध् (द् (अ) ध्) इत्यस्य—अकारस्य एकारादेशे कृते दध्+द् एध्+ए इति सम्पद्यमाने अभ्यासलोपेन ०+देध्+ए=देधे इति सिध्यति। एवं दध्+लिट् आताम=दध्+दध् आते ('टित आत्मनेपदानामिति एत्वम)=०+देध्+आते=देधाते। ननु सूत्रे 'लिटि' इति सकृदेव उक्तम् वृत्तौ तु 'लिण्निमित्तेति' 'क्ङिति लिटि' इति च द्विरनुवध्यते। तदसदितिचेत्। न। इष्टानुरोधेन लिटोत्यावर्त्य आदेशविशेषणमित्यस्य निमित्तस्य क्रियते इति विभावनीयम्। क्ङिति किम—ननाद—(णलः पित्वादेत्वाभ्यासलोपौ न)। लिटि किम। पापच्यात् (यङ् लुक् विधिलिङ्)। थलः कित्त्वाभात् पूर्व्वसूत्रेणाप्राप्तौ 'थलिचे'ति सूत्रमवतारयति।—

## २२६१। थलि च सेटि ॥६।४।१२१॥

दी—प्रागुक्तं स्यात्। आदेशश्चेह वैरूप्यसंपादक एवाश्रीयते। शसिदद्योः प्रतिषेधवचनाज् ज्ञापकात्। तेन प्रकृतिजश्वरां तेषु सत्स्वपि एत्वाभ्यासलोपौ स्त एव। देधे। देधाते। देधिरे। 'अतः' किम्? दिदिवतुः। 'तपरः' किम्? ररासे। 'एक—' इत्यादि किम्? ततसरतुः। 'अनादेशादेः' किम्? चकणतुः। लिट आदेशविशेषणादिह स्यादेव। नेमिथ। सेहे।

'स्कुदि आप्रवणे।' आप्रवणमुत्प्लवनमुद्धरणं च।

The fore-going explanation applies here (also). In other words, when in the perfect (लिट्), the affix थल् having the augment इट follows, then ए is the substitute of the short अ existing between two non-conjunct or simple consonants—this short अ being a part of the verbal stem or अङ्ग that is not preceded by an आदेश or substitute due to लिट, and—

also the अभ्यास or reduplicate elides. Here ( in the rule अतएकहल्मध्ये etc) by the term 'आदेश:' of the expression अनादेशादेः we are led to think that a consonant which is dissimilar in form is meant. This we infer from the prohibition of एत्व and अभ्यासलोप to शसि ( शस ) and ददि ( दद ) in the rule 'न शस-ददवादिगुणानाम्' ( 2263—6. 4. 126 ). Hence, though in the अभ्यासs of दध, पत etc. there are प्रकृति जश् ( natural ज, ब, ग, ड and द i.e. unchanged third letters ) as well as प्रकृति चर् or unchanged चर् ( first letters—च, ट, त, क, प, श, ष, स, ), there must be एत्व of the अ of the अङ्ग and the elision of the reduplicate ( अभ्यास )—in as much as the first letters of the अभ्यासs of such roots are not deformed in the least. Thus the prohibition अनादेशादेः—has nothing to do with देधे, पेततुः etc. To put it in a fuller way :—It is stated in the rule 'अभ्यासे च-र्च' ( 2182—8. 4. 54 ) that 'प्रकृतिजशां प्रकृतिजशः प्रकृतिचरां प्रकृतिचरः' i. e. जश् letters are replaced by जश् letters and चर letters by चर् letters. This is the case in दध, पत etc and शस् दद । As in the लिट form of दध ( दध दध ए ) there is no change ( वैरूप्य ) in the first letter of अभ्यास so also there is no change in the लिट् form of शस् ( शस शस् अ ) and दद(दद दद ए ). Hence if एत्व and अभ्यासलोप were enjoined to all लिट forms alike then the rule 'न शसदद—' becomes meaningless. Therefore it is concluded that एत्व and अभ्यासलोप are enjoined to those लिट् forms alone where the अभ्यास has no dissimilar or deformed ( विरूप ) letter i.e. where the first letter of the अभ्यास is not

changed into another form and not where it (the first letter) is changed into another letter as in जग्मतु: जहसतु: etc. where ग and ह are changed into ज। Thus शस and दद have no एत्व and अभ्यास-लोप for they are specially prohibited from having them (एत्व etc), whereas दध पत् etc have एत्व andअभ्यासलोप, though they have प्रकृति जश (द) and प्रकृतिचर (प) letters in the आदेशादि or अभ्यास, for there is no prohition expressed by the rule 'अतहलएकमध्ये—'' and it is therefore that लिट forms like देधे and पेततु: etc are valid. And consequently the expression 'आदेशश्चेह......एवाश्रीयते' is rightly guessed. देधिरे—दध्+दध्+झ=दध्+इरेच् (by तझयो: etc)=देध्+इरे। Why the rule reads अत: (in अतएकहलमध्ये etc)? Witness दिदिवतु: (where there is इ (in दिव) and not अ, so एत्व and अभ्यासलोप are not enjoined to it). Why अत: (of अत) is made तपर: (which is followed by a त्) i. e. why do you take the short अ only and not the long one (आ) also? Witness ररासे (रास शब्दे+लिट ए)। why the expression एकहल्मध्ये (in the rule)? See that तत्सरतु: (त्सर् छद्मगतौ to creep—त्सर+लिट् अतुस्) has no एत्व and अभ्यासलोप for the त्स of त्सर् is not a simple (एक) consonant but it is a conjunct (संयुक्त) consonat, hence the rule does not apply here. And why अनादेशादे: (of one having no आदेश or deformed letter in the beginning)? Witness चकषतु: (कष —शब्दे+लिट् अतुस्) where the verbal stem (अङ्ग) has a deformed (विरूप) letter (च) for its आदेश in the अभ्यास, so the rule अत etc. does not apply and consequently there is no एत्व and अभ्यासलोप।

लिट् etc.—In the rule अत etc. the word लिटि is taken by Bhattoji twice—once as an adjective to आदेश ( लिण्निमित्तादेशादिकं न भवति यदङ्गम् ) and next as an adjective to एत्व ( अकारस्य एकारो लिटि )। Because लिट is an adjective to आदेश—also ; so we have एत्व and अभ्यासलोप in the लिट् form of णम ( नम् ) प्रह्वत्वे ( to be modest ) and शब्दे च ( to make sound ), and षह ( सह् ) मर्षणे ( to endure to tolerate ) for the ण is changed into न by 'णो नः' ( 2286—6.1.65 ) and ष is transformed into स by 'धात्वादेः षः सः' ( 2264—6.1.64 )—and not by the reason of लिट् following. Hence नेमतुः, नेमुः and नेमिथ and सेहे etc. are valid ( नेमिथ—णम् + लिट् थल् = नम् + नम् + इट् + थल् = ० + नेम् इथ and सेहे = षह् + लिट् ए = सह् + सह् + ए = ० + सेह् + ए )।

The root स्कुदि ( स्कुद् ) means आप्रवण ( to leap and to extract ) :—

मित—सूत्रमिदं "अतएकहल्—" इत्यतः अव्यवहितपरवर्त्ति ; किञ्च तत्र यदुक्तमिहापि तदेव वक्तव्यं तल्लाघवादाह—प्रागुक्तमिति। तथाचायमर्थः—लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्य असंयुक्तहल्मध्यस्थस्य अकारस्य एकारः स्यादभ्यासलोपश्च सेटि ( इड्विशिष्टे ) थलि लिटि च इति। ननु प्रकृतिजशां प्रकृतिजश आदेशा भवन्ति प्रकृतिचराञ्च प्रकृतिचराः इति 'अभ्यासे चर्च' ( २१८२—८।४।५४ ) इति सूत्रे उक्तम्। देधे पेततुः ( दध + लिट् ए—पत् + लिट् अतुस् ) इत्यादावेकत्र ( दध इत्यत्र ) प्रकृति जश् ( द ) आदेशः अन्यत्र च ( पत् इत्यत्र ) प्रकृतिचर् (प) आदेशः। अस्य आदेशस्य निमित्तञ्च लिडेव। तस्मात् लिण्निमित्तादेशादित्वात्—कुत्र इह एत्वाभ्यासलोपौ विहितौ इति चेदवाह—आदेश इति। 'इह' अस्मिन् अत एकहल् मध्येऽनादेशादेर्लिटीति सूत्रे इत्यर्थः। वैरूप्यसंपादक इति। वैरूप्यं विरूपता विकृतिर्वर्णान्तरत्वमिति यावत् तस्य संपादकः प्रापकः। 'आश्रीयते' स्वीक्रियते सूत्रकारेण इति शेषः। अयमर्थः—यस्मिन् खल्वादेशे विधीयमाने स्थानिनः वर्णान्यत्वं भवति तादृश

एव आदेश इह विवक्षित इति भावः । कुत एतज् ज्ञातमिति चेदत्राह—शसिदद्योरिति । 'न शसददवादिगुणानाम्' ( २२६३—६।४।१२६ ) इत्यत्र प्रतिषेधविधानाज् ज्ञापकात् । तथाहि यदि विरूपादेशानामिव सरूपादेशानामपि एत्वाभ्यासलोपौ न भवेताम् तर्हि न शसददवादिगुणानामित्यस्य आनर्थक्यं स्पष्टमेव, भेदाभावात् । तस्मात् यदि एत्वाभ्यास—लोपौ भवतस्तर्हि सरूपादेशानामेव अङ्गाभ्यासानां तौ भवतः न तु विरूपादेशानामप्यङ्गादीनामिति फलितम् । अत्र प्रकृतिजशः प्रकृतिचरश्च वर्णा सरूपादेशाः तदन्ये विरूपादेशाः । तत्रस्थानिसरूपादेशानां (प्रकृतिजश्चरां) पत्वे—विधिरयं (एत्वाभ्यासलोपौ—)पर्युदासस्तेन प्रकृतिजश्चर्षुसत्स्वपि एत्वाभ्यासलोपौ भवत एवेत्याह—तेनेति । प्रकृतिजश्चरां दकारपकारादीनाम् । तेषु दकारपकाराद्यादेशेषु । सत्स्वपि वर्त्तमानेष्वपि । उदाहरणमाह—देभे इत्यादि देभे देधाते इति प्राग् दर्शिते । देधिरे इत्यत्रापि—पूर्ववदेत्त्वभ्यासलोपौ ततो झस्य इरेजादेशे रूपम् । 'अत एकहल्मध्ये—'' इति सूत्रस्थानां वर्णानां प्रत्येकमुपयोगं दर्शयति—अतः किम् इति । दिदिवतुः ( दिव्+लिट् अतुस् ) अत्र दकारस्य स्थानिसरूपादेशेन प्रकृतिजश्त्वं दकारवकारयोश्च एकहल्त्वं किन्तु तयोरकारमध्यत्वं नास्ति किन्त्विकारमध्यत्वमेव । अत एत्वाभ्यासलोपाभावः इति भावः । तपरः किमिति । अत् इति किमित्यर्थः । ररासे इति । रासृ ( रास् ) शब्दे इति धातुः । तस्य आत्मनेपदित्वाल्लिटिरूपम् । अत्र र् स् इत्यसंयुक्तहल्मध्यस्थस्य अवर्णस्य ह्रस्वाभावादेत्वाभ्यासलोपौ नेति बोध्यम् । एक इत्यादि किमिति—एकहल्मध्ये इति किमिति इति प्रश्नः । ततसरतुरिति । त्सरछद्मगतौ इति धातुः । तस्य लिटि अतुसि रूपम् । अत्र अकारस्य मध्यवर्त्तित्वमस्ति किन्तु त्स इति एकः (असंयुक्तः) हल् न भवति तेनायं विधिर्न प्रवर्त्तते इति भावः । अनादेशादेः किमिति—'आदेशादिकं न भवति यदङ्गमि'ति किमित्यर्थः । चकणतुरिति । कण शब्दे इति धातुः । तस्य अतुसि रूपम् । अत्र ककारस्य विरूपादेशश्चकारस्तेनैत्वाभ्यासलोपौ न । संप्रति लिण्निमित्तेति आवर्त्तय व्याख्यानस्य फलमाह—लिट आदेशविशेषणादिति । 'इह' इति नेमिथ इत्यत्र सेह इत्यत्र चेत्यर्थः । णम ( मूर्द्धन्यादिः ) प्रह्वत्वे शब्दे चेति धातुः । तस्य सेटि थलि रूपम् । षह ( मूर्द्धन्यादिः ) मर्षणे इति धातुः । तस्य लिटि

प्रथमैकवचने रूपम् (णम् + लिट्—थल्—षह् + लिट् त = नम् नम् इट् थल्—सह् सह् ए = नेम इ थ—सेह् ए ) अत्र णकारषकारयोर्विरूपत्वमस्ति सत्यं किन्तु एतद् विरूपत्वं लिटं निमित्तमवलम्ब्य न भवति किन्तु क्रमेण 'णोनः' ( २२८६—६।१।६५ ) इति 'धात्वादेः षः सः' ( २२६४—६।१।६४ ) इति च सूत्रद्वयमवलम्ब्यैव । तेन लिण्नि-मित्तत्वाभावाद् विरूपादेशयोरपि एत्वाभ्यासलोपौ भवतः ।

स्कुदि ( स्कुद् ) आप्रवणे । आप्रवणस्यार्थमाह—उत्प्लवनमिति । उत्प्लुत्यगमन-मित्यर्थः—

## २२६२ । इदितो नुम् धातोः ॥७।१।५८॥

दी— । स्कुन्दते । चुस्कुन्दे । 'श्विदि १० श्वैत्ये' । अकर्म्मकः । श्विन्दते । शिश्विन्दे । 'वदि ११ अभिवादनस्तुत्योः' । वन्दते । ववन्दे । 'भदि १२ कल्याणे सुखे च' । भन्दते । बभन्दे । 'मदि १३ स्तुतिमोदमदस्वप्नकान्तिगतिषु' । मन्दते । ममन्दे । 'स्पदि १४ किञ्चिच्चलने' । ( अकर्म्मकः ) । स्पन्दते । पस्पन्दे । 'क्लिदि १५ परिदेवने । शोक इत्यर्थः । सकर्म्मकः । क्लिन्दते चैत्रम्—( laments over Chaitra ) । चिक्लिन्दे । 'मुद १६ हर्षे' । अकर्म्मकः । मोदते । ( मुमुदे ) । 'दद १७ दाने' । ददते ।

The augment नुम् ( न् ) comes after an इदन्त ( इकारान्त ) root, which drops its इत् ( इकार ) । Thus स्कुदि ends in इकार ; hence it is इदित् । So स्कुद + लट् ते = स्कु नुम् द + ते ( मिदचोऽन्त्यात् परः ) = स्कु न् द ते = स्कुन्दते—similarly चुस्कुन्दे ( लिट् ) ।

मित— । इदितः + नुम् + धातोरितिच्छेदः । प्रथम इत् = ह्रस्वइकारः, द्वितीय इत् = इत् संज्ञा । इत् ( इकारः ) इत्—( इत् संज्ञकः ) यस्य ( धातोः ) स इदित्

( बहुव्रीहिः ) तस्य। तेनायमर्थः—यो धातुरिदित् भवति तस्य नुमागमः स्यादिति। नागेशस्तु 'इदित इति कर्म्मधारयेण धातोर्विशेषणम्। तेन इदन्तस्य धातोर्नुम् विधान—वत् चचिङ्ङादौ न दोषः' इत्याह। 'मिदचोऽन्त्यात् परः' इति परिभाषया नुमागमः 'स्कु दि' इत्यस्य अन्त्यादचः उकारात् परो भवति—स्कु दि+लट् ते—स्कु नुम् द ते= स्कु न् द ते (नुम् इत्यत्र उकार उकारणार्थः—मकारस्य चेत्वम् )=स्कुन्दते। एवं लिटि चस्कुन्दे ( अत्र द्वित्वं खयशेषत्वम् ( ककारशेषत्वम् ) कुहोश्चु रिति चुत्वम् ( चकारत्वम्) लिटस्तझयोरिति तकारस्यैत्वे च रूपम् )। वन्दते इति—इदित्वान्नुम्। मदि इति। कान्तिरिच्छा॥ दद दाने इति—इदित्वाभावात् ददते इति शपि रूपम्।

## २२६३। न शसददवादिगुणानाम् ॥६।४।१२६॥

टी—। शसेर्ददेर्वकारादीनां गुणशब्देन भावितस्य च योऽकारस्तस्यैत्वाभ्यासलोपौ न। ददद। दददाते। ददृदिरे।

'ष्वद १८ स्वर्द १९ आस्वादने'। अयमनुभवे सकर्म्मकः ( यथा—आम्रं स्वदते स्वर्दते वा )। रुचावकर्म्मकः।

एत्व and अभ्यासलोप ( the elision of the reduplicate ) are not enjoined to the अ ( existing in the middle of the roots ) of शस्, दद, वकारादि roots ( having a वकार in the beginning as वम् to vomit ) and of that root where the word गुण has been made to operate. In a better way—Neither the अभ्यास appears nor is ए enjoined in place of the अ of such roots—as शस्, दद, वकारादि and that(root) has undergone an operation of गुण (as पृ by गुण becomes पर् and thus begets an अ in the middle (प् ( अ ) र) ). Thus शस—gives ( शस्+अतुस् ( कित् ) ) शशसतुः ; दद gives ( दद दद ए=दंदद ए ) ददद ; वकारादि gives ( वम्+लिट् अतुस=वम् वम् अतुस् ) ववमतुः and गुण-

शब्देन भावित gives ( पॄ + लिट् अतुस् = पर् पर् अतुस् ) पपरतुः । ( Note that पॄ, कॄ, शॄ etc are first changed by गुण ( सार्वधातुकार्द्धधातुकयोः ) into प् अर्, क् अर् and श अर् etc and then the prohibition एत्वाभ्यासलोप )—applies. ददाते etc easy.

षद्द, स्वर्द to taste ; अयम् etc i. e., षद्द and स्वर्द ( both ) are transitive in the sense of feeling, but they are intransitive in the sense 'to taste as. अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा ( नैषधे ) ।

मित—। शसश्च ददश्च वादिश्च गुणश्च—एषां द्वन्द्वः । शसददवादिगुणाः तेषाम । गुणशब्दे अर्श आदिभ्योऽज् द्रष्टव्यः । तेन गुणवान् इत्यर्थो भवति । तेन लब्धार्थमाह—गुणशब्देन भावितस्येति—गुणशब्देन विहितो गुणशब्देन भावित इतिबोध्यम् । अतएकहलमध्ये ऽनादेशादेर्लिटि इत्यतः अत इति 'घ्वसोरेद्धावभ्यासलोपश्च' इत्यतः एदिति अभ्यास लोपश्चेति चानुवर्त्तते—तदाह योऽकार इत्यादि । ददे इत्यादि स्पष्टम् । शस् इत्यस्य उदाहरणम् शशसतुरिति ; वकारादीनाम् इत्यस्योदाहरणम्—ववमतुरिति । गुणशब्देन भावितस्य—पपरतुः चकरतुः इत्यादि । ष्वद ष्वर्द इति—अयमिति प्रत्यासत्त्यभावादपि उभयमनेन विवक्षितम् । प्रत्येकाभिप्रायं वचनमिति च मनोरमातत्त्वबोधिनीकारादयः । सकर्म्मक इति यथैतत् फलमास्वाद्य अदः स्वदस्वेति । अकर्म्मकः यथा—अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा इति नैषधे ।

## २२६४ । धात्वादेः षः सः ॥६।१।६४॥

**दी—। धातोरादेः षस्य सः स्यात् । 'सात् पदाद्योः' ( २१२३ ) इति षत्वनिषेधः । अनुस्वदते । सस्वदे । स्वर्दते । सस्वर्दे । 'उर्द २० माने क्रीड़ायां च' ।**

The cereberal ष occuring in the beginning of a root is

replaced by the dental स. The षत्व in अनुस्वदते is barred by the rule 'सात् पदाद्योः' (2123—8. 3. 111). उर्द to demand respect, to play etc.

मित—। सूत्रे षः इति षकारस्येत्याह—षस्येति। धात्वादेरिति धातुग्रहणं किम्—षट् (अस्य धातुत्वाभावाद् दन्त्यसकारत्वं न)। आदेः किम्! लषति (आदित्वा भावात् न सः)। कथं तर्हि षकारीयति—तस्य नामधातुत्वेन उपदेशान्तर्भावत्वाभावात् (धातुपाठान्तर्गतत्वाभावात्) न सत्वमित्याहुरितिदिक्। उर्द माने इति 'मानश्चित्त-समुन्नतिः' इत्यमरः।

२२६५। उपधायां च ॥ ८।२।७८॥

दी—। धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात्। ऊर्दते। ऊर्दांचक्र। 'कुर्द २१ खुर्द २२ गुर्द २३ गुद २४ क्रीडायामेव'। कूर्दते। चुकूर्दे। खूर्दते। गूर्दते। गोदते—(गुदधातोः अपि लघूपधगुणः)। जुगुदे (असंयोगादिति किस्वान्नगुणः)। 'षूद २५ क्षरणे'। सूदते। सुषूदे।

सेक्-सृप्-सृ-स्तॄ-सृज-स्तृ-स्त्याऽन्ये दन्त्राजन्तसादयः।
एकाचः षोपदेशाः ष्वक्-स्विद्-स्वद्-स्विञ्ज-स्वपस्मिङः ॥१॥

दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपि। ष्वक्कादीनां पृथग्ग्रहणाज् ज्ञापकात्। 'ह्राद २६ अव्यक्ते शब्दे। ह्रादते। जह्रादे। 'ह्लादी २७ सुखे च'। चादव्यक्ते शब्दे। ह्लादते। 'स्वाद २८ आस्वादने'। स्वादते। 'पर्द २९ कुत्सिते शब्दे'। गुद-रव इत्यर्थः। पर्दते। 'यती ३० प्रयत्ने'। यतते। येते। ('अत-

एकहलित्येत्त्वाभ्यासलोपौ )। युत २१ जुत २२ भासने'। योतते युयुते। जोतते। जुजुते। विथृ २३ वेथृ २४ याचने'। विविथे। विवेथे। 'श्रथि २५ शैथिल्ये'। श्रन्थते। 'ग्रथि २६ कौटिल्ये' ग्रन्थते। 'कत्थ २७ श्लाघायाम्। कत्थते। ( चकत्थे ) एधादयोऽनुदात्त तो गताः ॥

अथाष्टात्रिंशत्तवर्गीयान्ताः परस्मैपदिनः। अत २८ सातत्य-गमने'। ( अतएवाततीति = आत्मा—ऊणादिमनिन् )। 'अत आदेः' ( २२४८ )। आत। आततुः। आतुः। लुङि 'आतिस्' 'ईत्' इति स्थिते।

The इक् letters ( इ उ ऋ ऌ ) are lengthened of a root which has रेफ and वकार, ( both of which are ) followed by consonants, as its penultimate letters. Here in the root उर्द—उ is one of the इक् letters, रेफ which is followed by the consonant द is its penultimate letter ; hence the इक् ( उ ) is lengthened—ऊर्दते. ऊर्दांचक्रे—The root is इजादि and also गुरुमान् hence by the rule "इजादेश्च गुरुमतोऽनृच्छः"(2237—3.1.36) it gets आम् and then the अनुप्रयोगः of कृ (कृञ्चानुप्रयुज्यतेलिटि ( 2239—3. 1. 40) ) comes in and lastly कृ becomes आत्मनेपद (as उर्द is itself आत्मनेपदी) by आम्प्रत्ययवत्-कृञोऽनुप्रयोगस्य ( 2240—1.3. 63 ). कूर्दते like ऊर्दते। चुकूर्दे—कुर्द + लिट् त = कूर्द्, ए = कू कूर्द् ए (हलादिः शेषः (= कुकूर्द् ए by ह्रस्वः—2180—7. 4. 59 ) = चुकूर्दे ( कुहोश्चुः—2245—7. 4. 62 ). स्वर्द—to drip स्वर्दते. (धात्वादेः षः सः—2264 ).

All monosyllabic सादि ( having a स in the beginning ) roots the स of which is such that it is dental as well as invariable

followed by an अच् (vowel) excluding सेक्, सृप्, सृ, सृ, सृञ्, सृ and स्त्यै and including षुक्, ष्विद्, स्वद्, स्वञ्, स्वप् and स्मिङ्, are षोपदेश (i. e. instructed or read to be षादि in the धातुपाठ of Panini). By दन्त्य the dental sound—we mean the dental sound only and not such as is dental and at the same time labial. This is inferred from the separate reading of षक्क etc. चाट् etc— from the च in सुखेच it also means 'to make indistinct sound. पद् to eject wind from the गुद or the anus. कत्थ to extol—The thirty-six अनुदात्तेत् roots end here.

Now we shall mention the thirty-eight परस्मैपदी roots ending in the तवर्गीय letters ;—अत to move always. The अभ्यास of अत् receives a long substitute ( becomes आ ) by the rule 'अत आदेः' (7. 4. 70). In लुङ् आतिस् ( आ + अत् + इट् + सिच् ) ई ( the augment ईट् is enjoined here by the rule 'अस्तिसिचोऽपृक्ते' (2225 —7. 2. 96) त्—this being the case we look ahead ;—

मित—। 'सिपि धातौ रुर्वा' ( २४८०—८।२।७४ ) इत्यतो धातोरिति अनुवर्त्तते ; तदाह धातोरिति। 'उपधायाम्' इति षष्ठ्यर्थे सप्तमी तदाह 'उपधाभूतयो— रिति। 'र्वोरुपधाया दीर्घ इकः' । ( ४३३—८।२।७६ ) इत्यतो र्वो ( रकारवकारयोः ) इत्यनुवर्त्तते 'हलि च' ( ३५४—८।२।७७ ) इत्यतो हलीति च, तदाह—रेफवकारयो- रिति हलपरयोरिति च। र्वोरुपधाया इत्यतः 'दीर्घ इकः' इति चानुवर्त्तते—तदाह इको दीर्घ इति। उदाहरणमाह—ऊर्द्दते इति ( उर्द् + शप् + ते ) अत्र धातो रेफवान्तत्वाभावात् र्वोरुपधाया इत्यस्य प्राप्त्यभावः। हलि चेत्यस्य चाप्राप्तिः। ततः उपधायाञ्चेति वचनम्। रेफवकारयोः किम्—पुष्प विकसने—पुष्पति। अत्र उपधायामुकारो विद्यते किन्तु परतो रेफः वकारो वा नास्ति। हल्परयोः किम्— चिरिणोति। जिरिणोति। अत्र उभयत्र रेफात्परतो हल् नास्ति तेनइको दीर्घाभावः।

इकः किम्—अर्वति। नर्दति अत्र इक् नास्ति। ऊर्णोत्यर्थ इति इजादेश्च गुरुमतोऽनृच्छ इति—(२२३७) आम्। कृञ्चानुप्रयुज्यते लिटीति कृञः अनुप्रयोगः। 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य' इति (२२४०) कृञः आत्मनेपदम्। क्रीडायामेवेति। सर्वे क्रीडार्थका इत्यर्थनिर्देशः। 'धात्वादेः षः सः' इत्युक्तं। इदानीं के धातवः षोपदेशा इत्यपेक्षायामाह—षूद इति सेक्-सृप्-स्तृ-सृ-सृज्-स्तृ, स्त्यार्न्य (स्त्यै + अन्ये) एकाचः दन्त्याजन्तसादयः (धातवः तथा) ष्वक्, खिद, स्वद, स्वञ्जि स्वप—स्मिङः षोपदेशाः इत्यर्थः। सेक्...स्त्यै इति द्वन्द्वः। स्त्यै + अन्ये = स्त्यायन्ये। छन्दोरक्षार्थं यकारलोपः कृतः। सेक् इत्यादिभ्योऽन्ये इति चार्थः। दन्त्येति—दन्त्यश्च अच्च—दन्त्याचौ (द्वन्द्वः); तौ अन्तौ अव्यवहितपरौ यस्य सः (बहुव्रीहिः) दन्त्याजन्तः। दन्त्याजन्तश्चासौ सश्च (कर्मधा) दन्त्याजन्तसः, स आदिर्येषां धातूनां ते दन्त्याजन्तसादयः (बहुव्रीहिः)। दन्तोच्चारणस्थानकाः अचपरकाश्च ये सकारास्तदादयः एकाचो धातवः सकारादित्वेन परिदृश्यमाना अपि षादयोविज्ञातव्याः 'ते पाणिनिना षकारादित्वेनैव उपदिष्टा' इति बोध्या इत्यर्थः। किञ्च ष्वक् खिद इत्यादीनां, दन्त्यपरकत्वाभावे अजन्तरहितत्वेऽपि षोपदेशत्वं समाकलनीयमिति। केवलदन्त्य इति। केवलं दन्त एव यस्य उच्चारणस्थानम् न तु दन्तश्च ओष्ठश्च दन्तोष्ठौ (दन्तोष्ठयोः समासे वेति पाक्षिकदीर्घाभावः) तत्र जाते इति विग्रहः। तादृशो नेत्यर्थः कृतः। ष्वक्कादीनामिति स्पष्टम्। कुत्सित शब्दे इति अधोवायुनिःसरणे इत्यर्थः। गुदरवे इति—गुदमपानम् गुह्यमित्यर्थः। कौटिल्ये इति कौटिल्यं वक्रीभवनम्। गताः—समाप्ताः। अथेति—तवर्गीयान्ता—तकारथकारदकाराद्यन्ता इति। सातत्यगमने इति—सततगमने इत्यर्थः (सातत्यं—स्वार्थे ष्यञ्)। अत आदेरिति अनेन सूत्रेण 'आस' इतिवत् अत्धातोरपि आत इति भवतीत्यर्थः। लुङीति। आतिम् इति। आट् + अत् + इट् + सिच् + ईट् + तिप् (अस्तिसिचोऽपृक्ते (२२२४—७।३।९६) इति ईट्) = आ—अत्—ईस्—इत्—आतिस् ईत् इति स्थिते (आडजादीनामित्याट्—'च्लि लुङि' 'च्लेः सिच्' इति सिच्—आर्धधातुकस्येड्वलादे रिति इट्—इत्यादयश्च यथायथं बोध्याः)—

२२६६ । इट ईटि ॥८।२।२८॥

दी—। इटः परस्य सस्य लोपः स्यादीटि परे।
"सिज्लोप एकादेशे सिद्धोवाच्यः।" (वार्त्तिक)।
आतीत्। आतिष्टाम्। आतिषुः।

The स which comes after इट् (the augment) disappears if followed by the augment ईट्। Thus the form being आति ईत्, how it be joined in Sandhi as सलोप, instructed in 8. 2. 28, is असिद्ध (invalid by the rule पूर्व्वत्रासिद्धम् (12—8.2.1), towards सिच् which is taught in 3. 1. 4 (च्लेः सिच्): To effect the Sandhi therefore he reads the Vartika—सिज्लोपः etc. When there is an एकादेश (a single substitute सन्धि) to be performed the elision of सिच् has to be treated as सिद्धः (valid). Thus—आतीत् by अकः सवर्णे दीर्घः (85—6. 1. 101). आतिष्टाम्—आतिस्+तस्=आतिस्ताम् (तस्थस्थस् etc—2199). Here there being no अपृक्तहल् there is no ईट् and therefore the स does not elide आतिषुः—आतिस्+झि (झेर्जुस्—2213) then षत्व and विसर्गः।

मित—। इटः+ईटि इतिच्छेदः। 'रात् सस्य' (३८०—८।२।२४) इत्यतः सस्येत्यनुवर्त्तते। तदाह—इटः परस्य सस्येति। 'संयोगान्तस्य लोपः' (५४—८।२।२३) इत्यतः लोप इति चानुवर्त्तते, तदाह लोप इति। 'इटः' इति पञ्चम्यन्तम्। ननु एवं 'अतिस् ईत्' इत्यत्र अनेन सूत्रेण स—लोपे तस्य असिद्धत्वात् कथं सवर्णदीर्घः इत्यत आह—सिज्लोपे इति—वार्त्तिकमिदम्। सलोप इति वक्तव्ये सिज् ग्रहणं 'झलोझलि' (२२८१—८।२।२६) 'ह्रस्वादङ्गात्' (८।२।२७) 'इट ईटि' (८।२।२८) इति च सूत्रत्रयं सिज्विषयकमिति ज्ञापनार्थम्। तेनेह न—सोमसुत्।

स्तीता। इष्टराम्। विष्टसाम्। 'धिच' इति सूत्रेतु वामनमते सिचो लोपः। भाष्यमते सस्येति भेदो वोध्य इति' इति तत्त्ववोधिनीकाराः। सिज्लोप इत्यादीनामयमर्थ—'(च्लेः सिजिति' इति सिजुपदेशः तृतीयाध्याये वर्त्तते, 'इटईटि' इति सलोपश्च अष्टमाध्याये। तेन 'पूर्व्वत्रासिद्धम्' (१२) इत्यनेन असिद्धाद् दीर्घाभावेन वचनम्। एकादेशे इति—एकादेशे कर्त्तव्ये सतीत्यर्थः। न सिद्ध इति असिद्ध इत्यर्थः। तेन आतिस् ईत् इति सलोपात्—परम्—सवर्णदीर्घेण आतीत् इति भवति। आतिष्टामिति—तसस्तामादेशे (तस्थस्थमिपां तां तंतामः) षत्वे च यथोक्तं रूपम्। आतिषुरिति झेर्जुसि—रुत्वविसर्गयोश्च कृतयो रूपम्। अवशिष्टरूपाणि—आतीः। आतिष्टम्। आतिष्ट। आतिषम्। आतिष्व। आतिष्म।

सम्प्रति अत धातोर्लुङि वृद्धिं वारयितुमाह—

## २२६७। वदव्रजहलन्तस्याचः ॥७।२।३॥

## टी—। वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थाने वृद्धिः स्यात् सिचि परस्मैपदेषु। इति प्राप्ते।

The वृद्धि substitute recommends itself in place of the अच् (vowel) of the अङ्ग (verbal stem) of the roots वद्, व्रज and those that are followed by consonants (हलन्त), when सिच् occurs in परस्मैपद। (Here it is to be noted that वद् and व्रज have been specially mentioned that they must not get the optional वृद्धि substitute taught by the rule 'अतो हलादेर्लघोः (2284) but have नित्यवृद्धिः e. g. अवादीत् अव्राजीत्। हलन्त roots like दह्, पच् etc by this rule get the नित्यवृद्धि substitute e.g. अधाक्षीत् अपाक्षीत्) इति—this being the case i.e. अत् being हलन्त and thus वृद्धि being due :—

मित—। वदव्रजहलन्तस्य अच इतिच्छेदः। अङ्गस्येत्यधिकृतम्। 'सिचि

वृद्धिः परस्मैपदेषु' (२२९७—७।२।१) इत्यतः सर्व्वमप्यनुवर्त्तते। तदाह—अङ्गस्येति वृद्धिरित्यादि च। 'अचः' इति स्थानषष्ठी ; तदाह 'अचः स्थाने' इति। वदश्च व्रजश्च हलन्ताश्च वदव्रजहलन्तमिति (समाहारद्वन्द्वः) तस्येति विग्रहः। (अत्रेदं वोध्यम्—'अतो हलादेर्लघोः' (२२८४—७।२।७) इत्यनेन पाक्षिकवृद्धिवा—धनार्थं वदव्रजयोर्विशिष्य ग्रहणम्। तेन अवादीत् अव्राजीदिति नित्यंवृद्धिः। हलन्तेषु उदाहरणम् अधाक्षीत् अपाक्षीत् इत्यादि। 'वदव्रजहलचः' इत्येवसिद्धे अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम्। इति प्राप्ते इति अनेन च अत्धातोर्लुङि वृद्धौ प्राप्तायामित्यर्थः :—

२२६८। नेटि ॥७।२।४॥

दी—। इडादौ सिचि प्रागुक्तं न स्यात्। मा भवानतीत्। (माभवन्तौ) अतिष्टाम्। (मा भवन्तः) अतिषुः। 'चिती ३८ संज्ञाने'। चेतति। चिचेत। अचेतीत्। अचेतिष्टाम्। अचेतिषुः। 'चुत्तिर ४० आसेचने। आसेचनमार्द्रीकरणम्। आङीषदर्थेऽभिव्याप्तौ च।

"इर इत्संज्ञा वाच्या—" (वार्त्तिक)। च्योतति। चुच्योत।

What is enjoined in the former rule (वदव्रज etc.) does not hold good when the affix सिच् is preceded by the augment इट्। Thus मा भवान् etc अत्+लुङ् तिप्=अतीत् here the augment आट taught by 'आडजादीनाम्' (2254). is not prefixed to the root अत् in accordance with the prohibition 'न माङ्योगे' (2228). Hence it is clear to see that here there is no वृद्धि substitute ; (but if it would have been shown without 'मा' the form would have been आतीत् without the वृद्धि also ; ) for the addition of the augment आट (आट्+अतीत्=अतीत्)। It is therefore only to

make the prohibition obvious in case of अत् that Bhattoji has attached the indeclinable 'माङ्' before the root. Similarly अतिष्टाम् and अतिषुः with the indeclinable 'माङ' preceding, but without 'माङ' the forms are आतीत् आतिष्टाम् etc.

चिति etc—संज्ञाने to know well'. चेतति—( चित्+शप्+तिप्—गुण comes by पुगन्तलघूपधस्य च (2189). चित्+लिट्+णल्=चिचेत ( reduplication and गुण, णल् being substitute of तिप् which is पित् is itself पित् and not कित् and therefore असंयोगात् लिट् कित् does not apply. ) अचेतीत् ( चित्+लुङ् तिप्=अट् चित् इट् सिच् ईट् त्=अचेत्इ० ईत् here सिच् elides by इटः ईटि and वृद्धि is prohibited by 'नेटि' )। च्युतिर ( च्युत् ) means:' to wet'—the indeclinable आङ् in आसेचन means a little and pervasion.

इर etc.—It has to be stated that इर् gets the designation इत् i. e. इर् elides with all its letters at a time, and not one by one ( this वार्त्तिक is introduced here to bar the augment नुम् to च्युतिर which if it first drops इ and then being इदित्, should have got नुम् giving च्योन्तति and not च्योतति which is the correct form ).

मित—। न+इटि इति च्छेदः। इटि इत्यत्र पूर्व्वसूत्रात् ( सिचिवृद्धि परस्मैपदेषु ) 'सिचि' इत्यनुवर्त्त्य आह—इडादौ सिचि इति। प्रागुक्तमिति 'वदव्रज-हलन्तस्याच' इत्यत्र यदुक्तं तदत्र नेत्यर्थः। उदाहरणमाह—मा भवान् इत्यादि। वृद्धिनिषेधस्य स्पष्टप्रतिपत्त्यर्थम् माङ्ग्रहणम्। तथाहि अकृते माङ्ग्रहणे आट् इत्यागमोऽपि ( आडजादीनामितिसूत्रात् ) अत्रोपस्थास्यते। तेन च संहितायाम् आट्+अतीत्=आतीदिति स्यात्। तेन च भेदो नोपलक्ष्येत अतोऽत्र माङ्ग्रहणं कृतम् एवम-तिष्टाम् अतिषुः इत्यत्रापि'माङ्'इत्यध्याहार्य्यम्—मा भवन्तौ अतिष्टाम् मा भवन्तः अतिषुः

इति । अन्नते माङ् ग्रहणे तूभयत्र रूपं तुल्यमिति बोध्यम् । चिती इति (चित् ई) । अत्र ईदित्करणं 'श्वीदितो निष्ठायाम्' ( २०३९—७।२।१४ ), इति इण्निषेधो यथा स्यात् । 'संज्ञाने' इति सम्यक् ज्ञाने इत्यर्थः । चेतति इति चित् + शप + तिप् इति स्थिते चितो लघूपधत्वात् 'पुगन्तलघूपधस्य ( २१८९ ) चेति गुणः । चिचेत इति । चित् + लिट् णल् इति स्थिते णलः तिबादेशत्वेन पित्वात् 'असंयोगाल्लिट् कित्' (२२४२) इत्यस्याप्राप्तेः गुणाभावो न । द्वित्वादि पूर्व्ववत् । अचेतीत् इति । 'लुङ्लङ्' इत्यट् । च्लेः सिच् इति सिच् । 'अस्तिसिचोऽपृक्ते (२२२५ ) इति ईट । ततो नेटीति वृद्धिनिषेधः—इट ईटि इति सलोपे च रूपम् । च्युतिर इति—इरित्-करणम् अङ्विधिर्यथा स्यात् । आसेचनमित्यत्र आङोऽर्थमाह—ईषदर्थे इत्यादि । इर इत्संज्ञेति वार्त्तिकमिदम् । इर् इति संघातस्यैव इत् (लोपः) इत्यर्थः । अन्यथा इर प्रत्येकं लोपे इदित्वात् नुमागमः स्यात् । तथाच च्योन्तति इत्येव भवेत् न तु च्योतति इति भावः । प्रत्येकमित्संज्ञा तु 'उपदेशेऽजनुनासिक इत्' इति ( इकारस्य ) 'हलन्त्यम्' इति च ( रकारस्य ) विहिता इति बोध्यम् ।

## २२६८ । इरितो वा ॥३।१।५७॥

दी— । इरितो धातोश्च्लेरङ् वा स्यात् परस्मैपदे परे । अच्युतत्—अच्योतीत् । 'श्च्युतिर् ४१ क्षरणे' । श्च्योतति । चुश्च्योत । अश्च्युतत्—अश्च्योतीत् ।

The affix च्लि coming after such roots as drop इर्, is optionally replaced by अङ्, when परस्मैपद terminations follow. Thus अच्युतत् ( अट् + च्युत् + च्लि + तिप् = अच्युत् अङ् + त् = अच्युत् अ त् = अच्युतत्) । अङ् being ङित्, the root च्युत् is not gunnated. And without अङ् अच्योतीत् (अट्—च्युत् + इट् + सिच् + ईट् + त् = अच्योत् + इ + 0 + ई + त् = अच्योतीत् here there being no ङित् affix च्युत् becomes च्योत् by लघूपधगुण and सिच् disappears by इट ईटि ) and then

एकादेशः। श्च्युतिर (श्च्युत्) means 'to drip' श्चोतति by गुण, शप् and तिप्। चुश्चोत by 'शर्पूर्व्वाः खयः' (2259) in लिट् णल्। अश्चुतत् with अङ् and अश्चोतीत् with सिच्, गुण—सिज्लोप and एकादेश।

मित—। इरितः ('इर्' इत् येषां ते) + वा इतिच्छेदः। 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' (२६२९—३।१।२२) इत्यतो धातोरिति, 'च्लेः सिच्' (२२२२—३।१।४४) इत्यतश्च्लेरिति, 'अस्यतिवक्तिख्यातिभ्योऽङ्' (२४३८—३।१।५२) इत्यतोऽङिति चानुवर्त्तते; तदाह—धातोरिति, च्लेरिति, अङिति च। परस्मैपदे परे इति—'पुषादिद्युताद्यॢदितः परस्मैपदेषु' (२३४—३।१।५५) इत्यतः परस्मैपदेष्वित्यनुवृत्तेरिति भावः। अच्युतदिति—अङि रूपम्—तथचेयं प्रक्रिया अट् + च्युत् + च्लि + त् = अट् + च्युत् + अङ् + त् = अ + च्युत् + अ + त् ('अङ्' इत्यस्य ङित्त्वाद् गुणाभावे रूपम्)। अच्योतीत् इति—अत्र अङभावे सिचि पुगन्तलघूपधस्येति धातोर्गुणे वलादाविटि अस्तिसिचोऽपृक्ते इति ईटि, 'इट ईटि' इति सिज् लोपे—एकादेशे च यथोक्तं रूपं सिध्यति। श्चुतिर इति शपि लघूपधगुणे श्चोततीति। 'शर्पूर्व्वाः खय' इति चकारमात्रशेषे अङ्गस्य पूर्व्ववद्गुणे णलि चुश्चोत इति। अश्च्युतदिति—इरित्वादङिरूपम्। प्रक्रिया अच्युतदितिवत्। अश्च्योतीत्—अङभावपक्षे सिचि अच्योतीदितिवत् रूपम्।

**दो—। यकाररहितोऽप्ययम्। श्चोतति। 'मन्थ ४२ विलोडने'। विलोडनं प्रतिघातः। मन्थति। ममन्थ। यासुटः 'किदाशिषि' (२२१६) इति कित्त्वात्—'अनिदिताम्—' (४१५) इति नलोपः। मथ्यात्। 'कुथि ४३ पुथि ४४ मथि ४५ हिंसासंक्लेशनयोः। इदित्वान्न-लोपो न। कुन्थ्यात्। पुन्थ्यात्। मन्थ्यात्। षिधु ४७ गत्याम्। सेधति। सिषेध। सेधिता। असेधीत्। 'सात् पदाद्योः' (२१२३) इति षत्वनिषेधे प्राप्ते—**

The root श्च्युत्—is also read without यकार (e.g. श्चुत्)। विलोड़न means hindrance. यासुट् being कित् in आशीर्लिङ् by the rule "किदाशिषि" (2216) the न of मन्थ elides by the rule 'अनिदितां हल उपधाया क्ङिति' (415). कुथि, etc. being इदित् they do not drop (in आशीर्लिङ्) their न (which is the result of इदित्करण) in accordance with the rule--अनिदिताम् etc. सिधु (सिध्) 'to go'—सेधति by लघूपधगुणः; असेधीत् (सिध्+लुङ् तिप्=अ सिध् इट् सिच् ईट् त्=असेध् इ ० ई त्) here there being इट् the वृद्धि substitute does not come in. सिच् drops down as before. The prohibition of षत्व (cereberal ष) being due to सिध् by the rule—सात् पदाद्योः (2123), we look forward :—

मित—। यकाररहितोऽप्ययमिति—अयमिति श्च्युत्धातुरित्यर्थः। उदाहरति—श्चोतति इति। विलोडनमिति आस्फालनमित्यपि केचित्। मन्थ इत्यत्र नकारस्य इदित्करणफलाभावात् आशीर्लिङि विशेषमाह—यासुट इति स्पष्टम्। कुथीति। इदित्वादिति—अतएव आशीर्लिङि अनिदितामिति न प्रवर्त्तते। षिधु इति। सेधति इति अपि लघूपधगुणेन रूपम्। सिषेध—आदेशप्रत्यययोरिति षत्वं, पूर्व्ववद् धातोर्गुणश्च। सेधिता—लुटि इडागमे रूपम्। असेधीत्—'नेटि' (२२६८) इति हलन्तलक्षणाया वृद्धेरिडादौ सिचि निषेधात् 'इट ईटि' (२२६९) इति सिज्लोपात् एकादेशे च रूपम् (वृद्धिनिषेधेन हेतुना पुगन्तलघूपधस्य चेत्यस्य प्राप्तौ गुणइति ज्ञेयम्)। सात्पदाद्योरिति— सिध् धातोः सकारादित्वादिति भावः—

## २२७०। उपसर्गात् सुनोति-सुवति-स्यति-स्तौति-स्तोभति-स्था-सेनय-सेध-सिच-सञ्ज-स्वञ्जाम् ॥८।३।६५॥

## टी—उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात्।

The dental स becomes cerebral of these roots (सुनोति= षुञ् अभिषवे (स्वादि), सुवति=षू प्रेरणे (तुदादि), स्यति=षोऽन्तकर्म्मणि (दिवादि),

स्तौति ( =स्तु ), स्तुभ्, स्था, सेनय, सेध ( सिध् ), सिच्, सञ्ज and स्वञ्ज ) owing to some condition lying in the उपसर्गs preceding them.

मित—उपसर्गादित्यस्य व्याख्यानम्—उपसर्गस्थात् निमित्तादिति। सुनोतीत्यादीनां समाहारद्वन्द्वान्ते षष्ठीबहुवचनम्। सुनोतीति श्तिपा निर्द्देशः यङ्लुग्निवृत्त्यर्थ इति प्राञ्चः—स्पष्टार्थमिति तु प्रौढ़मनोरमायां स्थितम्। अभिषुणोतीत्यदाहरणम्। सेनयेति णिजन्तो नामधातुः। अभिषेणयतीत्युदाहरणम्। 'सेध' इति सिधधातोः शपा निर्द्देशः। तेन सिध्यति इति दिवादेर्न ग्रहणम्। निषेधति। एवमन्यत्र। सस्येति—'सहेः साडः स' इत्यतोऽनुवृत्तेरिति भावः। षः इति = अपदान्तस्य मूर्द्धन्य इत्यधिकारादित्यर्थः।

## २२७१। सदिरप्रतेः ॥८।३।६६॥

**टी—प्रतिभिन्नादुपसर्गात् सदेः सस्य षः स्यात्।**

The स is cerebral of the root सदि (सद्), coming after an उपसर्ग, other than प्रति, that has the cause for such change. निषीदति etc, are examples.

मित—। सदिरिति इका निर्द्देशः—षष्ठार्थे १मा। अप्रतेरिति प्रतिभिन्नादित्यर्थकम्। उदाहरणम्—निषीदति विषीदतीत्यादि। उपसर्गस्थनिमित्ताभावात् "तमाससाद" इत्यत्र, 'प्रसीद देवेश जगन्निवास' ( गीता ११श ) इत्यादौ च षत्वाभाव एव बोध्य इति। अतः वृत्तौ 'उपसर्गात्' = उपसर्गस्थात् निमित्तात्। तथा-दिशः प्रसेदुः इति रघौ।

## २२७२। स्तम्भेः ॥८।३।६७॥

**टी—। सौत्रस्य सस्य षत्वं स्यात्। योगविभाग उत्तरार्थः। किञ्च—'अप्रतेः' इति नानुवर्त्तते। 'वाहुप्रतिष्टम्भविवृद्धमन्युः'—इति।**

The root स्तम्भ also, taught by the rule ( 'जृस्तम्भ मुचुम्लुच etc

—2291—3. 1. 58) changes its स into ष owing to a condition lying in the उपसर्गs. The योगविभाग—breaking up of the योग or a rule i. e. the taking up of स्तम्भ् (here) apart from सद् (of the rule 'सदिरप्रतेः' i.e. not enlisting स्तम्भ् with सद् so as to make the rule 'सदिस्तम्भोरप्रतेः') is for the subsequent rule 'अवाच्चालम्बनाविदूर्ययोः' (2273) so that स्तम्भ् alone may be attracted by the चकार (in अवात् च) and not सदि also. Moreover, the term 'अप्रतेः' in the preceding rule does not follow here; so that applications like बाहुप्रतिष्टम्भ etc (cp.—रघु 2nd canto) are safe to have षत्व even with प्रति preceding.

मित—। सौत्रस्येति—सूत्रोपात्तस्य इत्यर्थः। सूत्रञ्च इदम्—'जृस्तम्भुम्रुचुम्लुचु' (२२९१—३।१।५८) इत्यादि। योगविभागः इति। सदिरप्रतेरिति सूत्ररूपस्य योगस्य विभाग इत्यर्थः। सदिरिति सूत्रे स्तम्भस्यानुक्तिरिति यावत् उत्तरार्थ इति। अवाच्चेति परवर्त्तिसूत्रार्थः इत्यर्थः। तथाच यदि 'सदिरप्रतेः' 'स्तम्भेः' इत्यसूत्रयित्वा 'सदिस्तम्भोरप्रते'रित्येकमेव सूत्रं क्रियेत तर्हि 'अवात् च आलम्बनाविदूर्य्ययो' रित्यस्य चकारेण सदिस्तम्भी उभावेवानुकृष्येयाताम्। इष्यते च केवलं स्तम्भेरनुकर्षणं न तु सदेरपि। अतः सदिरप्रतेः स्तम्भेः इति पृथग्वचनम्। योगविभागस्य प्रयोजनान्तरमपि दर्शयति—किञ्चेति। नानुवर्त्तते इति—तथा सति 'स्तम्भेश्च' इत्येव ब्रूयात् न तु केवलं स्तम्भेरिति भावः। तथाच 'बाहुप्रतिष्टम्भ' इत्यादि सद्वाक्यविप्रयोगा अपि सङ्गच्छन्ते इति।

['बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागास्कृतमस्पृशद्भिः।
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्य्यः॥ इति रघु—२।३२]

२२७३। अवाच्चालम्बनाविदूर्य्ययोः ॥८।३।६८॥

दी—। अवात् स्तम्भेरेतयोरर्थयोः षत्वं स्यात्।

The स of स्तम्भ् changes into ष in the sense of 'resting on'

and 'proximity', when the root comes after the उपसर्ग—अव। Thus 'यष्टिमवष्टभ्य तिष्ठति'—'stands resting on a club' and 'अवष्टब्धा गौः'—'The cow has been tied (and it is here).'

मित—। अवात् + च + आलम्बनाविदूर्य्ययोरितिच्छेदः )। आलम्बनञ्च आविदूर्य्यञ्चेति ( द्वन्द्वः ) तयोः। आविदूर्य्यम् इति सामीप्यम् इत्यर्थः। आलम्बनञ्च आश्रय इत्यर्थकम्। उदाहरणम्—यष्टिमवष्टभ्य तिष्ठति—आलम्ब्य इत्यर्थः। अवष्टब्धा गौः—बद्धा सती समीपे तिष्ठतीत्यर्थः।

## २२७४। वेश्च स्वनो भोजने ॥८।३।६९॥

### दी—। व्यवाभ्यां स्वनतेः सस्य षः स्याद्भोजने।

The स of स्वन् becomes ष in the sense of 'eating' when वि and अव precede it (i.e. स्वन)। Thus विष्वणति अवष्वणति—'eats' in such a way as to make a sound.

मित—। वेः + च, स्वनः + भोजने इति च्छेदः। चकारेण 'अव' इति पूर्व्वसूत्रादनुकृष्यते। वेरिति च पञ्चम्यन्तं तदाह—व्यवाभ्यामिति। विष्वणति अवष्वणति सशब्दं भुङ्क्ते इत्यर्थः। भोजने किम्? विस्वनति वीणा। अत्र षत्वं न।

## २२७५। परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ॥८।३।७०॥

### दी—परिनिविभ्यः परेषामेषां सस्य षः स्यात्। निषेधति।

The स is cerebral of these ( the root सेव्=षेवृ सेवायाम्, words सित and सय derived from षिञ् बन्धने by adding क्त and अच् respectively, the root सिव् ( षिवु तन्तुसन्ताने to weave or sew'), the root सह (षह मर्षणे to bear ), the augment सुट्, and the roots स्तु

(ष्टुञ् स्तुतौ to praise) and ष्वञ्ज् (to embrace), when they come after the उपसर्गs—परि, नि, and वि। Thus परिषेवते, निषेवते, विषेवते। परिषित, निषित, विषित। परिषय, निषय, विषय and so on. निषेधति—this is an instance of the rule 'उपसर्गात् सुनोति etc.' (2270)

The roots स्तु and स्वञ्ज are again mentioned here to form the subject matter of the rule "सिवादीनां वाड्व्यवायेऽपि' (2359—8. 3. 71.) so that they may obtain the optional षत्व when coming after परि-नि-वि।

मित—। परिनिविभ्य इति स्पष्टम्। सेवेत्यादीनां समाहारद्वन्द्वान्ते षष्ठी—वहुवचनम्। सेव इति षेव्ट सेवायामिति धातुः। परिषेवत, निषेवते, विषेवते इत्युदाहरणम्। सित—सय—इति शब्दद्वयम्। षिञ् बन्धन इत्यस्य निष्ठायां अचि च क्रमेण रूपे। विषित विषय इत्याद्युदाहरणम्। सिवु (षिवु तन्तसन्ताने) परिषीव्यते इत्यादि। सह (षह मर्षणे) परिषहते इत्यादि। सुट् इति आगमः। सुट्कात् पूर्व्वः (२५५३—६।१।१३५) इत्यस्यैव ग्रहणम्, न तु सुट् तिथोः (२२१०—३।४।१०७) इत्यस्यापि। परिष्करोति, विष्किर इत्यादि। स्तु (ष्टुञ्) स्तुतौ = परिष्टौति परिष्टुवाते इत्यादि। 'उपसर्गात् सुनोति सुवति—' (२२७०) इत्येव स्तुस्वञ्जोर्ग्रहणे सिद्धे 'सिवादीनां वाड्व्यवायेऽपि' (२३५९—८।३।७१) इत्यत्र उत्तरसूत्रे परिनिविभ्यः परेषामेषां वैकल्पिकषत्वविधानार्थमत्र पुनर्ग्रहणमिति विभावनीयम्।

## २२७६। प्राक्सितादड्व्यवायेऽपि ॥८।३।६३॥

दी—। '—सेवसित—' (२२७५) इत्यत्र सितशब्दात्—प्राक् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात्। न्यषेधत्। न्यषेधीत्। न्यषेधिष्यत्।

The स is cerebral of those roots that are instructed, hereby, beginning from 'उपसर्गात् सुनोति—सुवति etc' and ending in the

root सेव् ( in the rule परिनिविभ्यः सेवसित etc ), even when they are intervened by the augment अट्। Thus fifteen roots in all fall into the jurisdiction of this. न्यषेधत् etc नि—सिध्+लङ् त् = निअसेधत्। न्यषेधीत्—( लुङ् ) ; न्यषेधिष्यत् ( लृङ् )।

मित—। प्राक्सितात् + अड्व्यवाये ( अट् + व्यवाये ) + अपीतिच्छेदः। प्राक्सितादित्यस्यार्थमाह—सेवसित इति। सितशब्दात् प्रागिति। परिनिविभ्य इत्यत्र सित—शब्दात् पूर्वमित्यर्थः। ये सुनोत्यादय इति—'उपसर्गात् सुनोति-सुवति-स्यति-स्तौति—' (२२७०) इति सूत्रोपात्ता इति भावः। तेषामिति—समष्ट्या पञ्चदशानामित्यर्थः। व्यवायशब्दो यद्यपि मैथुनवाची तथाप्यत्र व्यवहितार्थो बोद्ध्यः। अट् इति 'लुङ् लङ् लृङ् क्ष्वडुदात्तः' इत्यत्र विहित आगमः। तदुदाहरति—न्यषेधत् (लङ्), न्यषेधीत् ( लुङ् ), न्यषेधिष्यत् ( लृङ् ) इति। एवम् अभ्यषुनोदित्याद्यपि उदाहरणम्। प्राक्सितादिति—सितशब्दं वर्जयित्वेति ज्ञेयं तत्र अडागमस्यासम्भवात्।

## २२७७। स्थादिष्वभ्यासेन चाभ्यासस्य ॥८।३।६४॥

**दो—। प्राक्सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात्। एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम्। निषिषेध। निषिषिधतुः।**

The roots स्था, सेनय etc preceding the word सित ( in the rule 'परिनिविभ्यः सेवसित etc' take the cerebral ष, even when they have the अभ्यास (reduplicate) between them and the उपसर्गs। It goes wiihout saying that roots beginning from स्था ( in —उपसर्गात्सुनोति etc ) and ending in सेव् ( in परिनिविभ्यः etc ) are ten only in number—स्था, सेनय, सिध्, सिच्, सञ्ज, स्वञ्ज, सद, स्तम्भ्, स्वन् and सेव। षत्व is enjoined to the स of the अभ्यास of these

roots alone and not of सुनोति etc. aiso. The full import of the rule is this—षत्व is enjoined to the above-mentioned ten roots, coming after the उपसर्गs even when the अभ्यासs stand in the middle and also ( षत्व is enjoined ) to their अभ्यासs but not to the अभ्यासs of सुनोति etc. Thus निषिषेध etc—here though the अभ्यास, 'षि' stands between 'नि' and 'से', yet से is changed to षे and षि itself is changed to षि for the sake of नि ।

मित—। स्थादिषु + अभ्यासेन च + अभ्यासस्य—इतिच्छेदः । पूर्व्वसूत्रात्—प्राक्सितादिति व्यवायेऽपि इति चानुवर्त्तते । तदाह प्राक्सितादित्यादि । सूत्रे चकारस्य, 'अभ्यासस्य' इत्यस्य च अर्थमाह—एषामेव चेति । तेनायमर्थः—उपसर्गस्थान्निमित्तात्—प्राक्सिताद् वर्त्तमानेषु स्थादिषु दशसु धातुषु येसकाराः ते अभ्यासव्यवहिता अपि षत्वं लभन्ते, किञ्च ते एव अभ्यासाः षत्वं प्राप्नुवन्ति न तु सुनोत्यादीनामभ्यासा अपीति । तेन निषिषेध इत्यादौ अङ्गस्य अभ्यासस्य चेतुभयोरपि षत्वम् । अभिषवितुम् इच्छति अभिसुसूषति इत्यत्र तु सुनोतेरभ्यासस्य षत्वं नेति नियमः । ( सूत्रेऽत्र वाक्यद्वयं वर्त्तते (१) स्थादिष्वभ्यासेनेत्येकं वाक्यम् (२) अभ्यासस्य चेत्यपरम् । तत्र आद्यं षत्वविध्यर्थम् । द्वितीयन्तु नियमार्थम्—अभ्यासस्थसकारस्य चेत् षत्वं तर्हि स्थादीनां दशानामेव न तु सुनोत्यादीनामित्येवंरूपो नियमः । अतएव वृत्तौ —'एषामेव चे'ति विशिष्योक्तम् ) ।

## २२७८ । सेधतेर्गतौ ॥८।३।११३॥

**दी— । गत्यर्थस्य सेधतेः षत्वं न स्यात् । गङ्गां विसेधति । 'षिधू ४८ शास्त्रे माङ्गल्ये च' । शास्त्रं शासनम् ।**

When the root सिध् means to go, it does not take षत्व owing to उपसर्गs. Thus गङ्गाम् etc. षिधू (सिध्) etc. शास्त्र here means

शासन 'forbiddance or prohibition and माङ्गल्य means an 'auspicious performance'.

मित—। सेधतेरिति षिधधातोः श्तिपा निर्द्देशः। गतौ इति अर्थप्रकाशनम्। तदाह—गत्यर्थस्येति। 'न' इति—'न रपरसृजिसृजि—'( ८।३।११० ) इत्यतोऽनुवर्त्तते-इतिभावः। विसेधति—गच्छति। षिधू ( सिध् ) इति। अस्य ऊदित्करणफलम् इड्विकल्पार्थम्। तच्च परवर्त्तिनि 'स्वरति—' इति सूत्रे स्फुटीभविष्यति। शास्त्र इत्यस्य ग्रन्थो नार्थः किन्तु शासनं नियमनं वारणं वेत्यर्थः। माङ्गल्ये इति मङ्गलक्रियायाम्। अत्र उपसर्गवशादेव षत्वं नेति वोध्यम्। तेनेदं सूत्रं उपसर्गात्सुनोतीत्यादेरेव वाधकं न तु आदेशप्रत्यययोरित्यस्यापि। तेन च निषेध इत्यादौ षत्वं भवत्येवेति ज्ञेयम्।

## २२७९। स्वरतिसूतिसूयतिधूञूदितो वा ॥७।२।४४॥

**दी—। स्वरत्यादेरूदितश्च परस्य वलादेरार्द्धधातुकस्येड्वा स्यात्।**

The augment इट् (instructed by the rule 'आर्द्धधातुकस्येड्-वलादेः') is prefixed optionally to the वलादि आर्द्धधातुक affixes coming atter the roots स्वृ, सू ( अदादि ), सू ( दिवादि ), धू and those roots that drop the indicatory ( अनुवन्ध ) ऊ ( as षिधू is here ऊदित् )

मित—। स्वरतिसूतिसूयतिधूञूदितः ( ५मी १व )+वा इति च्छेदः। आर्द्ध-धातुकस्येड्वलादेरित्यत इटमनुवर्त्त्य आह—वलादेरित्यादि। स्वरति इति 'स्वृ शब्दो-पतापयो'रिति धातुः भ्वादिः—तस्य श्तिपा निर्द्देशः। ऊत् ( ऊ ) इत् ( लोपः ) येषां ते ऊदितः। स्वरतिश्च सूतिश्च सूयतिश्च धूञ् च ऊदितश्चेति समाहारद्वन्द्वात् पञ्चम्येकवचनम्। सूति इति लुग्विकरण—( अदादि )—सूधातोर्ग्रहणम् ( षूङ् प्राणिगर्भाविमोचने )। सूयति इति दिवादेः सुधातोर्ग्रहणम् (षूङ् प्राणिप्रसवे )। न तु

षू प्रेरणे ( तुदादिः ) इत्यस्यापि । घूञ् इति धूञ् कम्पने ( स्वादिः क्र्यादिश्च ) इत्यस्यैव ग्रहणम् न तु धू विधूनने इत्यस्यापीति ज्ञेयम् । एवञ्च 'स्वरतिसूध्ूञूदितो वेत्येव सूत्रेऽस्तां लाघवादिति न वाच्यम् । तथा सति 'निरनुवन्धकग्रहणे न सानुवन्धकस्य'—[ परिभाषा (८१) ] इत्यनेन अनुवन्धरहितस्य षू प्रेरणे इति तौदादिकस्यैव ग्रहणं प्रसज्येत न तु सानुवन्धकयोरादादिकदैवादिकयोरिति । न च तर्हि 'सू' इत्यत्र 'षूङ्' इत्येव पठ्यतामित्यपि वाच्यम् । तथा हि सति 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य' [ परि—( ९० ) ] इत्यनेन अलुग्विकरणदैवादिकस्य सूयतेरेव ग्रहणं स्यान्न तु लुग्विकरणस्य ( आदादिकस्य ) सूतेरपीति विभाव्यम् । एवञ्च सूत्रमिदमुक्त—परिभाषाद्वयस्यापि ज्ञापकमिति वृद्धाः । धू विधूनने इत्यस्य निवृत्त्यर्थं धूञिति सानुवन्धकः पाठः स्वीकृतः । 'इट् सनि वा' ( २६२५—७।२।४१ ) इत्यत्र गृहीतस्य वाशब्दस्यानुवृत्तिवलादत्रोपस्थितत्वेऽपि पुनर्वाग्रहणम् 'लिङ्सिचावात्मनेपदेषु' ( २३०० ) इत्यस्य विनिवृत्त्यर्थमिति भाष्यम् ।

## २२८० । झषस्तथोर्धोऽधः ॥८।२।४०॥

टी— । झषः परयोस्तथोर्धः स्यान्नतु दधातेः । जश्त्वम् । सिषेद्ध—सिषेधिद्ध । सेद्धा—सेधिता । सेत्स्यति—सेधिष्यति । असैत्सीत् ।

त and थ coming after the झष् letters ( झभघढध ) are replaced by ध, but this is not the case when त and थ follow the ध of the root in दधाति ( डुधाञ् धारणपोषणयोः—अदादि ) । जश्त्वम् etc = सिध् लिट् थ = सिध् सिध् थ = सिषेध् थ = सिषेद्ध ( by झलां जश् झशि ( 52—8.4.53). सिषेधिथ—षिधू being ऊदित् here is इट् optionally. Similarly in सेद्धा—सेधिता । सेत्स्यति (this is the case in absence of इट्) सिध + स्यति = सेध् + स्यति = सेत्स्यति (by खरिच—121—8, 4. 55). In case of

इट् it is सेधिष्यति। असैत्सीत्—सिध+लुङ् त (in the case of absence of इट् i. e. इडभावपक्षः )=अट् सिध्+सिच्+ईट् त् ( by अस्तिसिचोऽपृक्ते 2224—7. 3.96)=असैध् स ईत् (वृद्धि by 'वदव्रजहलन्तस्याचः' 2267—7,2. 3 )=असैत् स् ईत् ( ध is replaced by त् by 'खरि च' 121—8. 4. 55 ). Then अट् सिध्+सिच्+तस् (आताम् ) :—

मित—। झष: (५मी)+तथोः (६ष्ठी २व)+धः (१मा)+अधः (षष्ठी) इतिच्छेदः। तकारादकार उच्चारणार्थः। धः इत्यत्राप्यकार उच्चारणार्थः। अध इति डुधाञ् धारणपोषणयोरिति धाभिन्नस्य धातोरित्यर्थस्तदाह—न तु दधातेरिति। प्रसज्यप्रतिषेधोऽसौ इति, भावः। जश्त्वम् इति। 'झलां जश् झशि' (५२—४।४।५३) इति सूत्रेण—इत्यर्थः। सिषेद्ध—सिषेधिथ इति—षिधूधातोरूदित्वादिड्-विकल्पः।, तत्र पूर्वं इडभावपक्षे। परन्तु इटपक्षे इति विवेकः। सिध्+लिट् थल (मध्यमैकवचनम्)=सिध् सिध थ=सि सिध् थ—सिसेध् ध (पुगन्तल-घूपधस्य च)=सिषेद्ध ध (आदेशप्रत्यययोरिति षत्वम्—ततो जश्त्वम्) सिध्+लिट् थल्=सिध् सिध् इट् थल=सिषेध् इ थ= (इट्पक्षे-रूपम्)। सेद्धा—सेधिता इति। लुटि पूर्ववत् रूपद्वयम्। एवं सेत्स्यति—सेधिष्यति इति। पूर्ववत् तकारः 'खरि चे'ति (१२१—८।४।५५) सूत्रेण। असैत्सीत्—(इडभावपक्षे लुङि रूपम्) अट् सिध् सिच् ईट् त्=असैत् (वदव्रजेति वृद्धिः, खरि चेतिचर्त्वम्) स् ईत् (अस्तिसिच—इतीट्)। अट् सिध्+सिच्+तस् (ताम्) इत्यत्र सिचः सलोपार्थमाह—

## २२८१। झलो झलि ॥८।२।२६॥

टी—। झलः परस्य सस्य लोपः स्याज्झलि। असैद्धाम्। असैत्सुः। असैत्सीः। असैद्धम्। असैद्ध। असैत्सम्। असैत्स्व। असैत्स्म। पक्षे असेधीत्। असेधिष्टाम् इत्यादि। 'खाद्ट ४८

भक्षणे'। ऋकार इत्। खादति। चखाद। 'खद ५० स्थैर्य्ये हिंसायां च'। चाद्भक्षणे। स्थैर्य्ये अकर्म्मकः। खदति।

स, coming after a झल् (झभञ्...हल्) is dropped, when झल् letters follow. Thus अ सिध् स् (सिच्) ताम् (तस्)=असैध्० ताम् =असैद्धाम् (वृद्धि by वदव्रज etc, दकार by झलां जश etc, सलोप by this rule and त of ताम् is replaced by ध by झषस्तथो: etc); असैत्सुः—अट् सिध् सिच्+झि=अ सिध् स् जुस्=असैत् स् उस्। असैत्सीः—अट्—सिध् सिच् ईट् सिप्=असैध् स् इ स्=असैत् सी स्। असैद्धम्—अ सिध् सिच् थस्=असैध् स् तम् (तस्थस्थमिपां तांतंतामः)=असैद्० धम्। असैद्ध—अ सिध् सिच् थ=असैध्स्त=असैध्० ध=असैद्ध। असैत्सम्=अ सिध् सिच् मिप् =असैध् स् अम्=असैत् ('खरिच') स् अम्। And so on. These are all in the इडभावपक्ष—but in the इट्पक्ष we have असेधीत्—अ सिध् सिच् ति=अ सिध् इट् सिच् ईट् त=असेध् इस् ईत् (absence of वृद्धि by 'नेटि' (2268)=असेध् इ ० ईत (सलोप by इट ईटि (2266), then there will be एकादेशः)। In the same way असेधिष्टाम etc. The ऋकार of खाद्द is इत्संज्ञक—the result of this इत्करण will be clear in नाग्लोपिशास्वृदिताम् (2572—7. 4.2). स्थैर्य्य means 'stability' and हिंसा—injury; and the चकार here implies 'to eat' also.

मित—। झलः (५मी)+झलि इतिच्छेदः। 'रात् सस्य' (३०८—८।२।२४) इत्यतः सस्येति, 'संयोगान्तस्य लोपः' इत्यतो लोप इति चानुवर्त्तते। तदाह—सस्य लोप इति। असैद्धाम् इति—असैद्धामित्यारभ्य असैत्स्म इत्यन्तं लुङि तस् इत्यतः क्रमेण—इडभावपक्षे रूपाणि। सिध्+लुङ् तस्=अट् सिध् सिच् ताम् (तसस्तामादेशः)=असैध्स् धाम् (वदव्रजेति वृद्धिः, झषस्तथोरिति तकारस्य धकारः)=असैद्धाम् (जश्त्वम्, झलो झलीति सलोपः) असैत्सुः—(अत्र प्रक्रिया पूर्ववत्, अयं विशेषः—खरिचेति धकारस्य तकारः (चर्त्वम्) झेर्जुस रुत्वविसर्गौ'

इति। असैत्सीः (पूर्ववत् वृद्धिचर्त्वसलोपैकादेशाः—असैत् स् ईट् स्=असैत् सीस्)। असैद्धम्—अट् सिध् सिच् तम्=अ सैध् स् तम्=असैध् स् धम्=असैध ० धम् ऐवमन्यत्राप्यूहनीयम्। पत्ते इति इटपत्ते इत्यर्थः। अट् सिध् सिच् तिप् इति स्थिते अ सिध् इट् सिच् ईट् त् (वलादेरिट्, अस्तिसिच—इति 'ईट्') =अ सेध् इ स् ईत् ('नेटी'ति वृद्धिनिषेधात् पुगन्तलघूपधस्येति गुणः)=असेध् इ ० ईत् (इट ईटि' इति सलोपः)=असेधीत् ('सिज्लोप एकादेशे सिद्धो' वाच्यः इति वार्त्तिकादेकादेशे रूपम्)। एवमसेधिष्टामित्यादि तामादयादेशे भविष्यति। ऊकार इदिति। असैत्करणफलन्तु 'नाग्लोपिशास्वृदिताम्' (२५७२—७।४।२)इत्यत्र स्फुटी—भविष्यति। स्थैर्ये—स्थिरत्वे इत्यर्थः। चकारस्यार्थमाह—चादिति। खद इत्यस्य लिटि रूपं दर्शयितुमाह—

## २२८२। अत उपधयाः ॥७।२।११६॥

**टी—। उपधया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे। चखाद।**

The वृद्धि substitute replaces the penultimate अत् (अ), when it is followed by an affix which drops ञ् or ण्—as its indicatory. Thus खद+लिट् णल्=खद खद अ=ख खाद अ=कखाद अ (by अभ्यासे चर्च —(2182—3. 4. 54)=चखाद (by कुहोश्चुः—२२४५)।

मित—। अतः+उपधायाः इतिच्छेदः। 'मृजेर्वृद्धिः' (७।२।११४) इत्यतो वृद्धिरिति, 'अचो ञ्णिति' (७।२।११५) इत्यतो 'ञ्णिति' इति चानुवर्त्तते। तदाह—वृद्धिः स्यादित्यादि। उपधाया इति अतो विशेषणम्। चखाद इति णलो णित्त्वम् अभ्यासे चर्चेति चर्त्वम् कुहोश्चुरिति चुत्वञ्च। एत्वाभ्यासलोपौ तु नात्र भवतः। खद इत्यत्र आदेशादित्वात् इति बोद्धव्यम्। अतः किम्। तुतोद (तुद+लिट् णल्)। उपधायाः किम्?—गणयति।

२२८३। णलुत्तमो वा ॥७।१।९१॥

दी—। उत्तमो णल् वा णित् स्यात्। चखाद—चखद।

The affix णल् of the first person singular is optionally णित् ( ण—eliding ). Hence when it is णित् we have चखाद by वृद्धि otherwise चखद ( without णित् )।

मित—। णल्+उत्तमः+वा इति च्छेदः। उत्तम इति णल इत्यस्य विशेषणम्; तदाह उत्तमो णल् इति। अन्यत् स्पष्टम्।

२२८४। अतो हलादेर्लघोः ॥७।२।३॥

दी—। हलादेर्लघोरकारस्येडादौ परस्मैपदपरे सिचि वृद्धिर्वा स्यात्। अखादीत्—अखदीत्। 'बद ५१ स्थैर्ये पवर्गीयादिः'। बदति। बबाद। बेदतुः। बेदिथ। बबाद—बबद। अबादीत्—अबदीत्। गद ५२ व्यक्तायां वाचि। गदति।

The वृद्धि substitute is enjoined optionally to the अ which is लघु ( short ) and which begins with a हल् or consonant, when in परस्मैपद the affix सिच् with the augment इट् prefixed to it follows. Thus अखादीत् with वृद्धि and अखदीत् without it. पवर्गीयादिः i. e, पवर्गतृतीयादिः। बबाद—Note that this ब ( वर्गीय ) being different from अन्तःस्थ व we cannot expect to have सम्प्रसारण for इग्यणः सम्प्रसारणम्' directs सम्प्रसारण to अन्तःस्थव only. बबाद—बबद ( this is उत्तम णल् )। अबादीत्—अबदीत् = like अखादीत्—अखदीत्। गद to speak distinctly :—

मित—। अतः ( ६ष्ठी )+हलादेः ( ६ष्ठी )+लघोः ( ६ष्ठी ) इति च्छेदः। हलादेरिति लघोरिति च 'अतः' इत्यस्य विशेषणम्। तदाह हलादेर्लघोरकारस्येति।

'सिचि वृद्धिः परस्मैपदेषु' ( २२९७—७।२।१ ) इत्यतः सिचीति वृद्धिरिति च, नेटि' (२२६८—७।२।४ ) इत्यत इटीति, ऊर्णोतेर्विभाषा ( २४४९—७।२।६ ) इत्यतो 'विभाषा' इति चानुवर्त्तते ; तदाह इडादावित्यादि। सूत्रे हलः परस्येत्येव सिद्धे आदिग्रहणम् स्पष्टार्थम्। किञ्च अत इति तपकरणमपि स्पष्टार्थम्। अखादीदित्यादि स्पष्टम्। पवर्गीयादिरिति पवर्गतृतीयादिरित्यर्थः। ववाद इति वर्गीयत्वाद् वकारस्य 'इग्यणः'—इति सम्प्रसारणं न तस्य अन्तःस्थवकारविषयत्वादिति बोध्यम्। अतः किम् अदेवीत् ( दिव् + लुङ् त् )। हलादेः किम्—मा भवानेवीत्। लघोः किम् ? अनर्दीत्—अरक्षीत्। इडादौ सिचीति किम्। अपाक्षीत्—वदव्रजेति पचधातोरनिट्त्वाद् वृद्धिः। परस्मैपदे किम्—अयतिष्ट ( यती प्रयत्ने लुङ् )।

## २२८५। नेर्गदनदपतपदघुमास्यतिहन्तियाति-वाति-द्राति-प्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ॥८।४।१७॥

दो। उपसर्गस्थान्निमित्तात् परस्य—नेर्णः स्याद् गदादिषु। प्रणिगदति। जगाद। 'रद ५३ विलेखने'। विलेखनं भेदनम्। रराद। रेदतुः। 'णद ५४ अव्यक्ते शब्दे'।

The न of the उपसर्ग नि, coming after another उपसर्ग which contains a condition ( of णत्व ) becomes cerebral, when roots गद etc (enumerated in the rule) follow. गद etc are eighteen in number :—गद, नद, पत्, पद, घु ( दा, धा ) मा, सो, हन् या, वा, द्रा, प्सा, वप्, वह्, शम्, चि and दिह। Of these the first four are pronounced by adding शप् to them and the last eleven हन्ति etc, are expressed with the addition of श्तिप् with a view to prohibiting णत्व from this नि in यङ्लुक्—cp. the परिभाषा श्तिपा शपानुबन्धेन—etc under the rule 'एकाच उपदेशे—' (2246). Thus

प्रनिजागदीति प्रनिर्जंघनीति etc. are without णत्व । In the case in hand, we have प्रणिगदति etc. 'दाधाघ्वदाप्' ( 2373—I. I. 20 ) teaches that there are four दाs and two धाs ; thus डुदाञ् दाने—प्रणिददाति ; दाण् दाने—प्रणियच्छति, दोऽवखण्डने—प्रणिद्यति, देङ् रक्षणे—प्रणिदयते, धेट् पाने—प्रणिधयति, डुधाञ् धारणपोषणयोः प्रणिदधाति । रद means विलेखन to pierce. णद means to make an indistinct sound.

मित— । 'रषाभ्यां णो नः समानपदे' (२३५—८।४।१) इत्यनुवर्त्तते । 'उपसर्गादसमासेऽपि—' (२२८७—८।४।१४) इत्यत उपसर्गादित्यनुवर्त्य सूत्रानुगुण्येन व्याचष्टे—उपसर्गस्थान्निमित्तादिति । प्रणिगदतीत्याद्युदाहरणम् । गदादीनां चतुर्णां शपा निर्द्देशः, हन्त्यादीनां चैकादशानां 'श्तिपा शपानुबन्धेन—' इति यङ्लुग् व्याहृत्यर्थं श्तिपानिर्द्देशः । एतेन प्रनिजागदीति प्रनिनानदीति प्रनिर्जंघनीति इत्यादौ णत्वं न । घु इत्यनेन षट् धातवो गृह्यन्ते—डुदाञ् दाने—प्रणिददाति । दाण् दाने—प्रणियच्छति । दोऽवखण्डणे=प्रणिद्यति । देङ्—रक्षणे—प्रणिदयते । धेट् पाने—प्रणिधयति । डुधाञ् धारणपोषणयोः—प्रणिदधाति । रराद इति । अत उपधाया इति वृद्धिः । अनादेशादित्वेऽपि अकित्त्वादेत्वाभ्यासलोपौ न । रेदतुरिति अनादेशादित्वात् कित्त्वाच्च एत्वाभ्यासलोपौ भवतः । णद इति—णोपदेशत्वाद नविधिमाह—

२२८६ । णो नः ॥६।१।६५॥

धो—धातोरादेर्णस्य नः स्यात् । नदति ।

णोपदेशास्त्वनर्द-नाटिनाथनाधनन्द्नक्कनॄनृतः ।

नाटेर्दीर्घोहेस्य पर्युदासाद् घटादिर्णोपदेश एव । तवर्ग—चतुर्थान्तनाधतेर्नन्द्योश्च केचिन्णोपदेशतामाहुः ।

A ण standing at the beginning of a root is changed into न ( dental ) । Thus णद gives नदति ।

All roots are णोपदेश save and except नर्द्, नाट, नाथ, नाध्, नन्द् (टुनदि), नक्क, नॄ and नृत् (eight only).

It has to be noted in this connection that there being a पर्य्युदास (1) in नाट् (अनाट्) which has a long penultimate, the root णट् 'to dance', which is read in the घटादि class is णोपदेश i. e. begins with a ण। Some hold that धकारान्त नाध्, नॄ and नन्द् also are णोपदेशs (but भाष्य holds that all the eight above are not to be taken as णोपदेशs).

मित—। धातोरिति—स्पष्टम्। णोपदेशाश्चिति—नर्द शब्दे, नट् (चुरादि) अवस्पन्दने, नाथृ, नाधृ याच्ञादौ, टुनदि (नन्द्) समृद्धौ, नक्क नाशने, नॄ नये, नृती (नृत्) गात्रविक्षेपे इत्यष्टौ वर्ज्जयित्वा अन्ये धातवो नकारादित्वेन पठिता अपि णोपदेशा विज्ञेया इति। भाष्ये एतेषामेव णोपदेशरहितत्वेन पठितत्वादिति भावः। 'णोपदेशाः+तु+अनर्द—नाटि—नाथ्-नाध्-नन्द-नक्क-नॄ-नृतः इतिच्छेदः। अनर्द इत्यत्र नञः प्रत्येकं योग इति बोध्यम्। तेनाह—नाटेरित्यादि। 'दीर्घोहस्व' चुरादौ पठितस्य इति भावः। 'पर्य्युदासात्' णोपदेशाभावत्वेन पठितत्वात् (पर्य्युदासश्च प्राक् दर्शितः) इत्यर्थः। घटादिरिति—तत्र पठित नट नृत्याविति धातुरित्यर्थः। तवर्गचतुर्थान्त इति धकारान्तो 'नाध्' इत्यर्थः। केचित् इति मतान्तराविष्करणम्। णस्य उपदेशो यस्मिन् स णोपदेश इति व्यधिकरण विग्रहः।

**२२८७। उपसर्गादसमासेऽपि णोपदेशस्य ॥८।४।१४॥**

**टी—। उपसर्गस्थान्निमित्तात् परस्य णोपदेशस्य धातोर्नस्य णः स्यात् समासेऽसमासेऽपि। प्रणदति। प्रणिनदति। अर्द ५५ गतौ याचने च।' अत आदेः' (२२४८)।**

---

(1) प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्॥' साहित्यदर्पण-७म. अ.।

The न of a णोपदेश root, coming after an उपसर्ग containing a condition of णत्व, becomes ण—whether there is samasa or no samasa. In प्रणिनदति there is no णत्व in नदति because it consists of two different words. ( Here the word 'समासे' is inferred from the use of अपि in the rule ). अर्द to go and to beg In अर्द + लिट् अ, there दीर्घ being effected of the अभ्यास by the rule 'अत आदे:'—

मित—। उपसर्गस्थान्निमित्तादित्यादौ पूर्व्ववदनुवृत्तिर्बोध्या। असमासेऽपि इत्यत्र अपेरर्थमाह—समासऽपीति। 'पूर्व्वपदात् संज्ञायामग:' (८।४।३) इत्यत्र 'पूर्व्वपदात्' इत्यस्य 'रषाभ्यां नो णः समानपदे' (८।४।१) इत्यत्र च 'समानपदे' इत्यस्य च सत्त्वात् समास आचिप्त इति नागेशाशय:। तत्त्वबोधिन्यादौ तु 'समासेऽङ्घ्रि: सङ्ग:' (८।३।८०) इत्यतः समासे इत्यस्य यदि अनुवर्त्तनं क्रियेत तर्हि असमासे न स्यात्—कृते तु असमासग्रहणे समासे न स्यादित्यपेर्ग्रहणं कृतमिति स्थितम्। प्रणिनदतीत्यत्र 'नेर्गदनद—' इतिणत्वम्। धातु—नकारस्य तु 'उपसर्गादसमासेऽपी'ति णत्वं न भवति। 'अट्कुप्वाङ्नुम्भिर्न्न' न व्यवधानात्। अत आदेरिति अर्द—धातोरभ्यासाकारस्य दीर्घे कृते।

२२८८। तस्मान्नुड्द्विहल: ॥७।४।७१॥

दी—। द्विहलो धातोर्दीर्घीभूतादकारात् परस्य नुट् स्यात्। आनर्द। आर्दीत्। 'नर्द ५६ गर्द ५७ शब्दे।' णोपदेशत्वाभावान्न ण:। प्रनर्दति। गर्दति। जगर्द। तर्द ५८ हिंसायाम्। तर्दति। 'कर्द ५९ कुत्सिते शब्दे'। कुत्सिते कौक्षे। कर्दति। 'खर्द ६० दन्दशूके'। दंशहिंसादिरूपायां दन्दशूकक्रियायामित्यर्थ:। खर्दति। चखर्द। 'अति ६१ अदि ६२ बन्धने'। अन्तति।

आनन्त। अन्दति। आनन्द। इदि ६३ परमैश्वर्ये। इन्दति। इन्दांचकार। 'बिदि ६४ अवयवे'। पवर्गतृतीयादिः बिन्दति। अवयवं करोतीत्यर्थः। 'भिदि' इति पाठान्तरम्। 'गडि ६५ वदनैकदेशे'। गण्डति। 'अन्तत्यादयः पञ्चैते न तिङ्विषया' इति काश्यपः। अन्ये तु तिङमपीच्छन्ति। 'निदि ६६ कुत्सायाम्' निन्दति। प्रनिन्दति। 'टुनदि ६७ समृद्धौ'।

The augment नुट् is prefixed to the root ( itself ) containing two consonants ( at the end and a vowel at the beginning), after the अभ्यास of the root has been lengthened ( कृतदीर्घ )। Thus आनर्हं—आनर्हतुः etc. अर्ह्+लिट् अ=अर्ह् अर्ह् अ=आ अर्ह् अ=आ नुट् अर्ह् अ=आन् अर्ह् अ=आनर्ह ( of नुट् the उकार is for the facility in pronunciation and the टकार elides and being टित् it is prefixed and not affixed to the root by the परिभाषा सूत्र—आद्यन्तौ टकितौ। Note that the word तस्मात् in the rule is used to be connected with the rule 'अत आदेः' which precedes it,hence Bhottoji first reads 'अत etc' and then 'तस्मात् etc'. दन्दशूक means 'a snake' 'दन्दशूको बिलशयः'—( Amarakosha). दन्दशूक having meant a snake cannot express an action—thus Bhottoji says दंश etc. अन्तति—अति being इदित्, नुम् comes in. आनन्त the lit, form of अति which becomes अन्त् with नुम् added to it and thus the rule 'तस्मान्नुड्द्विहलः' applies. इन्दाञ्चकार—Here आम् comes in by the rule 'इजादेश्च गुरुमतोऽनृच्छः ( 2237—3. 1. 36 )—for इ becomes गुरु by the rule 'संयोगे गुरु' (32—1. 4. 11 ). 'अन्तत्यादयः' etc—the five roots अति, अदि, इदि, बिदि ( भिदि ) and गडि do not fall in the category

or jurisdiction of तिङ् affixes according to Kashyapa, but according to others they do. प्रणिन्दति etc—णत्व by 'उपसर्गादसमासेऽपि णोपदेशस्य' । To elide the beginning letter ( टु ) here, he reads the rule—

मित— । तस्मात् + नुट् + द्विहल: इतिच्छेदः । धातोरित्यधिकृतं वर्त्तते । तेन तस्मात् इति द्विहलः इति च पञ्चम्यन्तपदद्वयं तस्यैव विशेषणं । किञ्च तस्मादिति 'अत आदे'रित्यत्र कृतदीर्घादेशाभ्यासाकारादित्यनेन सम्बद्ध्यते । अतएव 'अत आदे'रिति प्राक् पठित्वा व्याचष्टे—द्विहलो धातोर्दीर्घीभूतादकारादिति । द्विहल् इति द्वौ हलौ यस्येति विग्रहः अत्र द्विहल्ग्रहणमुपलक्षणार्थमिति—'आनर्च्छ'-पदसाधनावसरे तुदादौ 'विज इट्' ( २५३६ ) इत्यत्र स्वयमेव वक्ष्यति । तेन तत्र तत्र अनेकहलोऽपि नुडागमः स्यादेवेति विभाव्यम् । (अजादिद्विहलो धातुरिति तु तत्त्वम् )। नुट उकार उच्चारणार्थः, टकार इत् । टित्त्वादाद्यवयवः 'आद्यन्तौ टकितौ' इति सूत्रेण । तेन अर्ह + लिट् अ इति स्थिते द्वित्वेन अर्ह अर्ह् अ इति जाते अनेन आ नुट् अर्ह अ इति सम्पद्यमाने आन् अर्ह् अ इति । ततः आनर्ह एवमानर्हतुरित्यादि । आर्हीत् इति लुङि । णोपदेशेत्यादि नर्द इत्यस्य इत्यर्थः । 'कौञ्चे' कुञ्च्यां भवं कौञ्चम् तस्मिन् । खर्द इति । दन्दशूक इत्यस्य सर्पवाचित्वेन विशेष्यत्वात् क्रियावाचकत्वासम्भवाद दन्दशूक-क्रियायामित्यर्थो विवक्षित इत्याह दंश इत्यादि । "दर्वीकरो दीर्घपृष्ठो दन्दशूको विलेशयः । उरगः पन्नगो भोगी"त्याद्यमरः । अन्तति इति । इदित्त्वात् नुम् । आनन्त इति । इदित्त्वेन नुम्सत्त्वात् 'अति' इति 'अन्त'इति भवति तत्र तस्मान्नुड्द्विहलः' इत्यनेन नुडागमे लिटि रूपम् । इन्दाञ्चकार इति—इदि इत्यस्य इदित्वात् नुम । तत इन्द् इति भवति,। ततश्च 'संयोगे गुरु' ( ३२—१।४।११ ) इत्यनेन इकारस्य गुरुत्वात्-'इजादेश्च गुरुमतोऽनृच्छः' ( २२३७—३।१।३६) इत्यनेन आम । ततश्च आमन्तत्वात् कृञोऽनुप्रयोगः । पूर्ववदेवात्मनेपदमितुरक्तेन तङ्, इदेः परस्मैपदित्वादिति ज्ञेयम् । विदि अवयवे इत्यत्र अवयवस्यार्थमाह—अवयवं करोति इति । अन्ततीति—अति, अदि, इदि विदि ( भिदि ), गडि इत्येते पञ्चेत्यर्थः तिङ्विभक्तीनामविषयीभूता इत्यर्थः—काश्यपस्य मतेन । अन्येषां मते तु एते तिङन्ता अपि भवन्तीत्याहान्ये त्विति । निदि

(निन्द्) इत्यपि णोपदेश इत्याह प्रणिन्दति इति ('उपसर्गाद् असमासेऽपि' इत्यनेन णत्वम्)। टुनदीति सन्त्यन्नि प्रजापश्वादिरूपा। अथ 'टु'लोपविधायकसूत्रमुपन्यस्यति—

२२८९। आदिर्ञिटुडवः ॥१।३।५॥

दी—। उपदेशे धातोराद्या एते इतः स्युः। नन्दति। इदित्वान्नलोपो न। नन्द्यात्। 'चदि ६८ आह्लादे'। चन्दति चचन्द। 'त्रदि ६९ चेष्टायाम्'। त्रन्दति। तत्रन्द। 'कदि ७० क्रदि ७१ क्लदि ७२ आह्वाने रोदने च'। चकन्द। चक्रन्द चक्लन्द। क्लिदि ७३ परिदेवने। चिक्लिन्द। शुन्ध ७४ शुद्धौ। शुन्धति। शुशुन्ध। नलोपः। शुध्यात्।

अथ कवर्गीयान्ता अनुदात्तेतो द्विचत्वारिंशत्। 'शीकृ ७५ सेचने। तालव्यादिः। 'दन्त्यादिः' इत्यके। शीकते। शिशीके। लोकृ ७६ दर्शने। लोकते। लुलोके। 'श्लोकृ ७७ संघाते। संघातो ग्रन्थः। स चेह ग्रथ्यमानस्य व्यापारो ग्रथितुर्वा। आद्ये अकर्म्मको द्वितीये सकर्म्मकः। श्लोकते। 'द्रेकृ ७८ ध्रेकृ ७९ शब्दोत्साहयोः'। उत्साहो वृद्धिरौद्धत्यं च। 'एच इग्घ्रस्वादेशे (२२३) इति ह्रस्वः। दिद्रेके। दिध्रेके। 'रेकृ ८० शङ्कायाम्'। रेकते। 'सेकृ ८१ स्रेकृ ८२ स्रकि ८३ श्रकि ८४ श्लकि ८५ गतौ'। त्रयो दन्त्यादयः। द्वौ तालव्यादौ। अषोपदेशत्वान्न षः। सिसेके। शकि ८६ शङ्कायाम्। शङ्कते। शशङ्के। 'अकि ८७ लक्षणे'। अङ्कते। आनङ्के। 'वकि ८८ कौटिल्ये'। वङ्कते। 'मकि ८९ मण्डने। मङ्कते। 'कक ९० लौल्ये'। लौल्यं गर्व्वश्चापल्यं च।

ककते। चकके। 'कुक ८१ वृक ८२ आदाने। कोकते। चुकुके। वर्कते। ववृके।

"ऋदुपधेभ्यो लिटः कित्त्वं गुणात् पूर्व्वविप्रतिषेधेन" (वार्त्तिक)।

'चक ८३ तृप्तौ प्रतिघाते च। चकते। चेके। ककि ८४ वकि ८५ श्वकि ८६ त्रकि ८७ ढौकृ ८८ त्रौकृ ८९ ष्वष्क १०० वस्क १०१ मस्क १०२ टिकृ १०३ टीकृ १०४ तिकृ १०५ तीकृ १०६ रघि १०७ लघि १०८ गत्यर्थाः'। कङ्कते। डुढौके। तुत्रौके।

"सुबधातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधोवक्तव्यः" (वार्त्तिक)। ष्वष्कते। षष्वष्के। 'अत्र तृतीयो दन्त्यादिः' इत्येके। टेकते। टीकते। एवं तेकते। तीकते। लघिर्भोजननिवृत्तावपि। 'अघि १०९ वघि ११० मघि १११ गत्याक्षेपे'। आक्षेपो निन्दा। 'गतौ गत्यारम्भे च' इत्यनेन। अङ्घते। आनङ्घे। वङ्घते। मङ्घते। 'मघि' कैतवे च। 'राघृ ११२ लाघृ ११३ द्राघृ ११४ सामर्थ्ये'। राघते। लाघते। 'ध्राघृ' इत्यपि केचित्। 'द्राघृ आयामे' आयामो दैर्घ्यम्। द्राघते। 'श्लाघृ ११५ कत्थने'। श्लाघते॥

अथ परस्मैपदिनः पञ्चाशत्। 'फक्क ११६ नीचैर्गतौ'। नीचैर्गतिर्मन्दगमनमसद्व्यवहारश्च। फक्कति। पफक्क। 'तक ११७ हसने'। तकति। 'तकि ११८ कृच्छ्रजीवने'। तङ्कति। 'वुक्क ११९ भषणे'। भषणं श्वरवः। वुक्कति। 'कख १२० हसने'। प्रनिकखति। ओखृ १२१ राखृ १२२ लाखृ

१२३ द्राखृ, १२४ ध्राखृ १२५ शोषणालमर्थयोः। ओखति। ओखांचकार। शाखृ, १२६ श्लाखृ, १२७ व्याप्तौ। शाखति। 'उख १२८ उखि १२९ वख १३० वखि १३१ मख १३२ मखि १३३ णख १३४ णखि १३५ रख १३६ रखि १३७ लख १३८ लखि १३९ इख १४० इखि १४१ ईखि १४२ वल्ग १४३ रगि १४४ लगि १४५ अगि १४६ वगि १४७ मगि १४८ तगि १४९ त्वगि १५० श्रगि १५१ श्लगि १५२ इगि १५३ रिगि १५४ लिगि १५५ गत्यर्थाः'। कवर्गद्वितीयान्ताः पञ्चदश। तृतीयान्तास्त्रयोदश। इह खान्तेषु—'रिख' 'त्रख' त्रिखि' 'शिखि' इत्यपि चतुरः केचित् पठन्ति। ओखति।

These (viz ञि, टु and डु) standing at the beginning of a root, read in the धातुपाठ, are to be treated as इत् (i.e they elide when any operation is carried out on the root). Thus टु eliding, we have (by नुम्) नन्दति etc; other instances are ञिष्वप्—स्वापे, ञिमिदा—स्नेहने etc, and डुपचष् पाके, डुधाञ् धारणपोषणयोः etc. These ञि, टु and डु will be required in rules like—'ञीतः क्तः' (सुप्तः); 'ट्वितोऽथुच्—' (नन्दथुः) and 'ड्वितः क्त्रिः' (पक्त्रिमम्)। टुनदि being इदित् we cannot have नलोप in आशीर्लिङ् (though the augment यासुट् is कित्) by the rule 'अनिदिताम्—(415—6. 4. 24). Thus नन्द्यात्। आह्लादे—to please or feel pleasure. चेष्टायाम्—to be active. परिदेवने—to weep, mourn etc, as 'तत्र का परिदेवना'—(गीता—2) नलोप etc. i. e by the rule 'अनिदिताम्'।

Now we enlist fortytwo अनुदात्तेत् roots which end in the

कवर्गीय letters. श्लोक or सौक as some hold—शौकते being अनुदात्तेत् it is आत्मनेपदी similarly in other cases. शिशीके here the अभ्यास is ह्रस्व by the rule 'ह्रस्वः' (see under बभूव) and एकार comes in by 'तभ्यरेशिरेच'। श्लोक (श्लोक्) etc संघात means a ग्रन्थः (collection) and this root श्लोक is अकर्म्मक or सकर्म्मक according as the collection (ग्रन्थः) refers to the thing collected or the collector himself i, e. when the thing is collected of itself without any agency (कर्त्तृव्यापाररहित) the root ( is intransitive (अकर्म्मक),but when the thing is collected with the agency (कर्त्तृव्यापासहित) of some one it is transitive (सकर्म्मक)। द्रेक ध्रेक means to make sound (शब्दनम्) and to have exhuberant growth (वृद्धि) and to be proud or haughty (औद्धत्य) । By the rule 'एच इग् ह्रस्वादेशे' (323—1. 1. 48), we have द्रेक+लिट् ए=दिद्रेके (इकार being the ह्रस्व form of ए), similarly दिध्रेके। रेक means apprehension. त्रयः etc—सेक, स्रेक and स्रकि (these three) have दन्त्यसकार at the beginning and श्रकि श्लकि the two begin with a तालव्यश। These having not fallen in these षोपदेश class, their सs do not change into षs (cerebral). शकि (शङ्क) means to apprehend, fear etc. अकि (अङ्क्) means to make a sign, point out etc. लोस्य means pride and fickleness. कुक and वृक (वर्क्) mean to take. कुक्, वृक being लघूपध receives गुण by the rule 'पुगन्तलघूपधस्य च'। चुकुके—वव्रके—here the root is not gunnated according to the rule "असंयोगाल्लिट् कित्"।

ऋदुपधेभ्यः etc (वार्त्तिक)—पूर्व्वविप्रतिषेधः gives the opposite sense of 'परविप्रतिषेधः'। Hence for the sake of the forms like वव्रके etc

you should read 'विप्रतिषेधे पूर्व्व' ( and not परम् ) कार्य्यम्' । Thus 'असंयोगात्—' ( 1. 2. 5 ), though preceding gets greater force than 'पुगन्त—( 7. 3. 36 ), which comes later. Hence 'by पूर्व्व—विप्रतिषेध, लिट् coming after roots having short ऌ for their penultimate becomes कित् after barring the injunction of गुण । चक etc—it means to be satisfied and to obstruct—in the former case it is intransitive and in the latter it is transitive. चेके by एत्व and अभ्यासलोप । डुढौके, तुतौके are लिट् forms of ढौक् and तौक् । The अभ्यास ढौ and तौ are changed into ढु and तु ( by ह्रस्वः ) and by जश्त्व ढु is changed into डु । Now सत्व (i.e. सकारादित्व) being due, by the rule 'धात्वादेः षः सः ( 2264—6. 1.64 ), to the ष्वक्क which is षोपदेश in the धातुपाठ, the Vartika is laid down here to prohibit the same.

सुब्धातु etc—It should be stated that षत्व is forbidden to सुप्धातुs (नामधातु as षकारीयति etc), to the root ष्ठिव् ( ष्ठिव् निष्ठीवने ) and to षक्क etc अत etc तृतीय i e श्वकि is also read स्वकि by some. लघि ( लङ्घ् ) also means 'not to take food ( to fast ).' Cp.—'दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता । न हि दोषचये कश्चित् सहते लङ्घनादिकम् ॥' ( आयुर्व्वेदसंग्रह )—where लङ्घन means fasting. अघि etc [ all roots that are read in the धातुपाठ ( उपदेश ) as इकारान्त snch as लघि etc become लङ्घ etc by 'इदितो नुम् धातुः'. In गत्याक्षेप the word आक्षेप means निन्दा ( slander ). Some say that these roots mean 'movement.' आनङ्घे—आ by 'अतः आदेः' (2248 ). and न by 'तस्मान्नुट्—' ( २२८८ ) ; मघि ( मङ्घ ) also means 'the conduct of an unfaithful lover.' आयाम् means 'length'. श्लाघ (श्लाघ्) means 'to praise oneself.'

अथ etc—Now we are putting down fifty परस्मैपदी roots. फक्क—नीचैर्गति means 'to walk slowly, and to behave in a bad way'. पफक्क—प in the अभ्यास comes in by the rule 'अभ्यासे—' ( २१८२ ) तकि ( तक् )—means 'to maintain with difficulty. भषणम्—means 'the barking of a dog.—कख् means 'to laugh.' ओख ( ओख् ) etc—mean 'to suck up' and 'to have plenty of'. ओखाञ्चकार—ओख being इजादि, आम comes in. Of the roots उख etc, : first fifteen ( ending in ईखि ) end in ख and the next thirteen beginning from वल्ग्, end in 'ग'. Along with the fifteen खान्त ( ending in ख ) roots above some include four roots more such as रिख् etc.

मित। आदि:+ञिटुडव:—इतिच्छेद:। "भूवादयोधातव" इत्यतो धातुरित्यनुवर्त्तते। आदिरिति च जातावेकवचनम्, तदाह—धातोराद्या इति। तत्र टुरित्यस्योदाहरणं—नन्दति इति। अन्ययोस्तु ञि स्वप् स्वापे—डुपचष् पाके इति—एतेषांकलनन्तु ञीत: क्त:'=सुप्त:। ट्वितोऽथुच्' वेपथु: नन्दथु: ( वेपथुश्च शरीरे मे रोमहर्षश्च जायते—गीता १म )। 'ड्वित: क्त्रि: 'क्त्रेर्मम्नित्यम्'—पक्त्रिमम् ( विपक्त्रिमज्ञानगतिर्मनस्वी—भट्टि—१म ) इत्याद्यर्थम्। इदित्वादिति 'अनिदितांहल उपधाया: क्ङिति' इति। अनेन आशीर्लिङि यासुट: कित्त्वेऽपि नलोपो नेत्यर्थ:। न लोप:—अनिदितामित्यनेनेति भाव:।

अथेति—अनुदात्तेत इति आत्मनेपदिन इत्यर्थ:। ( अनुदात्तङित आत्मनेपदम् )। इत्येके इति। केषांचिन्मतमित्यर्थ:। शिश्लीके—'ह्रस्व:' इति अभ्यासस्य ह्रस्वादेश:। लुलोके इति—अभ्यासे ओकारस्य ह्रस्वादेश उकार ( एचइग्घ्रस्वादेशे )। श्लोक् इति। संघातस्यार्थमाह—ग्रन्थो ग्रन्थनम्। स च ग्रन्थश्चेत्यर्थ: इह अस्मिन् धातौ ग्रथ्यमानस्य यद्ग्रथ्यते तस्य व्यापार:, ग्रन्थितु: येन ग्रथ्यते तस्य वा व्यापार: तत्तन्निष्ठा क्रिया इत्यर्थ:। आद्ये ग्रथ्यमानव्यापारे ( सङ्घीभवमि इति यावत् ); द्वितीये

ग्रन्थितुर्व्यापारे (सङ्गीकरणे इति भावः) उत्साहस्यार्थमाह—औद्धत्यं प्रागल्भ्यम्। दिद्रेक इति। अभ्यासह्रस्वविधायकं सूत्रमाह—एचइगिति। अषोप इति—षोपदेशत्वाभावादित्यर्थः। शकि श्वकि इत्यादेरिदित्वात् नुमा—शङ्क्, श्वङ्क् इत्यादि भवति। एवमन्यत्र लघि वघि इत्यादिषु। चुकुके-वव्हके इति 'असंयोगाल्लिट्कित्' इति कित्त्वाद् लघूपधगुणाभावः पूर्ववत चर्त्वम् च। ऋदुपधेभ्य इति वार्त्तिकमिदम्। ऋकारोपधेभ्यः इत्यर्थः। पूर्वविप्रतिषेधेन इति। अत्र विप्रतिषेधे परं कार्यमिति नावलम्बनीयमित्यर्थः। तेन असंयोगादित्यपेक्षया 'पुगन्तलघूपधस्य च' इत्यस्य परत्वेऽपि नित्यत्वेऽपि च गुणात् प्रागेव कित्त्वं ततो गुणाभाव इति भावः। ककि वकि इत्यादौ पठितस्य 'ष्वक्क'इत्यस्य षोपदेशत्वात् सत्वे प्राप्ते आह—सुब्धातु इति। सुबन्तानां धातूनां (नामधातूनाम्) ष्वक्क प्रभृतीनाञ्चेत्यर्थः। अत्रेति—ककि धकि इत्यादौ तृतीयः श्वकि इत्यादि रिति (स्वकि) केचित् पठन्ति। भोजननिवृत्तिरुपवासः। लङ्घ् (लघि) इत्यस्य वैद्यके एव वाहुल्येन प्रयोगः। तथाच 'दोषाणामेव सा शक्तिर्लङ्घने वा सहिष्णुतेत्यादौ लङ्घने इति=उपवासे इति अर्थः।

अघेति—फक्कति अर्थः स्पष्टः। पफक्क अत्र चर्त्वेन अभ्यासस्य पकारः। कृच्छ्रजीवने कृच्छ्रेण महता कष्टेन जीवनयापने इत्यर्थः। प्रनिकखति इति। शेषे विभाषाऽकखादावषान्त उपदेशे' (२२३२—८।४।१८) इत्यत्र अकखादाविति पर्युदासत्वेन णत्वं नेत्यर्थः। शोषणालमर्थयोरिति। शोषणे इति अलमलमित्येनेत्येवं रूपे चार्थे इत्यर्थः। ओषाञ्चकार इति इजादित्वाद् गुरुमत्त्वाच्च आम्। एवं ओषाञ्चकार कामाग्निर्दशवक्त्रं महनिशमित्यादि भट्टी। कवर्गेति उख उखि इत्यारभ्य इखि ईखि इति यावदित्यर्थः। तृतीयान्तेति गकारान्ता अवशिष्टा इत्यर्थः। इह खान्तेष्विति उखउखि इत्यादिषु इत्यर्थः। उख इत्यस्य गुणे रुपमाह—ओखति इति।

## २२९०। अभ्यासस्यासवर्णे ॥६।४।७८॥

टी—। इवर्णोवर्णान्तस्य अभ्यासस्य इयङुवङौ स्तः असवर्णे अचि। उवोख। सन्निपातपरिभाषया 'इजादेः—' (२२३७)

इत्याम्न । ऊखतुः । ऊखुः । इह सवर्णदीर्घस्य अभ्यासग्रहणेन ग्रहणाद् ह्रस्वः प्राप्तो न भवति । सकृत्प्रवृत्तत्वात् । आङ्गत्वाद्धि पर्ज्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततो दीर्घः । "वार्णादाङ्गं बलीयः" इति न्यायात् परत्वाच्च ।

An अभ्यास, ending in इवर्ण ( short इ ) and उवर्ण ( short उ ) is replaced by इयङ् and उवङ्, when a dissimilar ( असवर्ण ) अच् follows. Thus उख्+लिट् अ = उ उख् अ । Now सवर्णदीर्घ being due by the परिभाषा—वार्णादाङ्गं बलीयः—(An अङ्गकार्य is more powerful than an operation that relates to वर्णs (or letters) comes in and therefore उख (being the अङ्ग verbalstem) is first gunnated by 'पुगन्तलघूपधस्य च' and we have उ ओख् अ । Now यण् directed by 'इको यणचि' is barred by this rule 'अभ्यासस्यासवर्णे' and thus उ is replaced by उवङ् giving उव् ओख् अ = उवो ख ( उवङ् being ङित्, the परिभाषा 'ङिच्च' applies). Here the rule 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' does not apply for two reasons ( i ) ( in उ ओख् अ because उ is an अभ्यास and not an अङ्ग and because (ii) ओख् following उ is not a प्रत्यय but an अङ्ग hence the application of the rule 'अभ्यासस्यासवर्णे is quite evident. Now the question is :—Why the affix आम् will not be added to उख् when it is turned into ओख् by लघूपधगुण in connection with लिट् । To answer this Bhottoji brings forward the सन्निपातपरिभाषा ( सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( परि —85 )—'An injunction which is the cause of two operations ( सन्निपात ) (on a certain thing ) is not ( cannot be again ) the cause of an injunction which destroys both these operations' )

Here in 'उ उख् णल्', णल् being आर्द्धधातुक and पित् is the cause of द्वित्व (reduplication) and गुण। Again उख being turned into ओख and णल् following, the affix णल् cannot be the cause of आम् (because ओख is not इजादि and गुरुमान्) which affixes itself to a primitive इजादि गुरुमान् root and not which is derived with any other affix such as णल् etc. Thus आम् necessitates the destruction or disappearance of णल् and consequently of the सन्निपात (द्वित्व and गुण)। ऊख :—उ उख् अतुस्—अतुस् being कित् the verbal stem (अङ्ग) उख is not gunnated and hence the सवर्णदीर्घादेश (अकः सवर्णे दीर्घः) applies and not 'अभ्यासस्यासवर्णे'।

इह etc—in ऊखतुः, ऊखुः etc., there is no chance of ह्रस्वादेश directed by the rule ह्रस्वः'; because सवर्णदीर्घः (उ+उ) खतुः = (ऊ खतुः) has been effected along with the (taking up of the) अभ्यास (उ), and also because the rule 'ह्रस्वः' has once operated on ('the पूर्वखण्ड i. e. the अभ्यास)। To put it more clearly—having been in the jurisdiction of अङ्ग (अङ्गाधिकार), ह्रस्व acts first and then comes सवर्णदीर्घ according to the परिभाषा 'पर्जन्यवल्लक्षणप्रवृत्तिः'—परिभाषेन्दुशेखर page 100—परिभाषा (111). The परिभाषा means 'As a cloud rains both where the ground is moistened and where it is not, so a rule operates both where the need of operation is nil and where the need exists'. Thus the drift of all this is this :—Though the अभ्यास (उ) of the root उख् is ह्रस्व by itself and hence may dispense with the rule 'ह्रस्वः', yet according to the पर्जन्यवत् परिभाषा it (ह्रस्वः') operates first and next there is सवर्णदीर्घ; but when सवर्णदीर्घ

has operated you cannot, by taking advantage of the दीर्घ ऊ in ऊखतुः, bring the rule ह्रस्वः to act upon it ( ऊ ) again for it has once ( सकृत् ) operated. And this operation is not groundless for there runs the maxim—'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः 'An injunction ( लक्षण ) operates once only on its proper object ( लक्ष्य )'.

The operation of a verbal stem ( अङ्ग ) being superior to the operation of conjnnction ( सन्धि ) and the अङ्गकार्य्य being पर ( subsequent ) the above argument is allright.

मित—। अभ्यासस्य+असवर्णे इतिच्छेदः। 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' ( ६।४।१२० ) इत्यतः 'श्नुभ्रुवाम्' इति वर्ज्जं सर्व्वमप्यनुवर्त्तते तदाह—इवर्णोवर्णा-न्तस्येत्यादि। असवर्णे इति=असमानवर्णे। उवोख इति। उख् उख् णल्= उ उख् अ=उ ओख् अ=उवङ् ओख अ=उव् ओख् अ=उवोख। अत्र पूर्व्वं द्वित्वं हलादिशेषः, ततोऽङ्गस्य—लघूपधगुणः, 'द्विर्वचनेऽचीति' द्वित्वात्प्राक् अजा-देशस्य निषिद्धत्वात्। न च गुणात्—प्राक् ( उ उख् अ इत्यत्र ) 'अकः सवर्णे दीर्घः' इति—'सवर्णदीर्घः' शङ्क्यः, सवर्णदीर्घस्य ( संहिताकार्य्यस्य ) वर्णाश्रितत्वात् गुणस्य च अङ्गकार्य्यत्वात् संहितापेक्षया गुणकार्य्यस्यैव हि वलीयस्त्वम्, उक्तं च 'वार्णादाङ्गं वलीयो भवति' ( परिभाषा—५५) इत्यत्र शब्देन्दुशेखरकारैः' 'इयाय इत्यादौ अन्तरङ्गमपि सवर्णदीर्घं वाधित्वा अनेन वृद्धिरिति'। अभ्यासस्यासवर्णे इतीयङ्विधायकसूत्रस्थमसवर्णमस्या ज्ञापकम्। तदीषतुरित्यादौ इयङादिव्या-वृत्त्यर्थम्। एतत् परिभाषाभावे तु ईषतुरित्यादावन्तरङ्गेण सवर्णदीर्घेन वाधा-सद्व्यर्थम। इयङुवङौ हि अभ्याससम्बन्धनिमित्तकत्वाद् वहिरङ्गौ' इति परिभाषेन्दुशेखर (५४—५५ पृ)। एवञ्च उ ओख् अ इत्यत्र उकारस्य यणादेशे ( इको यणचि ) प्राप्ते 'अभ्यासस्येत्यनेन उवङ्। ङित्वादन्त्यावयवः। उव् इति तिष्ठति। अकारस्य उच्चारणार्थत्वात्। ननु उ ओख् अ इति जाते ओख इजादित्वाद्गुरुमत्त्वाच्च आम्

स्यादित्यवाह—सन्निपातपरिभाषयेति 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषा। अर्थश्चायम्—'सन्निपातो=द्वयोः सम्बन्धः तन्निमित्तोविधिः,तं सन्निपातं यो विहन्ति तस्यानिमित्तम्'। अत्र प्रकृते णलि परतः धातोर्द्वित्वं गुणश्च विधीयते इति—सन्निपातत्वम् (कार्यद्वयप्रवृत्तिः)। अत्र सन्निपातस्य णल् एव हेतुः पुन—स्तमेव निमित्तं कृत्वा आम् प्रत्ययो न स्यात्—अतएव 'उपजीव्यविरोधस्य अयुक्तत्वमिति' न्यायमूलेषा इति नागेशः। आमि स हि धातोर्णल्परकत्वव्याघातादिति। ऊखतुः, ऊखुरित्यत्र विशेषमाह—इहेसवर्णदीर्घेति। इह ऊखतुरित्यत्र सवर्णदीर्घस्य 'ऊकारस्य' अभ्यासग्रहणेन 'उकारग्रहणेन' ग्रहणात्—(ह्रस्वादेशस्येत्यर्थ) (पुनः) ह्रस्वः प्राप्तो—विधीय-—मानो न भवति, पूर्व्वमेव विहितत्वात्। कथं कृत्वा पूर्व्वमेव विहितः इत्यत्राह सकृत्प्रवृत्तत्वादिति। 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरिति' न्यायादित्यर्थः। सकृत् प्रवृत्तत्वमपि विशदयति—आङ्गत्वाद्धि इति। अङ्गाधिकारत्वेन 'पर्ज्जन्यवल्लक्षणप्रवृत्तिः' (परि—१११) इत्यनेन सर्व्वं सिध्यति इति भावः। तथा चायमर्थः—यथा पर्ज्जन्या वृष्टावृष्टदेशनिरपेक्षमेव वारि वर्षन्ति तथा सूत्राण्यपि कृताकृतं (लक्षितालक्षितं वा) विषयं वगाहन्ते। तेन चात्र उ इत्यस्य ह्रस्वत्वेऽपि ह्रस्वविधानमविरुद्धम्। अत्र नागेश :—'ननु उखधातोर्द्वित्वे स्वत एव ह्रस्वत्वात्—पूर्व्वमभ्यासह्रस्वत्वाप्रवृत्तौ—हलादिशेषे सवर्णदीर्घे च ह्रस्वापत्तिरत आह—'पर्ज्जन्यवल्लक्षणप्रवृत्तिः। एवं च ह्रस्वस्यापि ह्रस्वत्वे कृते लक्ष्ये लक्षणस्येति न्यायेन न पुनर्ह्रस्वः। तदुक्तमिकोझल् (१।२।९) इति सूत्रे भाष्ये 'कृतकारि खल्वपि शास्त्रं पर्ज्जन्यवदिति। सिद्धेऽपि ह्रस्वादिकारीत्यर्थः।' इति। वृत्तौ—ततो—दीर्घ इति सवर्णदीर्घ इत्यर्थः। अयमत्र सिद्धान्तः—उख् इत्ययं धातुर्दीर्घाच्सम्पन्नो वास्तु ह्रस्वाच्सम्पन्नो वास्तु 'ह्रस्वः' इति सूत्रोपात्तं ह्रस्वविधिं लभते। ततोऽभ्यासाङ्गयोर्मिलित्वा सवर्णदीर्घः। एवमूखतुरिति लब्धे पुनः 'ह्रस्वः' इति सूत्रं न प्रवर्त्तते लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरिति न्यायादित्यर्थः। ननु ह्रस्वविधिः क सङ्गच्छताम्? 'पर्ज्जन्यवल्लक्षणप्रवृत्तिरिति परिभाषैव तत्र मानमितिदिक्। वार्णादाङ्गमित्यादुक्तं प्रागेव। परत्वमङ्गकार्य्यस्य वर्णव्यापारापेक्षयेति बोध्यम्।

टो—उङ्खति । ववाख । ववखतुः । वङ्खति । मेखतुः । ममङ्ख । नखति । नङ्खति । रखति । रङ्खति । लखति । लङ्खति । इखति । इङ्खति । ईङ्खति । वल्गति । रङ्गति । लङ्गति । अङ्गति । वङ्गति । मङ्गति । तङ्गति । त्वङ्गति । श्रङ्गति । श्लङ्गति । इङ्गति । रिङ्गति । लिङ्गति । रेखति । त्रखति । त्रिङ्खति । शिङ्खति । 'त्वगि' । कम्पने च । 'युगि १५६ जुगि १५७ । वुग १५८ वर्जने । 'घघ १५९ हसने' । घघति । जघाघ । 'मघि १६० मण्डने' । मङ्घति । 'शिघि १६१ आघ्राणे' । शिङ्घति ।

अथ चवर्गीयान्ताः । तत्रानुदात्तेत एकविंशतिः । 'वर्च १६२ दीप्तौ । वर्चते । 'षच १६३ सेचने सेवने च' । सचते । सेचे । सचिता । 'लोचृ १६४ दर्शने' । लोचते । लुलोचे । 'शच १६५ व्यक्तायां वाचि' । शेचे । 'श्वच १६६ श्वचि १६७ गतौ' श्वचते । श्वञ्चते । 'कच १६८ बन्धने' । कचते । 'कचि १६९ काचि १७० दीप्तिबन्धनयोः । चकञ्चे । चकाञ्चे । 'मच १७१ मुचि १७२ कल्कने' । कल्कनं दम्भः शाठ्यं च । 'कथनम् इत्यन्ये । मेचे । मुमुञ्चे । 'मचि १७३ धारणोच्छ्रायपूजनेषु' । ममञ्चे । 'पचि १७४ व्यक्तीकरणे' । पञ्चते । ष्टुच १७५ प्रसादे' । स्तोचते । तुष्टुचे । 'ऋज १७६ गतिस्थानार्जनो-पार्जनेषु' । अर्जते । नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते । तेन द्विहल्त्वान्नुट् । आनृजे । 'ऋजि १७७ भृजी १७८ भर्जने' । ऋञ्जते । 'उपसर्गादृति' (७४) इति वृद्धिः—प्रार्ञ्जते । ऋञ्जांचक्रे । आञ्जिष्ट । भर्जते । बभृजे । अभर्जिष्ट ।

एजृ १७८ भ्रेजृ १८० भ्राजृ १८१ दीप्तौ'। एजाञ्चक्रे। 'ईजे १८२ गतिकुत्सनयोः'। ईजाञ्चक्रे।

अथ द्विसप्ततिर्व्रज्यन्ताःपरस्मैपदिनः। 'शुच १८३ शोके'। शोचति। 'कुच १८४ शब्दे तारे'। कोचति। 'कुञ्च १८५ क्रुञ्च १८६ कौटिल्याल्पीभावयोः'। 'अनिदिताम्' (४१५) इति नलोपः। कुच्यात्। क्रुच्यात्। 'लुञ्च १८७ अपनयने'। लुच्यात्। 'अञ्चु १८८ गतिपूजनयोः'। अच्यात्। गतौ नलोपः। पूजायां तु—अञ्च्यात्। 'वञ्चु १८९ चञ्चु १९० तञ्चु १९१ त्वञ्चु १९२ म्रुञ्चु १९३ म्लुञ्चु १९४ म्रुचु १९५ म्लुचु १९६ गत्यर्थाः'। वच्यात्। चच्यात्। तच्यात्। त्वच्यात्। अम्रुञ्चीत्। अम्लुञ्चीत्।

उङ्खति—उखि being इदित्, नुम् comes in. अथ etc—वर्च means to shine. षच is also read as 'षच समवाये' in the सायनभाष्य। मच मुचि कल्कने—कल्कन means pride and cheating. Some read कथने (to speak) in place of कल्कने। ष्टुच—to please or praise. पचि (पञ्च्) व्यक्तीकरणे to express clearly. From this we have प्रपञ्च and thence प्रपञ्चयति। ष्टुच् being षोपदेश, ष is replaced by स and consequently ट by त। Thus by शप् and लघूपधगुण it gives स्तोचते। ऋज means 'movement', accomplishing' and 'earning'. Regarding the attachment of the augment नुट्, onepart रेफ (र्) of the ऋकार is taken as a हल and then it being द्विहल—(अर्ज्), the rule 'तस्मान्नुड् द्विहलः' (2283) applies and we get आनृजे। ऋञ्जाञ्चक्रे—आम् by 'इजादेश्च गुरुमतो-

ञ्च्छः' and it has been गुरुमान् in connection with नुम् । आर्जिष्ट—लुङ् form of ऋजि ( ऋज् )—आट् by आडजादीनाम् and वृद्धि by 'आटश्च' ।

अथ etc.—व्रज्यन्ता i.e. ending in व्रज गतौ । कुज 'to make a shrill cry.' क्रुञ्च 'to lead astray' अञ्च् meaning 'to go' drops its न as अच्यात् but when it means 'to worship' there is no नलोपः as अञ्च्यात् by the rule 'नाञ्चेः पूजायाम्' ( ante ) । अम्रुञ्चीत्, अम्लुञ्चीत् the लुङ् forms of म्रुञ्चु, म्लुञ्चु ।

मित— । उङ्खति—उखि इत्यस्य नुमि नकारस्य च परसवर्णे रूपम् । ववाखेति वख इत्यस्य लिटि रूपम् । वङ्खति इत्यादि वखि इत्यादीनां पूर्व्वोपात्तानां कवर्ग-द्वितीयतृतीयान्तां क्रमेण रूपप्रदर्शनम् ।

अथेति— । ततेति । 'षच समवाये' इत्यपि सायनभाष्ये दृश्यते । सेचे इति 'एकहल्मध्ये—'(२२६०) इत्यनेन एत्वाभ्यासलोपौ । मुत्त मच इति । कल्कन-मित्यस्य मर्म्मार्थकत्वं यथा—महाभारते आदिपर्व्वणि—'तपो न कल्कोऽध्ययनं न कल्कः प्रसह्यवित्ताहरणं न कल्कः । कल्कास्तु भावाधीन एव तवेत्यादि । पचीति—चुरादौ तु विस्तारे इति पठ्यते । ष्टुच इति—षोपदेशत्वात्—सत्वं तत्-संसर्गाच्च ष्टुत्वं निवर्त्तते ततो लघूपधगुणः । ऋज इति आर्ज्जनं सम्पादनम् । नुड्विधाविति—वार्त्तिकमिदम् । ऋज इत्यस्य दीर्घ—ऋकारादित्वात्—आह—ऋकारस्यैकदेशो रेफ इति । ततश्च द्विहलत्वात्—'तस्मान्नुड् द्विहलः' इत्यनेन कृतदीर्घादेशादाकारात् नुटि पूर्व्ववत् द्वित्वे उरदत्त्वे, रपरत्वे, हलादिशेषे च आनृजे इति रूपम् । ऋञ्जाञ्चक्रे इति—ऋजि इत्यस्य नुमागमेन संयोगपरत्वेन गुरुमत्त्वात् इजादिश्चेत्याम् । आर्ञ्जिष्ठ इति ऋञ्जेर्लुङि रूपम् । आट् ऋश्च् इट् सिच त इति वृद्धिर्गुणश्च । वभृजे इति भृजीत्यस्य लिटि रूपम् ।

अथेति— । व्रज्यन्ता इति व्रज गतौ इत्यन्ताः इत्यर्थः । शब्दे तारे सम्रु तगलविस्तारे

इत्यर्थः। पूजायामिति—नाञ्चेः पूजायाम् इति सूत्रादित्यर्थः। अम्रुचीत् अम्लुचीत् इति लुङि बोध्यम्।

२२९१। जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥३।१।५८॥

दी—। एभ्यश्च्लेरङ् वा स्यात्। अम्रुचत्—अम्रोचीत्। अम्लुचत्। अम्लोचीत्। 'ग्रुचु १९७ ग्लुचु १९८ कुचु १९९ खुजु २०० स्तेयकरणे'। जुग्रोच। अग्रुचत्-अग्रोचीत्। जुग्रोच। अग्लुचत्-अग्लोचीत्। अकोजीत्। अखोजीत्। 'ग्लुञ्चु २०१ षस्ज २०२ गतौ'। लुङि अङ् वा। अग्लुचत्-अग्लोञ्चीत्। सस्य श्चुत्वेन शः, तस्य जश्त्वेन जः। सज्जति। अयमात्मनेपद्यपि। सज्जते। 'गुजि २०३ अव्यक्ते शब्दे'। गुञ्जति। गुञ्जयात्। 'अर्च २०४ पूजायाम्'। आनर्च। 'म्लेच्छ २०५ अव्यक्ते शब्दे'। अस्फुटे अपशब्दे चेत्यर्थः। म्लेच्छति मिम्लेच्छ। 'लछ २०६ लाछि २०७ लक्षणे'। ललच्छ। ललाञ्छ। 'वाछि २०८ इच्छायाम्'। वाञ्छति। 'आछि २०९ आयामे'। आञ्छति। 'अत आदेः' (२२४८) इत्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थम्। तेन दीर्घाभावान्न नुट्। आञ्छ। तपरकरणं मुखसुखार्थमिति मते तु नुट्। आनञ्छ। 'ह्रीच्छ २१० लज्जायाम्'। जिह्रीच्छ। हुर्छा २११ कौटिल्ये'। 'कौटिल्यमपसरणमिति मैत्रेयः। 'उपधायां च (२२६५) इति दीर्घः। हूर्छति। 'मुर्छा २१२ मोहसमुच्छ्राययोः'। मूर्छति। 'स्फुर्छा २१३ विस्तृतौ'। स्फूर्छति। युच्छ २१४

प्रमादे'। युच्छति। 'उच्छि २१५ उञ्छे'। 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति यादवः। उञ्छति। उञ्छांचकार:। उच्छी २१६ विवासे'। विवासः समाप्तिः। प्रायेणायं विपूर्वः। व्युच्छति। ध्रज २१७ ध्रजि २१८ ध्रज २१९ ध्रजि २२० ध्वज २२१ ध्वजि २२२ गतौ'—धजति। ध्रञ्जति। ध्रजति। ध्रञ्जति। ध्वजति। ध्वञ्जति। 'कूज २२३ अव्यक्ते शब्दे'। चुकूज। 'अर्ज २२४ षर्ज २२५ अर्जने'। अर्जति-आनर्ज। सर्जति। ससर्ज। 'गर्ज २२६ शब्दे। गर्जति'। 'तर्ज २२७ भर्त्सने'। तर्जति। ततर्ज। कर्ज २२८ व्यथने। चकर्ज। खर्ज २२९ पूजने च। चखर्ज। 'अज २३० गतिक्षेपनयोः। अजति।

च्लि coming after these roots is optionally replaced by अङ्। Thus with अङ्=अमुचत् and without it—अम्रोचीत् ( इट्सिच् ईट् ) like अचुरतत्—अच्योतीत् ; स्तेयकरण means to 'steal'. The स of षस्ज् first becomes श by स्तोःश्चुना श्चुः and then becomes ज by "झलां जश् झशि'। गुजि ( गुञ्ज् ) cp. 'न षट्पदोऽसौ न जुगुञ्ज यः कलम्' (भट्टि)। आनर्च—दीर्घादेश of अभ्यास by 'अत आदेः', and then नुट् by 'तस्मान्नुड्द्विहलः'। मिम्लेच्छ—इकार in the अभ्यास is by 'एच इग्घ्रस्वादेशे'। वाञ्छि ( वाञ्छ् ) by नुम्। आयाम् means length. The root आञ्छि (आञ्छ्) does not take नुट् giving the form आनाञ्छ in लिट् for the rule 'अत आदेः' being in relation with natural short अs only—on account of the तपरकरण in अत्, there is no chance of दीर्घादेश and the absence of दीर्घादेश bars the नुड्विधि directed

by तस्मान्नुड् द्विहलः। But according to those who opine that the तपरकरण (of अत्) is for the facility in pronunciation ( मुखसुखार्थम् ), the form is आनाञ्छ with नुट्। कौटिल्य means, according to मैत्रेय to move or flee away. मूर्च्छा means 'to swoon' and to be superior to, to have influence over etc. उछि (उञ्छ्) means to glean. याद्‌व holds that उञ्छ means to glean the smallest parts of things whereas शिल means to collect a bunch containing so many parts. उञ्छाञ्चकार—उछि becomes गुरुमान् in connection with नुम् and then आम् comes in. उच्छी means to end or to come to a close. It is generally preceded by the उपसर्ग—वि। अज means 'to move or throw into'.

मित—। जॄ—स्तम्भु ( स्तम्भ् ) म्रुचु—म्लुचु—ग्रुचु ( ग्रुच् )—ग्लुचु—ग्लुञ्चु—श्विभ्यः+च इति च्छेदः। एभ्यः इति—स्पष्टम्। च्लेरङ्वेति—'च्लेः सिच्' इत्यत इच्लेरिति, 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यतोऽङिति, 'इरितोवा' इत्यतो वेति चानुवर्त्तते इति भावः। अम्रुचत्—अङ्पक्षे ; अम्रोचीत्—सिच् पक्षे इटि ईटि च प्राप्ते सिज्लोपे च रूपम्। एवमन्यत्र। स्तेयकरणम्=अपहरणम्। जुग्रोच इति—ग्रुचु इत्यस्य लिटि गुणे अभ्यास-ज-त्वे रूपम्। षस्ज् इत्यस्य सस्य जकारपरकत्वेन स्तोःश्चुनेति श्चुत्वम् ( श ) तस्य च श्चुत्वस्य ( शकारस्य ) 'झलां जश् झशीति' जश्त्वम्। गुञ्ज्यात्—आशीर्लिङि रूपम्। इदित्त्वादनिदितामिति न—लोपो नेति बोध्यम्। आनर्च्छ इति लिटि नुडागमे रूपम्। मिम्लेच्छ इति "एच इगिति" ह्रस्वादेशः। आञ्छि इति—आयामो दैर्घ्यम्। अत आदेरिति—अत्र मतद्वयमप्यस्ति—तत्र प्रथममतमाह—तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थमिति। एतन्मते अत आदेरित्यस्याप्रवृत्त्यातस्मादिति नुडागमो न, तेन आञ्छ इत्येव लिटि रूपम्। तपरकरणं मुखसुखार्थम् उच्चारणसौकर्य्याय इत्यस्मिन् मते तु नुडपि भवति तेन आनाञ्छ इत्येव लिटि रूपमिति। मुर्च्छेति। समुच्छ्रयार्थो यथा—'न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्च्छति मारुतस्य' रघु २य सर्गः।

व्युच्छति दुहितादिवः' इति ऋग्वेदः। अजेति—गत्यां क्षेपणे चेत्यर्थः।

२२९२। अजेर्व्यघञपोः ॥२।४।५६॥

टी—। अजे'र्वी' इत्ययमादेशः स्यादार्धधातुकविषये—घञमपं च वर्जयित्वा। 'वलाद्यार्धधातुके वेष्यते'। विवाय। विव्यतुः। विव्युः। अत्र वकारस्य हल्परत्वात् 'उपधायां च' (२२६५) इति दीर्घे प्राप्ते, 'अचः परस्मिन—' (५०) इति स्थानिवद्भावेनाचपरकत्वम्। न च 'न पदान्त—' (५१) इति निषेधः। 'स्वर-दीर्घ-यलोपेषु—लोपाजादेश एव न स्थानिवदि'त्युक्तेः। थलि 'एकाचः—' इतीस्निषेधे प्राप्ते—

In respect of आर्द्धधातुक, the root अज is replaced by (the substitute) वी, except when घञ् and अप् follow. This substitute is optionally enjoined (intended) when a वलादि आर्द्धधातुक affix follows. विवाय—अज + लिट् णल् = वी णल = वीवी णल् = विवैअ (अभ्यासह्रस्वः by 'ह्रस्वः' and अङ्गवृद्धि by 'अचो ञ्णिति' (254—7. 2. 115) then आयादेशः)। विव्यतुः—वि वी + अतुस् and विव्युः = विवी + उस्: In विव्यतुः and विव्युः, a long substitute was due to the इ of वि, वकार (वि व् य् अतुस्) being followed by a य; but this य् being treated as vowel by स्थानिवद्भाव (ई being changed into य् due to अतुस् which follows) by the rule 'अचः परस्मिन् etc' this वि cannot have a long substitute taught by the rule 'उपधायां च'। And it cannot be rejoined that the स्थानिवद्भाव of यकार is barred by the rule 'न पदान्तद्विर्वचनवरेयलोप etc' (51.); for there is

the saying ( of the Varttikakara ) that 'in the matter of स्वर (accent), दीर्घ ( lengthening ) and यलोप ( the elision of य् ) only that sort of अजादेश ( substitute of an अच् ) which elides, is to be treated as not स्थानिवत् । But here the यकार does not elide hence it is स्थानिवत् and consequently the इकार is not lengthened by the rule 'उपधायां च' (2265 ). Thus विव्यतुः विव्युः are defended. Now the prohibion of इट् being due to the affix यल् on account of the एकाच्त्व ( monosyllabicness ) of the root वी by the rule 'एकाच उपदेशेऽनुदात्तात्' (2246 ):—

मित— । अजेः + वी + अघञपोरितिच्छेदः । 'आर्द्धधातुके' इत्यधिकृतम् । घञ् च अप् च घञपौ ( द्वन्द्वः ) । न तथा = तयोः, घञि अपि च परतोऽवर्त्तमाने सति अजधातोःस्थाने 'वी' इत्यादेशः स्यात्—आर्द्धधातुकविषये । 'आर्द्धधातुकविषये' इत्यनेनै-तज् विज्ञायते यद् 'आर्द्धधातुके' इति यदधिकृतं विद्यते तद् विषयसप्तम्येव न परसप्तमी ( परार्थिका सप्तमी ) । तेन यङि अजेर्वीभावोत्तरं वेवीयते इति सिध्यति । परसप्तम्याश्रयणे तु अजेर्हलादित्वाभाद् यङ् न स्यादिति । अघञपोः किम्— समाजः ( घञ् ) ; 'समुदोरजः पशुषु'—समजः । उदजः । इति अप् । समाजो मनुष्याणां समजः पशूनाम् । इह अघञपोरित्यनूच्यमानेऽपि इष्टसिद्धिः स्यात्— लिटि वेत्यनुवर्त्तते । इयञ्च व्यवस्थितविभाषा । तेन घञि अपि च न भवति, लुग्टि वलादावार्द्धधातुके तु विकल्पः । अन्यत्र तु 'आर्द्धधातुके नित्यमि'ति भाष्यकैयट— सम्मतम् । विवाय इति । अज् + लिट् णल् इतिस्थिते वीभावोत्तरं वीवी अ इति । णलो णित्त्वात् 'अचोञ्णिति' इति वृद्धौ, आयादेशे, अभ्यासह्रस्वे च रूपम् । विव्यतुः—विव्युः अतुसुसोः णित्वाद्यभावात् वृद्ध्यभावे 'इकोयणचि' इति यणादेशे रूपम् । ननु यणादेशेन विव्य् अतुम् इति जाते द्वितीय वकारस्य हल्परत्वात् 'उपधायां च' (२२६५) इत्यनेन प्रथमवकारादिकारस्य दीर्घः स्यादित्यत आह— अत्र वकारस्येति । अत्रेति विव्यतुरित्यत्र । 'वकारस्येति' द्वितीयवकारस्य । हल्परत्वात्

यकारपरत्वात्, दीर्घ इति प्रथमवकारादिकारस्य। स्थानिवद्भावेन अच्परकत्वम् इकारपरत्वमेव, न यकारपरत्वमिति भावः। ननु 'न पदान्तद्विर्वचनवरेयलोप—' (५१) इति दीर्घविधौ स्थानिवद्भावस्य निषेधात् कथमच्परकत्वमिति चेदत्राह—न चेति। कारणमाह—स्वरदीर्घेति। स्वरविधौ—दीर्घ विधौ यलोपे च विषये केवलं लोपाजादेश एव—योऽजादेशः लुप्यते स एव न स्थानिवत् इत्युक्तेः वार्त्तिककृतेति शेषः। तेनात यलोपाभावात् स्थानिवद्भावेनाच्परकत्व' भवत्येवेति हृदयम्। इदानीं वि वी थल् इति स्थिते वी इत्यस्य एकाच्त्वेन 'एकाच उपदेशेऽनुदात्तात्' (२२४६) इत्यनेन इण्निषेधे प्राप्ते, भवेन्नवेति समाधित्सन्नाह—थलीति—।

## २२८३। कृ-सृ-भृ-वृ-स्तु-द्रु-स्रु-श्रुवो लिटि ॥७।२।१३॥

**दी—। एभ्यो लिट इण्न स्यात्। कादीनां चतुर्णां ग्रहणं नियमार्थम्। प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्य इति। ततश्चतूर्णां थलि भारद्वाज-नियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम्।**

The augment इट् is not prefixed to लिट् affixes coming after these roots. The acceptance of the four roots ( कृ, सृ, भृ, वृ in the above rule) is in a restricted sense. ( And the restriction is this that ) all the cases of the prohibition of (the augment ) इट् in लिट्—whether owing to a प्रकृति ( root ) or a प्रत्यय ( affix )—are valid in the लिट् of कृ सृ भृ वृ only and of none else. (Here कृ, सृ and भृ these three are अनुदात्त. Hence the' prohibition of इट् here by the rule 'एकाच उपदेशेऽनुदात्तात्' is to be regarded as प्रकृत्याश्रय whereas the same prohib-

ition is to be taken as प्रत्ययाश्रय in case of the root वृ by the rule श्र्युकः किति' ( 2381—7. 4. 11 ). Then the acceptance or mention of the next four roots ( स्तु, द्रु, स्रु, श्रु ) is to prohibit the augment इट् from the affix थल् ( following the roots स्तु, द्रु, स्रु and श्रु ) which had the chance of इट् on account of their falling beyond the restriction or limit instituted by Bharadwaja stated in the rule 'ऋतो भारद्वाजस्य, (2296 ) and also to prohibit the same ( the augment इट् ) from the affixes like व and म (coming after these four स्तु, द्रु, स्रु and श्रु ) which had the occasion of इट् owing to their lying beyond the limit expressed in कृ, सृ, भृ and वृ above. Thus the rule 'एकाच उपदेशे' etc' does not apply in the case of वी and so it gets the augment इट् in थल्। Now to confirm that this aug. इट् to the root वी (which is beyond the भारद्वाजनियम ) is optional, he ( Bhattoji ) brings forward the three rules 'अचस्तास्वत्—', "उपदेशेऽत्वत" and "ऋतो भारद्वाजस्य :—

मित—। कृसृभृवृस्तुद्रुस्रुश्रु इत्यष्टानां समाहारद्वन्द्वः। ततः पञ्चमी ; तदाह एभ्य इति।' लिटीति षष्ठ्यर्थे सप्तमी ; तदाह लिट इति। 'नेड्वशि कृति' (२९८१—७।२।८ ) इत्यतः इडिति नेति चानुवर्तते। तदाह—इणस्यादिति। क्रादीनामिति। डुकृञ् करणे इति कृञ् हिंसायाम् इति च, इह 'कृ' इति निरनुबन्धग्रहणात् एकानुबन्धद्व्यनुबन्धयोर्ग्रहणमेवमग्रेऽपीति बोध्यम्। सृ गतौ, भृञ् संभक्तौ वृञ् वरणे च। सूत्रमिदं विभज्य व्याख्यार्हम्। तदाह—क्रादीनां चतुर्णां ( कृसृभृवृ ) ग्रहणं नियमार्थमिति! कोऽयं नियम इत्यपेक्षायामाह—प्रकृत्याश्रयः प्रत्ययाश्रयो वेति। तत्र प्रकृत्याश्रयास्त्रयः कृसृभृ इति। एषामनुदात्तोपदेशत्वात्, 'एकाच उपदेशेऽनुदात्तात्' ( २२४६ ) इति निषेधे प्राप्ते नियमार्थं वचनम्। वृङ्वृञोस्तु उदात्तत्वात् 'श्र्युकः

किति' (२३८१—७।४।११ ) इति प्रत्ययाश्रये च निषेधे प्राप्ते नियम आरभ्यते 'यावान् ( यत्परिमाणः ) इट्निषेधः स लिटि चेदित्यादि । अयमर्थः—इह 'एकाच उपदेशेऽनुदात्तात्' इत्यनेन 'श्र्युकः किती'त्यनेन च य इण्निषेध उक्त स लिटि चेत् सार्थको भवति तर्हि क्रादिभ्य ( क्रसृभृवृ इत्येतेभ्यः ) एव परस्य लिटो भवति नान्येभ्यः परस्य लिट इत्येवं नियमः । तेन वीधातोर्लिटि इड् भवत्येवेति फलितम् । तथा च वक्ष्यति—विव्यिव । विव्यिम इति । अन्यस्यापि एकाच इति निषेधेऽपि भवति यथा—भिद इत्यस्य लिटि विभिदिव । विभिदिम । एवं पेचिव । पेचिम—इत्यादि । क्रादीनां तु चकृव । चकृम । सस्रृव । सस्रृम । बभृव । बभृम । ववृव । ववृमइति । अथ द्रु्वादीनां ग्रहणं किमर्थमित्यत्राह—तत्श्चतुर्णाम् स्तु, द्रु, स्रु, श्रु इत्येषाँ ग्रहणमित्यध्याहार्य्यम् । थलि थल्प्रत्यये परतः भारद्वाजनियमप्रापितस्य 'ऋतो भारद्वाजस्य' (२२९६) इत्यग्रे यो नियमो वक्ष्यते तं प्रापितस्य गमितस्य इटोनिषेधार्थमित्यं कोऽन्वयः । व-मादिषु प्रत्ययेषु परेषु प्रागुक्तक्रादिनियमप्रापितस्य च इटो निषेधार्थमित्यपरोऽन्वयः । अयं निगलितार्थः—'ऋतो भारद्वाजस्य' इत्यनेन 'तासौ नित्यानिट ऋदन्तस्यैव थलो नेडि'—त्युच्यते । तेन अन्यस्य स्यादेवेति फलितम् । स्तुद्रु्वादयश्चत्वारश्च ऋदन्ताः । तेन तेषाम् इटः प्राप्तिः । सैव प्राप्तिर्निषिध्यते ( थलि ) यथा तुष्टोथ, दुद्रोथ, सुस्रोथ, शुश्रोथ इति । किञ्च 'क्रसृभृवृ'—इत्येतस्य व्याख्यानावसरे इदानीमेवोक्तं यत् क्रादीनां चतुर्णामेव लिट इण्नित्येष नियमः । तेन क्राद्यन्येभ्य इण्निषेधो लिटि नेति फलितम् । स्तुद्रु्वादयश्च क्राद्यन्ये तेन तेषामिट् प्राप्तिः । सात्र प्रतिषिध्यते । तेन वमादिषु परेषु तुष्टुव—तुष्टुम, दुद्रुव—दुद्रुम, सुस्रुव—सुस्रुम, शुश्रुव—शुश्रुम इति भवत्येव निषेधः । अथ वीधातोस्थलि भारद्वाजनियमादिड्विकल्पं दर्शयिष्यन् —तदनुकूलत्वेन तत्पूर्व्वस्थितसूत्रद्वयं क्रमेणावतार्य्य व्याचष्टे—

## २२९४ । अचस्तास्वत्थल्यनिटो नित्यम् ॥७।२।६१॥

टी—उपदेशे अजन्तो यो धातुस्तासौ नित्यानिट्, ततः परस्य थल इण्न स्यात् ।

The augment इट् is not enjoined to the affix थल् coming after a root, which is read as अजन्त or vowel-ending in the उपदेश or धातुपाठ and which is ever अनिट् in तासि। Thus चिचेथ, जुहोथ etc. are the instances.

मित—अच: + तास्वत् + थलि + अनिट: + नित्यम् इतिच्छेद:। उत्तरसूत्रात् 'उपदेशेऽत्वत:' इत्यत: उपदेशे इत्यपकृष्यते; तदाह—उपदेशे इति। धातुरित्याक्षेपलभ्यम्। अधातोस्थलभावात्। 'अच' इत्यनेन च 'येन विधिस्तदन्तस्ये'ति अजन्तस्यैव ग्रहणम्। तच्चेह विशेषणम्। तदाह—अजन्तो यो धातुरिति। तासौ इव तास्वत् 'तत्र तस्येव' (१७७९) इति सप्तम्यन्ताद् वति; तदाह तासौ इति। 'नित्यम्' इति 'अनिट:'इत्यस्य विशेषणम् तदाह नित्यानिट इति। अनिट् इति अविद्यमान: इट् अस्येति बहुव्रीहि:। 'थलि' इति सप्तम्यन्तमपि षष्ठ्यर्थस्य वाचकं तदाह—थल इति। 'गमेरिट् परस्मैपदेषु—' (२४०१—७।२।५८) इत्यत इडिति, 'न वृद्भ्यश्चतुर्भ्य:'(२२४८—७।२।५९) इत्यतोनेति चानुवर्त्तते। तदाह—इट् न स्यादिति। तेनायमर्थ:—उपदेशे यो धातुरजन्त: तत: परस्य तासे: यथा नित्यम् इट् न भवति एवम् तत: परस्य थल: अपि नित्यम् इट् न भवति इति। चिचेथ ( चि+लिट् थल् ) जुहोथ इत्याद्युदाहरणम्। अच इति किम्—बिभेदिथ। रुरोदिथ। भिद्रुदो रजन्तत्वाभावादिट्। उपदेशे इति किम्—जहर्थ (हृञ् हरणे + लिट् थल्) इह परत्वान्नित्यत्वाच्च गुणे रपरत्वे चकृते अजन्तत्वाभावात् एतत्सूत्रस्याप्रवृत्तौ इट् प्रसज्येत। अत उपदेशग्रहणं कृतम्। थलि इति किम्। पपिव। पपिम (पाधातोर्लिटि वमयो रूपे)। नित्यम् अनिट: इति किम्? स्वृ गतौ—सस्वरिथ—सस्वर्थ। नायं नित्यम् अनिट्। 'स्वरतिसूतिसूयतिधूञूदितो वा' ( २२७९ ) इति' इड् विकल्पसद्भावात्। तासौ किम्? लुलुविथ। नायं तास्यनिट् किन्तु सेडेवेति। इह 'तासि च क्लृप:' (७।२।६०) इत्यतोऽनुवृत्त्यैव तासिग्रहणसिद्धे: पुन 'तास्वत्' इति नातीव रमणीयमिति केचित्। वस्तुगत्या तु यस्य तासौ विद्यमानत्वं तस्मादेव परस्य थलो नेडित्येतल्लाभार्थं तास्वद् ग्रहणमावश्यकमेवेत्यन्ये। तेन 'लिट्यन्यतरस्याम्'—( २४२४—२।४।४० ) इत्यतोऽद: घस्लृभावे 'जघसिथ' इत्यत्र न निषेध:। घसस्तासौ इडभावात्—इति अद भक्षणे इत्यत्र स्वयमेव वक्ष्यति।

२२८५ । उपदेशेऽत्वतः ॥७।२।६२॥

**टी—उपदेशे अकारवतस्तासौ नित्यानिटः परस्य थल इट् न स्यात् ।**

The augment इट् is not prefixed to the affix थल् coming after a root which is read as having an अकार (short अ) in the उपदेश or धातुपाठ and which is ever अनिट् in the तासि विभक्ति (लुट् third sing.). Thus शक्लृ (शक्)—शशक् थ । पच्—पपक् थ etc, are instances hereof. Here इट् was due on account of the क्रादिनियम । That is again barred in case of such roots by this rule.

मित—उपदेशे + अत्वत इतिच्छेदः । अत्वत इति अत् ह्रस्वाकारः यस्य (धातोः) अस्तीति मतुप् अत्वान् । तस्य—अत्वत इति । अद्दत :—इति जश्त्वं न भवति 'तसौ मत्वर्थे' (१८६६—१।४।१९) इत्यनेन तत्वात् । फलितमाह—अकारवत इति ह्रस्वाकारवत इत्यर्थः । 'अचस्तास्वत् थल्यनिटो नित्यम्' इति पूर्व्वसूत्रात् अच इति वर्ज्जं सर्व्वमप्यत्रानुवर्त्तते तदाह—तासौ नित्यानिट इत्यादि । शक्लृ (शक्) तस्य थलि शशक्थ । पच्—पपक्थ । यज्—इयष्ठ इत्याद्युदाहरणम् ! अत्र क्रादिनियमात् इट् प्राप्तः । स प्रतिषिध्यते । उपदेशे इति किम्—'कृष विलेखने—चकर्षिथ । अत्वत इति किम् ? बिभेदिथ भिदृ इति धातुः । अत् इति तपरः किम्—राद्धा । रराधिथ—राध इति धातुः । तास्वत् इति किम्—चकर्षिथ । 'जगर्हिथ तासौ नैतौ सेट्कौ (कर्ष्टा, ग्रहीता) । सनिग्रहगुहोश्चेति सन्येव नित्यमनिट—(जिघृक्षति) न तु तासौ । नित्यानिटः किम् ? अञ्ज आनञ्जिथ । भाष्ये—तु ऊदित्वात्तासौ वेडित्युक्तम् । तस्य चक्रमिथेत्युदाहरणम् ।

२२८६ । ऋतो भारद्वाजस्य ॥७।२।६३॥

**टी—तासौ नित्यानिट ऋदन्तस्यैव थलो नेट् भारद्वाजस्य मतेन । तेनान्यस्य स्यादेव । अयमत्रसंग्रहः—**

अजन्तोऽकारवान् वा यस्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ।

न च स्रुद्रादीनामपि थलि विकल्पः शङ्क्यः । 'अचस्तास्वत्—' ( २२९४ ) इति 'उपदेशेऽत्वतः' ( २२९५ ) इति च योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्त्तकः; 'अनन्तरस्य—' इति न्यायात् । विवयिथ । विवेथ । आजिथ । विव्यथुः । विव्य । विवाय-विवय । विव्यिव । विव्यिम । वेता—अजिता । वेष्यति । अजिष्यति । अजतु । आजत् । अजेत् । वीयात् ।

According to ( the grammarian ) Bharadwaja, the augment इट् is forbidden to the affix थल् of those roots alone that are ever अनिट् in तासि and at the same time end in ऋकार । Therefore ( it is hereby inferred that ) other roots have the augment इट् । Here we collect ( in a verse the instructions of these four rules—कसृभृवृ(2293)......ऋतो (2296).—

A root which is अजन्त ( that is, ends in a vowel other than अ ) or which contains an अकार in it gets the augment इट् optionally in थल् provided it is wanting in इट् in the affix तास् ( लुट् third. sing. ) ; ( but ) a root which is ऋदन्त or ऋ-ending and is wanting in the augment इट् in the affix तास्, never gets इट् in the affix थल् and all roots other than क्रादि (कसृभृवस्रुद्रु स्तु श्रु ) always get the augment इट् in लिट्' । Here one cannot apprehend that as on the one hand the rule 'कसृभृवृ'

( 2293 ) does not sanction इट् to( कृसृभृवृ and )स्तु, द्रु, स्रु, श्रु and as on the other hand the rule 'ऋतो भारद्वाजस्य' ( 2296 ) enjoins इट to स्तु, द्रु, स्रु, श्रु on account of their being non-ऋदन्त so the roots स्तु, द्रु, स्रु, श्रु should get the augment इट् in an optional way ; for according to the परिभाषा 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (परि—61 )——( A rule, may it enjoin or forbid anything ), either enjoins or forbids (only) that which is nearest ( to it in some other rule )——, the नियम or restriction of Bharadwaja ( by the rule ऋतो भारद्वाजस्य ) over rules the prohibition ( निषेध ) instituted by the two rules' 'अचस्तास्वत् etc' ( 2294 ) and उपदेशेऽत्वतः' ( 2295 ) only, and not also the prohibition established by the rule कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि' ( 2293 ) in as much as 'अचन्तास्वत्—and 'उपदेशेऽत्वतः' are nearer to 'ऋतो भारद्वाजस्य' than 'कृसृभृवृ—'. The plain meaning of all this is this :—All the four rules 'कृसभृवृ—' ( 7. 2. 13 ), 'अचस्तास्वत् —' ( 7. 2. 61 ), 'उपदेशे—' (7. 2. 62 ) and 'ऋतः—' (7. 2. 63) prohibit the augment इट् from such and such particular roots. Of these the rules 'अचस्तास्वत्—' etc downwards are in order of Panini ( 61-62-63 ) but the rule 'कृसृभृवृ—' stands far remote from 'ऋतो भारद्वाजस्य' । Here the भारद्वाजनियम supercedes अचस्तास्वत् and उपदेशे and not कृसृभृवृ( There are two नियमs or regulations viz. the क्रादिनियम ( explained in the rule 'कृसभृवृ' ) and the भारद्वाजनियम which is expressed by the rule 'ऋतः etc' ). Now the भारद्वाजनियम sanctions इट् to all roots save and except तासी नित्यानिट्, ऋदन्त roots in थल् । Thus the roots

taught by the rules 'क्रसृभृवृ—', 'अचस्तास्वत्—', and 'उपदेशे—' also get the aug. इट्—so इट् becomes optional in their cases. But there runs the counteracting परिभाषा—'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा——'Sanction ( विधिः ) or prohibition ( प्रतिषेधः ) is possible ( only ) in case of what immediately follows upon or precedes to the rule enjoining or forbidding something'. Thus इट् is sanctioned by भारद्वाजनियम, to 'अचस्तास्वत्—' and 'उपदेशे—' only for they immediately precede to 'ऋतः—' and not to 'क्रसृभृवृ—' which lies far remote from 'ऋतः—'. Hence इट् in cases of स्तुद्रुस्रुश्रु is compulsory and not optional and we get तुष्टोथ दुद्रोथ सुस्रोथ शुश्रोथ ( without इट् ) and it ( इट् ) is optional in cases of 'अचस्तास्वत्—' and 'उपदेशे—' only and we get पपाथ—पपिथ ( पा + थल् ) and पपक्थ—पेचिथ in order (without and with इट् ).

Now in the case in hand the root substitute वी being अजन्त and नित्यानिट् in तास् it gets इट् optionally ( according to भारद्वाजनियम ) giving विवयिथ ( वी वी थल्—वि वे इट् थल् विवय् इथ—गुण by सार्वधातुकार्ध—' and not वृद्धि for थल् is not णित् or ञित् ) and विवेथ ( without इट् ). And this वीभाव being optional when वलादि आर्धधातुक follows ( 'वलादावार्धधातुकेवेष्यते' (वर्त्तिक—under —2292 ) another form in थल् is आजिथ ( with इट् ) and this अज् not being अनुदात्त there is no prohibition of इट् by 'एकाच —2246 ). विव्यथुः ( अथुस् ) । विव्य ( विविअ ) । विवाय—विवय ( optional वृद्धि by णलुत्तमो वा' ) विव्यिव—विव्यिम ( इट् comes in by क्रादिनियम cp. 'क्राद्यन्यो लिटि सेड्भवेत्' thus इट् is नित्य here. वी वी इट् व—वि

य इव—विव्य् इव—विव्यिव ( यणादेश )। Similarly विव्यिम। वेता—वी+लुट्+तास् ( गुण )। अजिता—अज्+लुट् तास्—अज इट् तास्। अज is सेट् but वी is अनिट् in तास्। वेष्यति ( वी+स्यति absence of इट् ) अजिष्यति ( अज+लृट् स्यति with इट् ), अजतु—( लोट् )—आजत् (लङ्) अजेत्— ( विधिलिङ् )। लोट् लङ् and विधिलिङ् not being आर्द्धधातुक there is no वीभाव by the rule 'अजेर्व्यघञपोः'। वीयात्—( आशीर्लिङ् ); आशीर्लिङ् being आर्द्धधातुक अज् is replaced by वी but as it is not वलादि आर्द्धधातुक so the आशीर्लिङ् form of अज is nil. Now गुण being due by 'सार्व्वधातुकार्द्धधातुकयोः' to वी in सिच्—Bhattoji lays down the special ( वृद्धि ) rule for the लुङ् form of इगन्त ( as वी ) roots :—

मित—। 'अचस्तास्वत्—' इत्यतः 'अच' इतिवर्ज्जं सर्व्वमप्यनुवर्त्तते ; तदाह तास्ावित्यादि। नात्र भारद्वाजग्रहणं 'गिरेश्च सेनकस्ये'त्यादिवत् पूजार्थं किन्तु मतान्तराविष्करणार्थमित्याह—भारद्वाजस्य मतेनेति। अयमेव भारद्वाजनियमः। तदाह ऋदन्तस्यैवेति। तेन कृञ् हरणे इत्यादीनां थलि जहर्थ इत्यादि सिद्धम्। ऋकारभिन्नाजन्तस्य तु इट् स्यादेवेत्याह—तेनान्यस्येति। अयमत्र मतनिष्कर्षः—भारद्वाजमते अनृदन्ताद् धातोः परस्य थल इट्। अन्येषां मते तु ( पाणिनेरपिमते ) 'अचस्तास्वत् 'उपदेशे—' इति अत्र ( अनृदन्तत्वात् ) इट् निषिद्धः एव। अतो मतविकल्पे न इट्विकल्पः। तेन अजन्तेषु ( अनृदन्तेषु ) 'पा' इत्यादिषु, अत्वत्सु च 'पच्' इत्यादिषु थलि इडविकल्पात् रूपद्वयम्=पपाथ—पपिथ। पपक्थ—पेचिथ इति। अथेदानीं 'कृसृभृवृ—', 'अचस्तास्वत्—' 'उपदेशे—', 'ऋतो—' इति सूत्रचतुष्टयविषयम् एकत्र दर्शयिष्यन्नाह—अयमत्रेति—यः अजन्तः अकारवान् वा ( धातुः ) तासौ अनिट् ( भवति ), अयं (सः धातुः ) थलि वेट् ( विकल्पितेट्कः ) भवति इति पूर्व्वार्द्धस्यान्वयः। अजन्तइति ऋदन्तभिन्नाजन्त इति बोध्यम्। एतच्च 'अचस्तास्वत्—' इत्यस्य विवरणम्, 'उपदेशे—' इत्यस्य व्याख्यानं तु अकारवान्'इति। तेनायमर्थः—ऋदन्त-

भिन्नाजन्तो यो धातुः यश्च अकारवान् धातुः तासविभक्तौ नित्यानिट् भवति स च थलि इडागमं लभते। उदाहरणं—पपाथ पपिथ, पपक्थ पेचिथ इति। अथोत्तराङ्‌र्थः—ऋदन्तइति—(यः) ऋदन्त ईदृक् (तासौ नित्यानिट्) (स ऋदन्तः थल्यपि) नित्यानिट् भवति। क्राद्यन्यो (धातुस्तु) लिटि (नित्यम्) सेट भवेत् इति। अयं भावः— य ऋकारान्तो धातुः तासौतासवभक्तौ नित्यमनिट् भवति स थल्यपि अनिडेव भवति यथा—हृञ् हरणे—हर्त्ता। जहर्थ इति। यस्तुधातुः क्रादिभिन्नः 'कृसृभृवृस्तुद्रुस्रुश्रु' इत्यष्टभिन्न एतेषां कोऽपि न भवतीत्यर्थः, स धातुर्लिटि नित्यं सेट् भवति—इटं लभते इति भावः। 'अचस्तास्वत्—' इति पाणिनिमते 'ऋतो—' इति भारद्वाजमते च तस्य विहीनेट्-कत्वादिति विभावनीयम्। सस्मरिव—सस्मरिम। जुहुविव—जुहुविम इत्याद्युदाहरणम्। ननु भारद्वाजनियमात् 'अचस्तास—' 'उपदेशे' इत्यनयोरिव 'कृसृभृवृ—' इत्येतस्यापि ऋदन्तभिन्नानां स्तुद्रुस्रुश्रुवां लिटि थलि इड् विकल्पः स्यादिति मन्वान आशङ्कते —न चेति। तत्र युक्तिं दर्शयति अचस्तावदिति। योगद्वयप्रापितस्येति—सूत्रद्वयंगमितस्य एव (केवलं) हि (यतः) प्रतिषेधस्य (इण्निषेधस्य उक्तसुत्रद्वये य इण्निषेधो विहितस्तस्येति भावः) भारद्वाजनियम 'ऋतो भारद्वाजस्येति योग इत्यर्थः निवर्त्तकः पक्षे निवारकः तत्र तत्र योगद्वये तत्तदिण्निषेधं वाधित्वा स्वनियमवलात् पक्षे तत्तत्स्थले इडागमं विदधातीत्यर्थः। ननु कुत एवंविधा विनिगमनेति चेदत्राह—'अनन्तरस्येति न्यायादिति। परिभाषेयं 'अनन्तरस्य विधिर्वा भवति प्रतिषेधोवेति' पूर्णं शरीरम्। अनन्तरस्य योगान्तरेणाव्यवहितस्य योगस्य विधिः विधानं ग्रहणमिति यावत् प्रतिषेधः निषेधस्य वा विकल्पेन भवति। 'अचस्तास्वत्—' (७२।६१) 'उपदेशेऽत्वत' (७।२।६२) इतिचानन्तरं सूत्रद्वयम्। तेन एतयोरेवेण्निषेध—निवर्त्तकत्वं इट्विधायकत्वमित्यर्थः भारद्वाजनियमस्य (ऋतो भारद्वाजस्येति सूत्रस्य)। ननु 'कृसृभृवृ—' इत्यस्यापि ऋतो भारद्वाजस्येति सूत्रं निवर्त्तकं भवेदिति वाच्यं तस्य (७।२।१३) बहुसूत्रव्यवहितत्वेन प्राप्त्यभावात् इति। न च तर्हि कृसृभृ—सूत्रे स्तुद्र्वादीनां पाठो नोचित इत्यपि वाच्यम्; क्रादिनियमप्रापितस्य इटो वमादिषु निषेधार्थं तेषां ग्रहणस्य आवश्यकत्वादिति ध्येयम्। तेन तुष्टुव तुष्टुम, दुद्रुव दुद्रुमइत्यादि

सिध्यति। ननु 'अनन्तरन्यायात्' ऋतौ भारद्वाजस्येत्यनेन—'उपदेशे' इत्यस्यैव बाधि उचित न तु 'अचस्तास्वत्—' इत्यस्यापि सूत्रान्तरेण व्यवहितत्वादिति चेत्। न। अत्वत्सु धातुषु ऋदन्तधातूनामभावेन 'यदि अत्वतां थलि इण्निषेधस्तर्हि ऋदन्तानामेवेति नियन्तुमशक्यत्वात्। नचैवं 'अचस्तास्वत्—' इत्यनेनैव बाधोऽस्तु, तत् कथं—'योगद्वयप्रापितस्यैव हि प्रतिषेधस्य' इत्याद्युक्तमित्यपि वाच्यम्—'अचस्तास्वत्' उपदेशे—' इत्यनयोः परस्परभिन्नत्वेपि परस्परशब्दोपादानमहिम्ना समानयोगक्षेमत्वेन एकसूत्रवत् प्रतीयमानत्वादित्याहुः। एवं च 'उपदेशेऽत्वतोऽचस्तास्वत् थल्यनिटो नित्यम्' इत्येकयोगकरणमेव निःशङ्कम्। अन्ये तु 'अचस्तावत्—' इत्यनन्तरमेव ऋतौ भारद्वाजस्येति पठनीयमित्याहुः। भाष्ये तु 'नेड् वशि कृति' इत्यत्र वस्वेकाजाद्घसामित्यत्र च 'सामर्थ्ययोगात् स्नुक्रादीनामिड् निषेधः सिध्यति इति समाहितम्। सामर्थ्यञ्च इदम्—'नेड्वशि कृति' (७।२।८) इत्यनेन इण्निषेधः प्राक् आरभ्यते ततः 'आर्द्धधातुकस्येड् वलादेः' (७।२।३४) इत्यनेन इड् विधिरारभ्यते। किञ्चिद्विधायैव हि तन्निषेधो न्याय्यः अत्र तु तद्विपरीतम् इत्येवं रूपं सामर्थ्यम्।

तदेवं प्रकृते अजेस्थलि वीभावे अजन्तत्वेन तासौ नित्यानिट्कत्वाच्च इड्विकल्पः। विवयिथ (वीवीइट् थ—विवेइथ) इति गुणायादेशेरूपम्। विवेथ इति (इडभावपक्षे)। अजिथ इति 'वलादावार्द्धधातुके वेष्यते—' इति 'वी' इत्यादेशाभावात्—अजधातोरननुदात्तत्वाञ्च इट्। अत आदेरिति सवर्णदीर्घः विव्यथुरिति—वीवी अथुस्—विवी अथश्च—विव्थ् अथुस् 'एरनेकाचोऽसंयोगपूर्व्वस्येति यणादेशः (कित्त्वाद् गुणाभावो द्रष्टव्यः) विवि अथुस्—विव्यथुः। विव्य ति थस्य अकारावशेषे पूर्व्ववत्। विवाय—विवय—'णलुत्तमो वेति वृद्धिविकल्पः। विव्यिव विव्यिम—'क्राद्यन्यो लिटि सेड्भवेदित्युक्तत्वादिट् पूर्व्ववत्। यणादेशः। वेता—अजिता—'वलादावार्द्धधातुकेवेष्यते' इति वीभावविकल्पः। वीभावे इडभाव एकाच्त्वात्। अजेश्चिट्। एवं वेष्यति अजिष्यति। आजतु—आजत्—अजेत्—लोट् लङ् विधिलिङ्षु रूपाणि सार्व्वधातुकत्वेन वीभावाभावात्। वीयात्—आशीलिङि यासुटः वलादित्वाभावात् केवलं वीभाव एव न विकल्पः। ततश्च कित्त्वाद् गुणाभावे रूपम्। अथ वीभावस्य सिचि गुणे (सार्व्वधातुकार्द्धधातुकयोः) प्राप्ते वृद्ध्यर्थमाह—

२२८७। सिचि वृद्धिः परस्मैपदेषु ॥७।२।१॥

टी—इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदपरे सिचि। अवैषीत्-आजीत्। अवेष्यत्-आजिष्यत्। 'तेज २३१ पालने' तेजति। 'खज २३२ मन्थे' खजति। 'खजि २३३ गतिवैकल्ये' खञ्जति। 'एज़ २३४ कम्पने'। एजाञ्चकार। 'टुओस्फूर्जा २३५ वज्रनिर्घोषे'। स्फूर्जति। पुस्फूर्ज। 'क्षि २३६ क्षये'। अकर्मकः। अन्तर्भावितण्यर्थस्तु सकर्मकः। क्षयति। चिक्षाय। चिक्षियतुः। चिक्षियुः। चिक्षेथ। चिक्षियिव। चिक्षियिम। क्षेता।

An अङ्ग (here verbal stem) ending in इक् (इ, उ, ऋ, ऌ) takes the वृद्धि substitute when in the परस्मैपद the affix सिच् follows. Thus वी + सिच् + तिप् = अ वी सिच् ईट् त् = अ वै स् ईत्—अवैषीत् (no इट् the वीभाव being एकाच्)। अज + सिच् ति = अ अज इस ईत् = आजीत् by 'अत आदेः'—दीर्घः, सलोप by इट ईटि' and want of वृद्धि by 'नेटि'। अवेष्यत् etc in लृङ्। एजाञ्चकार—आम् by 'इजादेश्च गुरुमतोऽनृच्छः'। टुओस्फूर्जा—टु for द्वितोऽथुच् (स्फूर्जथुर्वज्रनिर्घोषे), ओ for "ओदितश्च" (स्फूर्णः—स्फूर्णवान्) and ऊ in स्फूर्जा is to show the अनित्यत्व of दीर्घ by 'उपधायां च' (2265).

मित—। 'इको गुणवृद्धी' इति परिभाषया इह वृद्धिपदेन इगन्तस्योपस्थितिराक्षिप्यते। अङ्गस्येति चाधिकृतं वर्त्तते। येन विधिरिति च। तदाह—इगन्ताङ्गस्येति। अवैषीत्—अट् सिच् ईट् तिप् (त्) = अ वैस् ईत् वीभावस्यैकाच्त्वादिडभावः। आजीत्—अट् अज् इट् सिच् ईट् त् = अ अज् इस् ईत्—अजीत्—'अत आदे'रिति अभ्यासदीर्घः, 'नेटी'ति हलन्तलक्षणाया वृद्धेरभावः, 'इट ईटी'ति सलोपश्च।

अवेष्यत्—आजिष्यत् लृङि रूपे। ऋञ्जति इति इदित्वान्नुम्, परसवर्णः। एजाञ्चकार—'इजादेश्च गुरुमत' इत्याम्। टुओस्फुर्जा—ट्वित्करणमथुजर्थम् स्फूर्जथुः। ओदित्करणं निष्ठानत्वार्थम्—स्फूर्ण-स्फूर्णवान्। दीर्घ ऊकारः'उपाधायांचे'त्यनेन दीर्घादेशस्यानित्यत्वज्ञापनाय। तेन हुर्च्छति हुर्च्छति इति ह्रस्वोऽपि भवति इति केचित्। अन्तर्भावितण्यर्थोनाशनार्थः। चयति सार्व्वधातुकार्द्धकस्येति गुणः। चिचाय—'अचोञ्णिति' (२५) इति वृद्धिः। चिचयिथ—चिचेथ—भारद्वाजनियमात्—थलि वेट्कत्वम्। इटि गुणअयादेशः। चिचियिव। चिचियिम—क्रादिनियमात् नित्यम् इट्। पूर्व्ववत् गुणे अयादेशः। चेता—एकाच्त्वादिडभावः।

२२९८। अकृत्सार्व्वधातुकयो र्दीर्घः ॥७।४।२५॥

दी—अजन्तस्याङ्गस्य दीर्घः स्याद् यादौ प्रत्यये परे, न तु कृत्सार्व्वधातुकयोः। चीयात्। अचैषीत्। 'चिज २३७ अव्यक्त शब्दे। कूजिना सहायं पठितुं युक्तः। चिचेज। लज २३८ लजि २३९ भर्त्सने। 'लाज २४० लाजि २४१ भर्त्सने च'। 'यज २४२ यजि २४३ युद्धे'। 'तुज २४४ हिंसायाम्'। तोजति। तुतोज। 'तुजि २४५ पालने'। गज २४६ गजि २४७ गृजि २४८ गृञ्जि २४९ मुज २५० मुजि २५१ शब्दार्थाः'। 'गज माने च'। 'वज २५२ व्रज २५३ गतौ' ववजतुः। 'वद-व्रज—' (२२६७) इति वृद्धिः। अव्राजीत्।

अथ टवर्गीयान्ताः शाड्न्ता अनुदात्तेतः षट्त्रिंशत्। 'अट्ट २५४ अतिक्रमणहिंसयोः। टोपधोऽयम्। 'तोपध' इत्येके अट्टते। आनट्टे। 'वेष्ट २५५ वेष्टने'। विवेष्टे। 'चेष्ट २५६ चेष्टायाम्'। अचेष्टिष्ट। 'गोष्ट २५७ लोष्ट २५८ 'कटे २५४

वर्षावरणयोः'। 'चटे' इत्येके चकाट। सिचि 'अतो हलादेर्लघो'रिति (२२८४) वृद्धौ प्राप्तायाम्।

An अङ्ग (verbal stem), that ends in a vowel takes, the दीर्घ substitute when an affix, beginning with a य, follows; but it (अङ्ग) does not take a दीर्घ substitute when a यादिप्रत्यय of कृत् (कृदन्त) and सार्व्वधातुक (विधिलिङ्) follows. Thus चि चये in आशीर्लिङ् (which is आर्द्धधातुक) becomes चीयात् but in कृत्—प्रकृ+ल्यप् प्रकृत्य, प्रहृ ल्यप् प्रहृत्य and in विधिलिङ् चिणुयात्—श्रणुयात् etc without दीर्घ; अचैषीत्—अट् चि सिच् ईट् त् (तिप्)—'सिचि वृद्धिः', want of इट् on account of एकाच्त्व of चि। कुजिना etc—It is proper to read चीज with कूजि।

अथ etc.—शाड्न्ता i.e. ending in शाड्श्लाघायाम्। विवाधः means cheating.

अथ गद्यन्ता etc—क्लेट्ट स्नेड् उन्मादे to go mad—the second ends in a डकार। It is read along with the टान्त (ending in a ट) roots out of similarity in sense like नाधृ नाधृ याञ्चायाम्। In सिच् (of कटे or चटे) the वृद्धि substitute being due by 'अतो etc' (2284) we look forward.—

मित—। अकृत्सार्व्वधातुकयोः+दीर्घः इतिच्छेदः। 'अचश्च' (३५—१।२।२८) इति परिभाषोपस्थितेः, अङ्गाधिकारात् 'येनविधिस्तदन्तस्ये'त्यस्माच्च आह—अजन्ताङ्गस्य दीर्घ इति। 'अयङ् यिक्ङिति' (२६४९—७।४।२२) इत्यतो'यि' इत्यनुवर्त्तते। तेन च अङ्गाक्षिप्तप्रत्ययो विशेष्यते। तदादिविधिः। तदाह—यादौ प्रत्यये इति। सूत्रे अकृदित्यादि प्रसज्यप्रतिषेधस्तदाह—न तु कृदित्यादि। कृद्यकारे सार्व्वधातुक (विधिलिङ्)—यकारे च परे—अजन्ताङ्गस्य दीर्घो नेत्यर्थः। प्रकृत्य—प्रहृत्य, चिणुयात् श्रणुयात् इत्याद्युदाहरणम्। चीयात्—आशीर्लिङ आर्द्धधातुक-

त्वादनेन दीर्घः । अचेषीत्—(अट् चि सिच् ईट् त्) 'सिचि वृद्धि'रिति वृद्धिरेवा-च्लादिटोऽभावश्च । कूजिनेति—अयं चीज (चिज इत्यपि दृश्यते) पठितुं युक्त इति—अनेकाधिकत्यर्थः ।

अथ टवर्गीयान्ता इति । शाड्न्ता शाडृ श्लाघायामित्यन्ताः । गज गजीति 'गञ्जतु—मदिरागदम्' । शाडृ ( शाड् ) इत्यतो डलयोरेकत्वात् 'शालते' इति काश्यपः ।

अथ गध्यन्ता इति । द्वितीयो मंडू इत्यर्थः—अर्थसाम्यात् समानार्थकत्वात्—नाथतीति 'नाथृ नाधृ' याञ्चायामिति यथेत्यर्थः । कटे इत्स्य एदित्वाद्वृद्ध्यभाव इत्याह—

२२९९ । ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥७।२।५॥

टी— । ह-म-यान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि ॥ अकटीत् । 'अट २९५ पट २९६ गतौ । आट । आटतुः । आटुः । पपाट । पेटतुः । पेटुः । 'रट २९७ परिभाषणे—' । रराट । 'लट २९८ बाल्ये' । ललाट । 'शट २९९ रुजाविशरणगत्यवसादनेषु' । शशाट । 'वट ३०० वेष्टने' । ववाट । ववटतुः । ववटुः । ववटिथ । 'किट ३०१ खिट ३०२ त्रासे' । केटति । खेटति । 'शिट ३०३ षिट ३०४ अनादरे' । शेटति । शिशेट । सेटति । सिषेट । 'जट ३०५ झट ३०६ संघाते' । 'भट ३०७ भृतौ' । 'तट ३०८ उच्छ्राये' । 'थट ३०९ काङ्क्षायाम्' । 'णट ३१० नृत्तौ' । 'पिट ३११ शब्दसंघातयोः' । 'हट ३१२ दीप्तौ' । 'षट ३१३ अवयवे' । 'लुट ३१४ विलोडने' । 'टान्तोऽयम् 'इत्येके । 'चिट ३१५ परप्रैष्ये' । 'विट ३१६ शब्दे' । 'बट ३१७ आक्रोशे' । बशादिः । 'हिट' इत्येके । 'इट

'३१८ किट ३१९ कटी ३२० गतौ'। एटति। केटति। कटति। ईकारः 'श्वीदितो निष्ठायाम्' (३०३९) इतीण्निषेधार्थः। केचित्तु इदितं मत्वा नुमि कृते 'कण्टति' इत्यादि वदन्ति।

अन्ये तु 'इ' 'ई' इति प्रश्लिष्य—अयति। इयाय। इयतुः। इयुः। इययिथ-इयेथ। इय। इयाय-इयय। दीर्घस्य तु 'इजादेश्च—' (२२३७) इत्यामि अयांचकारेत्यादि उदाहरन्ति। 'मडि ३२१ भूषायाम्'। 'कुडि ३२२ वैकल्ये'। 'कुण्ड' इति तु दाहे गतम्। 'मुड ३२३ प्रुड ३२४ मर्दने'। 'चुडि ३२५ अल्पीभावे'। 'मुडि ३२६ खण्डने'। मुण्डति। 'पुडि च' इत्येके ( i. e. somehold that 'पुडि' also should be enlisted herein ) पुण्डति। 'रुटि ३२७ लुटि ३२८ स्तेये'। रुण्टति। लुण्टति। 'रुठि लुठि' इत्येके। 'रुडि लुडि' इत्यपरे। 'स्फुटिर ३२९ विशरणे'। इरित्वादङ् वा। अस्फुटत्-अस्फोटीत्। 'स्फुटि' इत्यपि केचित्। इदित्वान्नुम्। स्फुण्टति। 'पठ ३३० व्यक्तायां वाचि'। पेठतुः। पेठिथ। अपठीत्-अपाठीत्। 'वठ ३३१ स्थौल्ये—'। ववठतुः। ववठिथ। 'मठ ३३२ मदनिवासयोः'। 'कठ ३३३ कृच्छ्रजीवने'। 'रट ३३४ परिभाषणे। 'रठ' इत्येके (some read it as (रट) ; 'हठ ३३५ प्लुतिशठत्वयोः'। 'बलात्कारे' इत्येके। हठति। जहाठ। 'रुठ ३३६ लुठ ३३७ उठ ३३८ उपघाते'। ओठति। 'ऊठ' इत्येके। ऊठति। ऊठाञ्चकार।

'पिठ २३९ हिंसासंक्लेशनयोः'। 'शठ २४० कैतवे च' (i. e. in the sense of injury, tormentation and also in deception.)। 'शुठ २४१ प्रतिघाते'। शोठति। 'शुठि' इति स्वामी। शुण्ठति। 'कुठि २४२ च'। कुण्ठति। 'लुठि २४३ गतौ'। 'चुड्ड २४७ भावकरणे'। चुड्डति। चचुड्ड। 'अड्ड २४८ अभियोगे'। अड्डति। आनड्ड। 'कड्ड २४९ कार्कश्ये'। कड्डति। चुड्डादयस्त्रयो दोपधाः। तेन क्विपि चुत्। अत्। कत्। इत्यादि। 'क्रीड़ २५० विहारे'। चिक्रीड। 'तुड़ २५१ तोड़ने'। तोड़ति। तुतोड़। 'तूड़' इत्येके। 'हुड़ २५२ ह्रूड़ २५३ होड़ २५४ गतौ'। हुड्यात्—ह्रूड्यात्—होड्यात्। 'रौड़ २५५ अनादरे'। 'रोड़ २५६ लोड़ २५७ उन्मादे'। 'अड २५८ उद्यमे'। अडति। आड। आडतुः। आडुः। 'लड़ २५९ विलासे'। लड़ति। डलयोर्लरयोश्चैकत्वाल्ललतीति स्वाम्यादयः। 'कड २६० मदे'। कड़ति। 'कड़ि' इत्येके। कण्डति। 'गडि २६१ वदनैकदेशे'। गण्डति। इति टवर्गीयान्ताः।

अथ पवर्गीयान्ताः। तत्रानुदात्तेतः स्तोभत्यन्तास्त्रिंशत्। 'तिपृ २६२ तेपृ २६३ ष्टिपृ २६४ ष्टेपृ २६५ क्षरणार्थाः। आद्योऽनुदात्तः। चोरस्वामीत्ययं सेडिति बभ्राम। तेपते। तितिपे। क्रादिनियमादिट्। तितिपिषे। तेप्ता। तेप्स्यते।

The वृद्धि substitute is not enjoined to (the अङ्ग of) those roots that end in ह, म and य, and to क्षण, श्वस, जागृ, and

to a causative root and to the root श्वि (टुओश्विगतिवृद्धौ) also to those that drop their एकारs (at the end—as कटे चटे etc), when the affix सिच्, preceded by the augment इट् follows. Thus अकटीत्—अट् कटे इट् सिच् ईट् त्=अकट् इस् ईत (सलोप by इट ईटि)। आट—अट्+लिट् दीर्घं णल् by 'अत आदेः—' (2248). The ईकार of कटी signifies that it will not have इट् in निष्ठा (क्त क्तवतु) by the rule 'श्वीदितो—(3039). Some however read कटि, and thus by 'इदितो नुम् धातोः' make it have the augment नुम् giving कण्टति; while others read here as कटि, इ, ई, (three separate roots) and conjugate इ as अयति (लट् शप् गुणः) इयाय (इ+लिट् अ—णलि वृद्धि by 'अचो ञ्णिति' then इयङ् आदेश by अभ्यासस्यासवर्णे (2290) thus—इऐअ=इएअ=इआयुअ=इयङ् आयुअ इय् आयुअ=इयाय), इयतुः (इ इ अतुस्=इ य् अतुस्—यण् by 'एरनेकाचो-ऽसंयोगपूर्वस्य' (272—6.4.82)=इयतुस्), इयुः (similarly) इययिथ—इयेथ optional इट् by 'ऋतो भारद्वाजस्य' and 'अचस्तास्वत्—' इ इ थल्=इयङ् इ इट् थल्=इय् ए (गुणः) इट्=इय् अय् इ थ (अयादेशः)=इययिथ and in the इडभावपक्ष there is गुण but no अयादेश thus इयेथ—इइथ=इयङ्एथ =इय्एथ=इयेथ) इय (इ+लिट् 2nd per. अ), इयाय—इयय (by 'णलुत्तमो वा). दीर्घस्य तु etc—the root ई get आम् in लिट् by the rule इजादेश्च— giving अयाञ्चकार etc. (the root अय however gives अयांचक्रे with आम् by the rule 'दयायासश्च—3.137); स्फुटिर् (स्फुट्) being इरित्, it gets अङ् optionally by 'इरितो वा' (2269) thus अस्फुटत् (अङ् like अच्युतत्) अस्फोटीत् (सिच् like अच्योतीत्) in लुङ्। Some read also स्फुटि then by नुम्=स्फुण्टति etc. अपठीत्—अपाठीत् (the लुङ् forms 3rd. sing. of पठ्) here वृद्धि is optional by 'अतो हलादेर्लघोः'—२२८४)। इति स्वामी i. e. क्षीरस्वामी; भावकरण means to hint at one's intention.

The root लड is also conjugated as ललति by क्षीरस्वामी and others owing to the sameness of ड and ल (e.g. लड़=लल) and ल and र।

अथ पवर्गीयान्ता etc—स्तोभत्यन्ताः—i.e. ending in ष्टुभु स्तम्भे (No. 394). आद्यः i.e. तिपृ (तिप्)। क्षीरस्वामी has committed a mistake in making it (तिप्) सेट् i. e. prefixing the aug. इट् to तिप् (for it is read in the भाष्य under अनुदात्त roots which are अनिट् by 'एकाच उपदेशे'). तिप् gets इट् in the थास्विभक्ति (से—'थासः से, तिप्+थिट् से) by the भारद्वाजनियमः। तिप्+आशीर्लिङ् त इति स्थिते :—

मित—। ह्, म्, य् अन्ते येषामितिविग्रहः—ह्मयन्ताः। ह्मयन्ताश्च क्षणश्वसजागरश्च णिश्च (णिजन्तः) श्विश्च एदितश्च (एत् (ए) इत् येषामिति बहुव्रीहिः)—द्वन्द्वः। तेषाम्—इति द्वन्द्वात् षष्ठी बहुवचनम्। फलितमाह—ह्म्यान्तस्येति। क्षणादेरिति क्षणश्वसजागृणामित्यर्थः। ण्यन्तस्येति। सूत्रे 'णि' इत्यनेन तदन्तस्य ग्रहणमिति भावः—(अत्र छान्दसमेतत्ण्यन्तम्। भाषायां "णिश्रिद्रुस्रुभ्यःकर्त्तरि चङ्" इति सिजपवादः चङ्)। श्वयतेरिति। श्विधातोः (टुओश्वि गतिवृद्ध्योः) श्तिपा निर्द्देशः। एदितश्चेति। एतेन कटे इत्यस्य वृद्ध्यभावः। वृद्धिर्न स्यादिति —सिचि वृद्धिः परस्मैपदेषु—इत्यतः सिचीति वृद्धिरिति, 'नेटी'त्यतश्च नेत्यनुवृत्तेः। अकटीत्—अट् कटे लुङ् (तिप्) —अ कट इट् सिच् ईट् त्=अकटीत्—इट ईटीति—सलोपः। अन्येषां तु—ग्रह—अग्रहीत्। टवम्—अवमीत्। ह्य गतौ—अह्ययीत्। क्षणु हिंसायाम्—अक्षणीत्। श्वस प्राणने अश्वसीत्। जागृ निद्राक्षये—अजागरीत्। ण्यन्त—ऊनयति—औनयीत्। श्वि—अश्वयीत्—इत्युदाहरणानि। आट इति। अटधातो'रत आदे'रिति लिटि—अभ्यास दीर्घे रूपम्। शटेति—रुजारोगः। विशरणम् अवयवविभागश्चूर्णीभवनं वा। अवसादनं विषण्णभावः। ईकारः—कटी इत्यस्य इत्यर्थः। केचित्तु इति—'कटि' इति ह्रस्वान्तं पठतीत्यर्थः। अन्ये त्विति तथाच—'कटी' इत्यनेन कटि, इ, ई, इति धातुत्रयं गृह्णन्ति। अयति (ह्रस्वेकारान्तस्य 'इ' इत्यस्य—रूपाणि प्रदर्श्यन्ते। इयाय इति—लिटि—इ इ णल् इति स्थिते—'अभ्यासस्यासवर्णे' इति इयङ् आदेशे अङ्गस्य वृद्धौ—इयङ् ऐ.अ इति जाते आयादेशे रूपम्। इयतुरिति—इ इ अतुस्

इति द्वित्वे कृते 'एरनेकाच:—' (२७२—६।४।८२) इति यणादेशे इय् अतुस् इति स्थिते संहितया—इयतुरिति भवति। न च 'अभ्यासस्यासवर्णे' (२२९०) इतीयङादेशोऽत्र शङ्क्य:—परत: सवर्णसत्त्वात् तदभावात्। नवा'इ'इत्याभ्यासस्य 'इ' इत्यङ्गस्य सवर्णदीर्घत्वं वाच्यम् 'वार्णादाङ्गं बलीय:' इति परिभाषया; तस्याप्राप्तेः यणादेश एवेति दिक्। एवम् इयुरित्यत्र द्रष्टव्यम्। इययिथ—इयथेनेति—अत्र भारद्वाजनियमादिड्विकल्प: ('ऋतो—' इतीट,—'अचस्तास्वत्—' इतीडभाव:)। तत्र इट् पक्षे—इट+थल् इति स्थिते द्वित्वम्, इट्, अङ्गस्य गुण: अयादेश: अभ्यासस्य इयङादेशश्च (इ इ इट् थ—इयङ् ए इ थ=इय् अय् इ थ=इययिथ)। इडभावपक्षे—अभ्यासस्य इयङादेशे अङ्गस्य गुणे अयादेशाभावे च (इ इ थ=इयङ् ए थ=इय् ए थ=इयेथ) इति रूपम्। इय—लिटि मध्यमबहुवचने थस्य अकारे इयङभावे यणि च रूपम्। इयाय—इयय—णलुत्तमो वेति वृद्धिविकल्प:) दीर्घस्य—ई इत्यस्येत्यर्थ:। अन्यत् स्पष्टम्। स्फुटिर् इति। 'इरितो वा' इत्यङ्विकल्प:। अस्फुटत् (अङ्)—अस्फोटीत् (सिच्)। अपठीत्—अपाठीत्—'अतो हलादेर्लघो:' (२२८४) इति वृद्धिविकल्प:। बलात्कार: परदारधर्षणम्। स्वाम्यादय:—चौरस्वामी अन्ये चेत्यर्थ:।

अथ पवर्गीयान्ता इति। स्तोभत्यन्ता इति—'ष्टुभु स्तम्भे'इत्यन्ता इत्यर्थ:। आद्यस्तिपृ। सेडिति—वस्तुतस्तु भाष्यादौ अनुदात्तत्वेन पाठात् 'एकाच उपदेशे—' (२२४६) इत्यनिडेवायमित्यभिप्राय:। क्रादिनियमादिति—'क्राद्यन्यो लिटि सेड्भवेत्' इत्यस्मात्। तितिपिषे—लिटि 'थास: से' इति से आदेशस्तत्र आदेशावयवत्वादिण्कोरिति षत्वम्। द्वित्वमिट्। तिपृ इत्यस्य आशीर्लिङि रूपमाह :—

## २३००—। लिङ्सिचावात्मनेपदेषु ॥१।२।११॥

दी—। इक्समीपाद्धल: परौ झलादी लिङात्मनेपदपर: सिच्च त्येतौ कितौ स्त:। कित्त्वान्नगुण:। तिप्सीष्ट। तिप्सीयास्ताम्। तिप्सीरन्। लुङि 'झलो झलि' (२२८१) इति सलोप:। अतिप्त। अतिप्साताम्। अतिप्सत। तेपते।

तेपिता। तिष्टिपे। तिष्टिपाते। तिष्टिपिरे। तिष्टपे। तिष्टेपाते। तिष्टेपिरे। 'तेपृ २६५ कम्पनेच'। 'ग्लेपृ २६६ दैन्ये'। ग्लेपते। 'टुवेपृ २६७ कम्पने। वेपते। 'केपृ २६८ गेपृ २६९ ग्लेपृ च' २७० चात्कम्पने गतौ च। सूत्र-विभागादिति स्वामी। मैत्रेयस्तु चकारमन्तरेण—पठित्वा कम्पने इत्यपेचत इत्याह। ग्लेपेरर्थभेदात् पुनः पाठः। 'मेपृ २७१ रेपृ २७२ लेपृ २७३ गतौ'। 'त्रपूष् २७४ लज्जायाम्'। त्रपते।

A झलादि (i. e. beginning with a झल् letter) लिङ् (आशीर्लिङ् affixes), and an आत्मनेपदपर (after which lies आत्मनेपद affixes, as त आताम् etc) सिच् (affix), become कित् i. e. forbid gunnation when they come after a हल् (consonant) lying near (at the end of) इक् (letters—इ, उ, ऋ. ऌ). Being कित्—they have not the गुण substitute. Thns तिप्सीष्ट—तिप्+आशीर्लिङ्=तिप्+सीयुट +सुट्+त=तिप् सीय् स् त्=तिप्सीष्ट (यलोप by 'लोपो व्योर्वलि' and षत्व and ष्टुत्व)। तिप्सीयास्ताम्—तिप् सीयुट् यासुट्ताम्=तिप्सीय् आस्ताम्। तिप्सीरन् —तिप् सीयुट् झ (रन् by झस्य रन्) यलोप and absence of गुण as before. अतिप्त—अट् तिप् सिच् त=अतिप् स् त ('झलो झलि effects सलोपः). अतिप्साताम—अतिप सिच् आताम्—here there being no झल् behind, the 'स of सिच् does not elide by झलो झलि'। Similarly अतिप्सत। तेपते etc—forms of तेपृ। तितेपे—अभ्यासह्रस्व by 'एचइग् ह्रस्वादेशे'। तिष्टिपे—लिट् form of ष्टेपृ। 'एचइक्—as before. टुवेपृ—टु for अथुच्—वेपथुः। 'ग्लेपृ च'—'this च, implies 'trembling and movement also, there being breach of link (सूत्रविभाग)' so—says क्षीरस्वामी।

But मैत्रेय does not read this चकार and says that the roots mean only 'to tremble'. ग्लेपृ has been read again out of difference in sense. त्रपूष्—( त्रप् ) to feel shame or to become bashful !

मित—। लिङ्सिचौ + आत्मनेपदेषु इतिच्छेदः। 'इकोझल्' ( २६१२—१।२।९ ) इति 'हलन्ताच्च' ( २६१३—१।२।१० ) इति च सूत्रद्वयमनुवर्त्तते। 'इकः' इति च सामीप्यार्थे षष्ठी हला चास्यान्वयः। तदाह—इक्समीपात् हलः परावितिः। इकः समीपादिति तदर्थः। झलादीति। 'इको झलि'त्यतो झलिति तदादिविधिना लिङः सिचश्च विशेषणमित्याह—झलादी इति। आत्मनेपदपरकत्वं सिच एव न लिङः। लिङादेशस्यात्मनेपदस्य लिङः परत्वाभावादित्याह—आत्मनेपदपरः सिच्चेति। किताविति। 'असंयोगाल्लिट् कित्' (२२४२—१।२।५) इत्यतस्तदनुवृत्तेरिति भावः। कित्त्वादिति 'क्ङिति चेति निषेधादित्यर्थः। तिप्सीष्ट—तिप् + आशीर्लिङ् त = तिप् + सीयुट् + सुट् + त = तिप् सीय् स् त = तिप् सीष्ट गुणाभावयलोपौ। तिप्सीयास्ताम्—तिप् सीय् आ सुट् ताम् ( सुट् तिथोरिति तकारात् प्रागेव सुट् )। तिप्सीरन् ( झस्य रन्नादेशे सुटः अभावे च रूपम् )। अतिप्त—अट् तिप् सिच् त = अतिप् स् त ( कित्त्वाद् गुणाभावः, 'झलो—'इति सलोपः ) अतिप्साताम्—( गुणाभावः परतो झलभावात् सलोपाभावश्च ) एवमतिप्सत। तेपते। तेपृ इत्यस्य अपि रूपम्। तितेपे इति। लिटि 'एचइग्घ्रस्वादेशे' इतीत्वमभ्यासस्य। तेपिता—इट् लुट्। तिष्टिपे—ष्टिपृ इत्यस्य लिटि शर्पूर्वाः खय इति 'टि'शिष्यते। तस्य षकार संज्ञाभावात् ष्टुत्वाभावे 'ति'इति भवति इणकोरिति षत्वम्। ततः ष्टुत्वम्। तिष्टेपे—ष्टेपृ इत्यस्य लिटि 'एचइग्'इत्यादि तिभावश्च पूर्ववत्। ग्लेपृ—चेति। चार्थमाह—चकारादिति। सूत्रविभागादिति योगविभागेन पाठादित्यर्थः। स्वामीति—क्षीरस्वामी। टुवेपृ = ट्वितकारणमथुजर्थम्—'वेपथुश्च शरीरे मे रोमहर्षश्च जायते' इति गीतायाम्। ( ट्वितोऽथुच् ) मैत्रेया चकारमन्तरेणेति—चकारमपठित्वेत्यर्थः। कम्पने इत्यपेक्षते—केवलं कम्पनमेवार्थो न तु गतिरित्यपि। ग्लेपेरर्थभेदात् इति। पूर्वत्र दैन्यार्थकः। अत्र तु कम्पनार्थक इति भेदः। त्रपूष् इति ( त्रप इत्यदुपधः )।

२३०१—। तॄफलभजत्रपश्च ॥६।४।१२२ ॥

दी—। एषामत एकारोऽभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च। त्रेपे। त्रेपाते। त्रेपिरे। ऊदित्त्वादिड् वा। त्रपिता—त्रप्ता। त्रपिषीष्ट—त्रप्सीष्ट। 'कपि ३७५ चलने'। कम्पते। चकम्पे। 'रबि ३७६ 'लबि ३७७ अबि ३७८ शब्दे'। ररम्बे। ललम्बे। आनम्बे। 'लबि ३७९ अवस्रंसने च'। "कब्रु ३८० वर्णे'। चकबे। 'क्लीबृ ३८२ अधार्ष्ट्ये'। चिक्लीवे। 'चीबृ ३८२ मदे'। चीवते। 'शीभृ ३८३ कत्थने'। शीभते। 'चीभृ ३८४ च'। रेभृ ३८५ शब्दे'। रिरेभे। 'अभिरभी' क्वचित् पाठ्यते। अम्भते। रम्भते। ष्टभि ३८६ स्कभि ३८७ प्रतिबन्धे'। स्तम्भते। उत्तम्भते। नुम्यनुस्वारः। "उदः स्थास्तम्भोः—(११८) इति पूर्व्वसवर्णः॥ विस्तम्भते। "स्तम्भेः' (२२७२) इति षत्वं तु न भवति। अनुविधौ निर्द्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात्।

तद्बोजन्तु—स्थास्तम्भोः—(११८) इति पवर्गीयोपधपाठः, 'स्तम्भेः' (२२७२) इति तवर्गीयोपधपाठश्चेति माधवः। केचिदस्य टकार औपदेशिक इत्याहुः। तम्भते—विष्टम्भते। ष्टम्भते। टष्टम्भे। 'जभि ३८८ जृभि ३८९ गात्रविनामे'। (गात्रविनामो वक्रीभावः)।

The अ of these (तॄ, फल्, भज् and त्रप्) is replaced by एकार and (their) अभ्यास also disappears when a कित् लिट् and a सेट् थल् affix follow. [For कित् लिट see असंयोगाल्लिट्कित् (2242)

and 'अतएकहलमध्ये' ( 2260 ) and for सेट् थल् 'थलि च सेटि' ( 2261 )]. Thus वप्+लिट् त्=वप्+ए ( तज्झयोरेशिरेच् ) = वप् वप् ए = o वेप् ए=वेपे। Similarly वेपाते etc. ऊदित्वात् etc—त्रपूष् being ऊदित् it gets इट् optionally by 'स्वरतिसूतिसूयतिधूञूदितो वा' (2279) वपिता—वप्ता ( लुट् )। वपिषीष्ट—वप्सीष्ट ( आशीर्लिङ् optional इट् ) कपि, रवि लवि etc. take the aug. नुम्। नुम्यनुस्वार: i.e. by 'नश्चापदान्तस्य झलि,' then परसवर्ण by 'अनुस्वारस्य ययि—(१२४) ( For उद: etc see हल् सन्धि )। विस्तम्भते etc—here षत्वाभाव is by the rule 'सात् पदाद्यो: and you cannot say that it will have षत्व by स्तम्भे: (2272 ) for this षत्वविधि is for 'स्तन्भु' mentioned in the rule (2555—3. I. 82 ) in the matter of attaching the विकरण—श्नु। And ( for our saying that in the matter of षत्व, the root स्तन्भु, mentioned in the rule, only will be taken while in the matter of पूर्व्वसवर्ण, another (स्तम्भ) (not mentioned in the sutra will not be taken )—the source or authority is, according to Madhava, in the reading of the पवर्गीय letter ( म ) for the penultimate cp. 'उद: स्थास्तम्भो: ' ( 118 ) and in the reading of the तवर्गीय letter ( न ) for the penultimate—cp 'स्तन्भे: ( 2272 ). The drift of all is this that the different reading of Panini has led us to arrange in the above way. केचिद् etc.—some say that the टकार of the root ष्टभि is औपदेशिक i. e. it has to be retained and then in this connection there will come in षत्व also, hence the forms like विष्टम्भते, ष्टम्भते etc. are formed in their opinion. जभी, जृभि to bend one's body, to yawn etc.'

भित—। तॄ च फलश्च भजश्च त्रपश्चेति समाहारद्वन्द्वात् ६ष्ठी। 'अत एकहल–

मध्येऽनादेशादेर्लिटि' ( २२६०—६।४।१२० ) इत्यतोऽत इति एत्वाभ्यासलोपश्चेति अनुवर्त्तते,किति लिटीति च । तदाह—'अत—एकारोऽभ्यासलोपश्च स्यात् किति लिटिइति । थलि च सेटीति (२२६१) चानुवर्त्तते ; तदाह—'सेटि थलि चे'ति । तरतेरकारस्य गुणशब्देन भावितत्वात् 'न शसददवादिगुणानाम् ( २२६३ ) इति निषेधे प्राप्ते, फलभजोश्च वैरूप्यसम्पादकादेशादित्वात्, त्रपश्च एकहल्मध्यस्थत्वाभावादप्राप्ते वचनम् । त्रेपे इति त्रप्+लिट् त इति स्थिते द्वित्वे एशादेशे च त्रप् त्रप् ए इति जाते अभ्यास—लोप एत्वं च—० त्रेपे इति । एवं त्रेपाते इत्यादिषु । तरत्यादेस्तु तेरतुः तेरुः । फेलतुः फेलुः । भेजतुः भेजुरित्याद्युदाहरणम् । त्रपूष् इत्यस्य ऊदित्वात् 'स्वरतिसूतिसूयतिधूञूदितो वे'ति इड् विकल्पादाह—त्रपिता—त्रप्ता इति लुटि रूपे । त्रपिषीष्ट त्रप्सीष्ट इति । आशीर्लिङि रूपद्वयम् । कपिरविलव्यादीनामिदित्वान्नुम् वोध्यः । अवि शब्दे इति । अस्मादेव अङ्प्रत्यये अम्बाशब्दः सिध्यति । ष्टभि स्कभि इति । प्रतिवन्धो व्याघातः । नुम्यनुस्वारइतिनश्चापदान्तस्य झलीत्यनेनेत्यर्थः । ततः 'अनुस्वारस्य ययिपरसवर्णः' मकारः । उदःस्थास्तम्भोरिति—एवंविधे स्थले हल्सन्धौ द्रष्टव्यः । विस्तम्भते इति 'सात् पदाद्योरिति षत्वं नेति भावः । अत्राशङ्कते—स्तन्भेरिति । शङ्काभावस्य हेतुमाह—अ विधाविति । सौत्रस्यैति—'स्तम्भ स्तन्भु—' ( २५५५—३।१।८२ ) इति सूत्रोपात्तस्य स्तन्भु इत्यस्यैव प्रतिपदोक्तषत्वविधौ ग्रहणादित्यभिप्रायः । कुत एतदित्यपेक्षयामाह—तद्बीजन्त्विति । माधवस्याप्ययमभिप्राय इत्याह—इति माधव इति । अत्रायं भावः 'उदः स्थास्तम्भो'रिति मकारोपधपाठनिर्द्देशात् पूर्व्वविधौ 'स्तन्भु स्तुन्भु'रिति सौत्रस्य धातोर्नकारोपधस्य ग्रहणं न, किन्तु षत्वविधावेव ( सौत्रस्य ग्रहणम् ) इदञ्च पाणिनिशिष्यपरम्परया ज्ञायते । तत्र विभिन्नोपधपाठ एवंविधनियमस्य वीजम् इति । केचिदिति । नैसर्गिक एव टकारो न तु षत्वस्यफलम् । एवं षकारस्यापि नैसर्गिकत्वात् तन्निवृत्तिर्न । तेन विष्टभते ष्टभते इत्यादि तन्मते सिध्यतीत्यर्थः । जभी जृभि इति । गात्रविनामो गात्रमर्द्दनम् ( 'गामोड़ा' इति भाषायाम् ) । 'जभी' इत्यस्य नुमागमः स्यादित्याह ।

२३०२—। रधिजभोरचि ॥ ७।१।६१ ॥

टी—। एतयोर्नुमागमः स्यादचि। जम्भते। जजम्भे। जम्भिता। अजम्भिष्ट। जृम्भते। जजृम्भे। 'शल्भ ३९० कत्थने'। शशल्भे। 'वल्भ ३९१ भोजने'। दन्त्योष्ठादि। ववल्भे। 'गल्भ—३९२ धार्ष्ट्ये'। गल्भते। (प्रगल्भते)। 'श्रम्भु ३९३ प्रमादे'। (प्रमादोऽनवधानतेत्यमरः)। तालव्यादिर्दन्त्यादिश्च। श्रम्भते—स्रम्भते वा। 'ष्टुभु ३९४ स्तम्भे'। स्तोभते। विष्टोभते। तुष्टुभे। व्यष्टोभिष्ट।

अथ परस्मैपदिनः। गुपू ३९५ रक्षणे।

The augment नुम् comes in after रधि and जभि when an अच् (अजादि affix) follows. Thus रधि (रन्ध्) gives रन्धयति etc, due to शप् which retains अ only. similarly जम्भते etc. विष्टोभते—here षत्व comes in by 'उपसर्गात् सुनोति' etc. व्यष्टोभिष्ट —वि-ष्टुभ्+लुङ् त। अथ etc.—गुपू to protect :—

मित—। रधिजभोः+अचि इतिच्छेदः। एतयोरिति स्पष्टम्। अजम्भिष्टेति.। लुङि—अट्-जम्भ्-इट्-सिच्-त (अपृक्तलाभावात् 'अस्तिसिचः—' इतीडागमो न) सिचः सकारस्य षत्वेन तकारस्य ष्टुत्वेन च रूपम्। ष्टुभु (ष्टुभ्) इति। षकारस्य औपदेशिकत्वात् सत्वं तत्संसर्गात् ष्टुत्वनिवृत्तेश्च स्तोभते इति। विष्टोभते इति 'उपसर्गात् सुनोति—' इत्यादिना षत्वम्। व्यष्टोभिष्ट-विपूर्व्वात् स्तोभतेर्लुङि रूपम्। प्राक् सितादड्व्यवायेऽपीति षत्वम्।

अथेति—गुपू (गुप्—ऊदित्) रक्षणे इति :—

२३०३—। गुपूधूपविच्छिपणिपनिभ्य आयः॥ ३।१।२८॥

टी—। एभ्य आयप्रत्ययः स्यात् स्वार्थे। 'पुगन्त—' (२१७९) इति गुणः।

The affix आय् is added after these roots ( गुप् धूप् विच्छ पण् and पन्) in the sense of स्वार्थ (it is the same sense or it is his own). गुप् being लघूपध i. e. having a short vowel for its penultimate is gunnated by the rule 'पुगन्तलघूपधस्य च' ( 2189 ). Thus, the roots stand as गोपाय, धूपाय, विच्छाय, पणाय and पनाय ।

मित— । आयप्रत्ययः अकारान्तः । अन्यत् स्पष्टम् ।

२३०४— । सनाद्यन्ता धातवः ॥ ३।१।३२॥

दो— । सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातु-संज्ञाः स्युः । धातुत्वाल्लडादयः । गोपायति ।

Those which end in (i. e. are affixed with ) any of the affixes, beginning with सन् ('गुप्तिज्किद्भ्यः सन्' ) and ending in णिङ् ( 'कमेर्णिङ्' ) are called or termed as धातुs ( roots ). These words ending in सन् etc.—('सन्—क्यच्-काम्यच्-क्यङ् क्यषोऽथाचार-क्विब्-णिज्—यङौ तथा । यक्-आय-ईयङ्-णिङ् चेति द्वादशामीसनादयः); being धातुs, लट्, लोट् etc come in. Thus गोपायति—गोपाय+शप्+तिप्=गोपाय+अति=गोपायति by 'अतो गुणे' ( 191—6, 1. 97. ). Similarly धूपायति, विच्छायति, पणायति, and पनायति ।

मित । सनादयः अन्ते येषां ते सनाद्यन्ताः इति विग्रहः । सनादयश्च— 'गुप्तिज्किद्भ्यः सन् (३।१।५), 'सुप आत्मनः क्यच्' (३।१।८), 'काम्यच्' (३।१।९), 'कर्त्तुः क्यङ् सलोपश्च' (३।१।११), 'लोहितादि डाज्भ्यः क्यष्' (३।१।१३), आचारे-ऽवगल्भक्लीवहोडेभ्यः क्विब्वावक्तव्यः (वार्त्तिक ) 'मुण्ड मिश्र—श्लक्ष्ण-लवण व्रतवस्त्र-हल-फलकलतूस्तेभ्यो णिच्' ( ३।१।२१ ), 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' ( ३।१।२२), कण्ड्वादिभ्यो यक् ( ३।१।२७ ), गुपू—धूप—आयः ( ३।१।२८ ),

ऋतेरीयङ् ( ३।१।२९ ), 'कमेर्णिङ्' ( ३।१।३० ) इति सूत्रैः पाणिनिना स्वयमेव निर्दिष्टाः। तदाह सनादयः कमेर्णिङन्ता इति। अयमत्र संग्रहः—

"सन् क्यच-काम्यच्-क्यङ्-क्यषोऽथाचारक्विब् णिज्यङौ तथा।
यगाय—ईयङ् णिङ् चेति द्वादशामी सनादयः॥"

लडादय इति आदिपदेन शबादीनां संग्रहः। गोपायति इति—गोपाय+शप्+तिप्—अतो गुणे ( १९१ ) इति पररूपत्वम्। इतरेषां तु धूपायति, विच्छायति पनायति पनायतीत्याद्युदाहरणानि।

## २३०५—। आयादय आर्द्धधातुके वा॥ ३।१।३१॥

## दी—। आर्द्धधातुकविवक्षायामायादयो वा स्युः।

The affixes आय, ईयङ् and णिङ् are optionally attached to a root when there is an intention of attaching आर्द्धधातुक i.e. in the matter of आर्द्धधातुक—hence finally—If a root has to undergo any आर्द्धधातुक affix, it will have the affixes आय etc in an optional way ( and not compulsorily ).

मित—। आय आदिर्येषामितिविग्रहः। आदिना ईयङ्णिङोर्ग्रहणम् ( गुपूधूप आयः),(ऋतेरीयङ्), (कमेर्णिङ्),—एते त्रय एव आयादयः। आर्धधातुके इति। विषयसप्तमी—तदाह—आर्द्धधातुकविवक्षायामिति। परसप्तम्यान्तु गोपायितेत्यादि न सिध्येत्। 'अतो लोप' इत्यनेन लोपाभावात्। न हि गोपायेति आर्द्धधातुकोपदेशकाले अकारान्तत्वेनोपदिश्यते किन्तु ततः प्रागेवेत्यव्याप्तिनिवारणाय आर्द्धधातुविवक्षयामिति विषयसप्तमीमाश्रित्य व्याख्यातम्। अथ प्रत्यायान्तत्वेन आम्प्रत्ययप्राप्तिरित्याह—

## २३०६—। कास्प्रत्ययादाममन्त्रे लिटि॥३।१।३५॥

## दी—। कास्धातोः प्रत्ययान्तेभ्यश्चाम्—स्याल्लिटि न तु मन्त्रे।

"कास्यनेकाज्ग्रहणं कर्त्तव्यम्"—( वार्त्तिक )।

सूत्रे प्रत्ययग्रहणमपनीय तत्स्थाने'अनेकाच्'इति वाच्यमित्यर्थः।

The affix आम् comes in after the root कास् and आम् comes after those roots that are resultants of some other प्रत्यय s and this is enjoined for the लिट् of भाषा and not of मन्त्र ( Veda ). अनेकाच् should be taken in कास्—(वार्त्तिक) i.e, in the rule 'कास्प्रत्ययात्—' the word प्रत्यय should be dismissed and the word अनेकाच् should be written or pronounced in its place or stead. This Vartika is to make provision for forms like औ, अतुः etc.—the लिट् forms of अ ( नामधातु ; अ इवाचरति अ + क्विप् = अ, which being प्रत्ययान्त would have given आंचकार etc only and not औ अतुः etc ).

मित—। कास्प्रत्ययात् + आम् + अमन्त्रे, लिटि—इतिच्छेदः। कास् च प्रत्यायान्तश्चेति विग्रहः। प्रत्ययादित्यनेन तदन्तविधिस्तदाह—प्रत्ययान्तेभ्यश्च इति। अमन्त्रे इत्यस्यार्थमाह—न लिति। मन्त्रे इति छन्दसि। अत्र वार्त्तिकम् कास्यनेकाजिति। अस्यार्थमाह—सूत्रे इति। कास् इति सूत्रे इत्यर्थः। तथाच—'कासनेकाजाममन्त्रे लिटि' इत्येव सूत्रितव्यमिति भावः। अस्य फलन्तु अ इवाचरति = अति। तस्य 'अ'—धातोर्लिटि—औ अतुरित्यादौ णलादि विधानार्थं वार्त्तिकमावश्यकमेव। अन्यथा—प्रत्ययान्तत्वादामेव स्यात्—णल् तु न स्यात्। इष्यते च यथा स्यादिति। अतो वार्त्तिकम्। एतच्च सुब्धातुप्रकरणे प्रपञ्चयिष्यते। किञ्च अनेकाज्ग्रहणाभावे च कास्, जागृ इत्यादेरिजादित्वप्रत्ययान्तत्वाभावादाम न स्यात् तथाच जागराञ्चकारेत्यादि न सिध्येदित्यतोऽपि वार्त्तिकं सप्रयोजनमेवेति दिक्। अमन्त्रेति किम। क्वणो नोनाव। अच्छन्दसीति तु नोक्तम्। मन्त्रभिन्ने च्छन्दसि आम इष्टत्वात्। यथा—पुत्रमामन्त्रयामासेति।

२३०७—। आर्द्धधातुके ॥ ६।४।४६ ॥

दी—। इत्यधिकृत्य।

This is an अधिकारसूत्र।

२३०८। अतो लोपः ॥६।४।४८॥

आर्द्धधातुकोपदेशकाले यदकारान्तं तस्याकारस्य लोपः स्यादार्धधातुके परे। गोपायाञ्चकार। गोपायांवभूव। गोपायामास। जुगोप। जुगुपतुः। ऊदित्वाद् वेट्। जुगोपिथ—जुगोप्थ। गोपायिता—गोपिता—गोप्ता। गोपाय्यात्—गुप्यात्। अगोपायीत्—अगोपीत्—अगौप्सीत्। 'धूप ३९६ सन्तापे'। धूपायति। धूपायाञ्चकार। दुधूप। धूपायितासि। 'जप ३९७ जल्प ३९८ व्यक्तायां वाचि'। 'जप मानसे च' 'चप ३९९ सान्त्वने'। 'षप ४०० समवाये'। समवायः सम्बन्धः सम्यगवबोधो वा। सपति। 'रप ४०१ लप ४०२ व्यक्तायां वाचि'। 'चुप ४०३ मन्दायां गतौ'। चोपति। तुप ४०४ तुम्प ४०५ त्रुप ४०६ त्रुम्प ४०७ तुफ ४०८ तुम्फ ४०९ त्रुफ ४१० त्रुम्फ ४११ हिंसार्थाः'। तोपति। तुतोप॥ तुम्पति। तुतुम्प। तुतुम्पतुः। संयोगात्—परस्य लिटः कित्वाभावान्नलोपो न। 'किदाशिषि' (२२१६) इति कित्त्वान्नलोपः। तुप्यात्। "प्रात्तुम्पतौ गवि कर्त्तरि" इति पारस्करादिगणे पाठात् सुट्। प्रस्तुम्पति गौः। श्तिपा निर्द्देशाद् यङ्लुकि न। प्रतोतुम्पीति। त्रोपति। त्रुम्पति। तोफति। तुम्फति। त्रोफति। त्रुम्फति। इहाद्यौ द्वौ पञ्चमषष्ठौ

च नोरिफाः। अन्ये सरेफाः। आद्याश्चत्वारः प्रथमान्ताः। ततो द्वितीयान्ताः। अष्टावप्रकारवन्तः। 'पर्प ४१२ रफ ४१३ रफि ४१४ अर्ब ४१५ पर्ब ४१६ लर्ब ४१७ बर्ब ४१८ मर्ब ४१९ कर्ब ४२० खर्ब ४२१ गर्ब ४२२ शर्ब ४२३ षर्ब ४२४ चर्ब ४२५ गतौ। आद्यः प्रथमान्तः। ततो द्वौ द्वितीयान्तौ। तत एकादश तृतीयान्ताः। द्वितीयतृतीयौ मुक्त्वा सर्वे रोपधाः। पर्पति। पपर्प। रफति। रम्फति। अर्बति। आनर्ब। पर्बति। लर्बति। बर्बति। पवर्गीयादिरयम्। मर्बति। कर्बति। खर्बति। गर्बति। शर्बति। सर्बति। चर्बति। 'कुबि ४२६ आच्छादने'। कुम्बति। 'लुबि ४२७ तुबि ४२८ अर्दने'। लुम्बति। तुम्बति। 'चुबि ४२९ वक्त्र-संयोगे'। चुम्बति। षृभु ४३० षृम्भु ४३१ हिंसार्थौ'। सर्भति। ससर्भ। सर्भिता। सृम्भति। ससृम्भ। सृम्भ्यात्। 'षिभु षिभि' इत्येके। सेभति। सिम्भति। 'शुभ ४३२ शुम्भ ४३३ भाषणे'। 'भासने इत्येके। 'हिंसायाम्' इत्यन्ये।

अथानुनासिकान्ताः। तत्र कम्यन्ता अनुदात्तेतो दश। 'घिणि—४३४ घुणि ४३५ घृणि ४३६ ग्रहणे'। नुम्। ष्टुत्वम्। घिण्णते। जिघिण्णे। घुण्णते। जुघुण्णे। घृण्णते। जघृण्णे घुण ४३७ घूर्ण ४३८ भ्रमणे'। घोणते। घूर्णते। इमौ तुदादौ परस्मैपदिनौ। 'पण ४३९ व्यवहारे स्तुतौ च'। 'पन ४४० च'। स्तुताविति एव संबद्धते पृथङ् निर्देशात्। पनिसाह—चर्य्यात् पणेरपि स्तुतावेवायप्रत्ययः। व्यवहारे तु पणते।

पेणे। पणितेत्यादि। स्तुतावनुबन्धस्य केवले चरितार्थत्वादाय—प्रत्ययान्तान्नात्मनेपदम्। पणायति। पणायाञ्चकार। पेणे। पणायितासि। पणितासे। पणाय्यात्। पणिषीष्ट। पनायति। पनायं चकार। पेने। 'भाम ४४१ क्रोधे'। भामते। बभामे। 'क्षमूष ४४२ सहने'। क्षमते। चक्षमे। चक्षमिषे—चक्ष्ंसे। चक्षमिध्वे। चक्षमिवहे।

That (root) which, at the occasion of आर्द्धधातुकोपदेश, is अकारान्त or ends in an अकार, leaves its अकार when an आर्द्ध-धातुक affix follows. In other words—the अकार disappears of a root which remains or is found अकारान्त at the time of आर्द्धधातुकोपदेश,—provided an affix of the आर्द्धधातुक class is added after it. Thus गोपाय ञ्चकार—गोपाय+आम्+चकार (कृ+लिट् अ)=गोपाय्+आम्+चकार। Though the form गोपायाञ्चकर etc would have been effected without this rule 'अतो लोप' yet it is laid down here for the sake of proper order and for अगोपायीत्' etc. जुगोप (without आय—गुप् गुप् अ=गुगुप् अ=जुगोप् अ by जश्त्व and गुणः). ऊदित्वात् etc because the root गुपू drops it ऊकार hence it takes इट् optionally by 'स्वरतिसूतिसूयतिधूञूदितो वा' (२२७९) जुगोपिथ—जुगोप् इट् थ। जुगोप् थ—जुगोप्+थ (without इट्)। गोपायिता—गोपाय+इट् +ता (लुट्)=गोपाय्+इ+ता। गोपिता—गोप्ता (इट् is optional because the root is ऊदित but in the आयपक्ष the root is अदन्त (गोपाय) and not ऊदन्त, hence the इट् is compulsory there. गोपाय्यात्—(आशीर्लिङ्) गोपाय+यासुट्+सुट्+त्=गोपाय् (अतो लोपः)+या+त् (both the सकारs elide by लिङः सलोपोऽनन्त्यस्य (2211))=गोपाय यात्=गोपाय्यात्।

गुप्यात्—( without आय ) the process is as before, the only difference is that the यासुट् being कित् the root is not gunnated. अगोपायीत्—(आय, अतो लोपः—इट्, सिज्लोपः, ईट्, त् )। अगोपीत्—अगौप्सीत्—the former is in connection with इट् hence there is no वृद्धि by 'नेटि' (2268). Thus अट् गुप् इट् सिच् ईट् त्= अ गोप इ स् ईत्—वृद्ध्यभावे गुणः and सलोप by 'इट ईटि ) and the latter is without इट्। Here the root takes the वृद्धि substitute by 'वदव्रजहलन्तस्याचः' (2267), thus—अट् गुप् सिच् ईट् त्=अगौप् स् ईत् ( here the स् does not elide for it is not preceded by इट् ). धूप् etc. धूपायति ( धूप्+आय+शप्+तिप् )=धूपाय+अति—by 'अतो गुणे'—( १९१ )। धूपायाञ्चकार like गोपायाञ्चकार etc. दुधूप—धूप् धूप् अ—धू धूप् अ ( 'ह्रस्वः' )=दुधूप ( by 'अभ्यासे चर्च' ) धूपायितासि—धूपितासि ( second per. लुट् forms because the affix आय is optional in आर्द्धधातुक )। अववोध means knowledge. तुप् means 'to creep'. संयोगात् etc,—तुम्प is संयोगान्त and therefore not कित् in लिट् cp. 'असंयोगात्—' (२२४२)। And being अकित् there is no नलोप by 'अनिदिताम्—etc. thus तुतुम्पतुः। But न elides in यासुट् (आशीर्लिङ्) for it is कित्। Thus तुप्यात् etc. तुम्प being read in पारस्करादि class gets the augmeut सुट् when it comes after the उपसर्ग प्र by the गणसूत्र 'प्रात्तुम्पतौ—' 'तुम्प् preceded by the उपसर्ग प्र—gets the augment सुट् when it has a cow for its nominative.' Thus प्रस्तुम्पति etc 'the cow is destroying ( the corn etc)'. Because तुम्प is mentioned with श्तिप् so it does not get the augment सुट् in यङ्लुक् ( by the परिभाषा—श्तिपा शपानुबन्धेन—etc) ; thus प्रतोतुम्पीति ( प्रतुम्प्+यङ्लुक्+द्वित्व+अभ्यास गुण+ईट् )। त्रोपति—त्रुप+शप+तिप्। मुक्त्वा=leaving.

अथासुनासिकान्ता etc.—Of these the ten ending in 'कमु कान्तौ are अनुदात्तेतः। ष्टुत्वम् i.e. मूर्द्धन्यादेशः। पण to trade in and to praise. पन being mentioned separately means only 'to praise.' पणि (पण) gets the आयप्रत्यय by 'गुपूधूप—' etc in the sense of praise only, due to its contact with पन। But in the sense of 'dealing in' the form is पणते etc. The अनुबन्ध (i. e अनुदात्तेदनुबन्ध) being effective only when the root is in its simple or primitive form (केवल), it (the root पण्) does not turn आत्मनेपदी when it is affixed with 'आय'। Thus पणायति etc. पणाय्यात् like गोपाय्यात् (आशीर्लिङ्)। पणिषीष्ट (पण without आय is आत्मनेपदी)। चमूष् (चम्)—ऊदित् hence by 'स्वरतिसूति it gets इट् optionally thus चचमिषे—चचंसे etc. चचमिवहे (इटपक्षे), and in the इडभावपक्ष—चचम् + वहे :—

मित। 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' (२४२८—६।४।३७) इत्यत 'उपदेश' इत्यनुवर्त्तते; 'आर्द्धधातुके' २३१७) इति चाधिकृतं वर्त्तते। इष्टानुबोधात् आर्द्धधातुकमइतिपदमावर्त्याह—'आर्द्धधातुकोपदेशकाले इति, आर्द्धधातुके परे' इति च। आर्द्धधातुकोपदेशे किम? अय पय गतौ आभ्यां परस्य क्विप आर्द्धधातुकत्वेऽपि 'अतो लोप' इत्यनेन अलोपो माभूत्। तेन 'वेरपृक्त-लोपाद्वलि लोपः पूर्व्वविप्रतिषेधेन' इति वार्त्तिकात् 'लोपो व्योर्वलि' इति यलोपे 'ह्रस्वस्य पिति कृति तुगिति' तुगागमे च अत्—पत् इति सिद्ध्यति। नहि 'अयपय' इत्येतौ आर्द्धधातुकोपदेशकाले अकारान्तौ किन्तु यकारान्तावेव। आर्द्धधातुके परे किम्? काथयति। अदन्तोऽयं धातुः (कथ) चुरादौ पठ्यते। अत्र 'अत उपाधायाः' इति णिचि उपाधावृद्धा 'काथयति' इत्येवं न भवति। 'अचः परस्मिन् पूर्व्वविधौ' इत्यनेन अल्लोपस्य स्थानिवत्त्वात्। 'आर्द्धधातुके परे' इत्युक्तौ तु अल्लोपस्य परनिमित्तकत्वाभावात्—स्थानिवत्त्वं न स्यात्। तदभावे च क्रथ् इत्येवं रूपे

जाते उपधावृद्धिर्भवत्येवेति । गोपायाञ्चकार इति—ननु 'गोपाय आम' इति स्थिते 'अतो लोप' इत्यनेन अल्लोपाभावेऽपि सवर्णदीर्घेणाऽऽमि सिध्यत्येव इति चेत् । बाढम् । किन्तु गोपायिता इत्यादि न सिध्येत् । तेन आर्द्धधातुकप्रसङ्गादिहापुपन्यस्तम् । जुगोप इति । 'आयादय आर्द्धधातुके वा' इति आयाभावे णलः पित्वेन कित्त्वाभावाल्लघूपधगुणः, अभ्यासस्य जश्त्वं च । गुप् गुप अ=जुगोप् अ इत्यादि । ऊदित्वात् इति—'गुपू'इत्यस्येत्यर्थः । वेडिति—'स्वरतिसूतिसूयतिधूञूदितो वे'त्यनेन थलि इड्विकल्पात् जुगोपिथेत्यादि रूपद्वयम् । आयपक्षे नित्यमिट् । अतो गोपायिता इति । आयाभावे तु ऊदित्वादिवेट्—गोपिता गोप्तेति । आशीर्लिङि रूपमस्य गोपाय्यात्—गुप्यात् इत्यादि । गोपाय+यासुट्+सुट् त् इति स्थिते, अल्लोपे 'लिङः सलोपोऽनन्त्यस्य' इति सकारद्वयस्यापि निवृत्तौ गोपाय यात् इति भवति ततो रूपम् । गुप्यात् इति आयाभावे, यासुटः कित्त्वाद् गुणाभावे च पूर्ववत् प्रक्रिया । अगोपायीत् इत्यादिलुङि रूपाणि । तत्र आयप्रत्यये अगोपायीत् इति—अट् गोपाय+इट्+सिच्+ईट्+त्=अगोपाय् (अल्लोपः) इस्ईत्=अगोपय्ईत् (सलोपे) इति । आयाभावे इड्विकल्पात् इट्पक्षे आगोपीत्—अट् गोप (नेटीति वृद्धिनिषेधाद् लघूपधगुणः) इट् सिच् ईट्त्=अगोप्ईत (पूर्ववत्सलोपः) । अगौप्सीत् इति इडभावपक्षे अट् गुप् सिच् ईट त् इति स्थिते 'वदव्रजहलन्तस्याचः' इति वृद्धिः । इटः परत्वाभावात् सलोपाभावः । ततो रूपम् । धूप इति । धूपायति—आयप्रत्ययः, शप्, पररूपत्वञ्च । लघूपधत्वाभावाद् 'गोपायति' इतिवद् गुणो न । धूपायाञ्चकारेति—प्रत्ययान्तत्वादनेकाच्त्वादाम । दुधूप—अभ्यासह्रस्वादेशे जश्त्वे च रूपम् (आयाभावपक्षे इदम्) । 'धूपायितासि—धूपितासि'—इत्यनयोः पूर्व्वम् आयप्रत्ययान्तलुडन्तस्य धूपेरिटि रूपम् । परन्तु आयाभावे लुटि इटि धूपि रूपम् । अत्र इड्विकल्पो न । धूपेरूदित्वाभावात् । तेनैते एव रूपे लुटि प्रथमैकवचने इति द्रष्टव्यम् । षप इति षोपदेशः । सम्यगवबोधः सम्यग्ज्ञानम् । चुप इति 'अस्मादेव भाषायां (चुप्, चोप्—चुपि चुपि इत्यादि) । तुप तुम्प इत्यष्टौ । तत्र लघूपधगुणमाश्रित्य पूर्व्वस्य रूपं दर्शयति—तोपति इत्यादि । तुतुम्पतुरिति तुम्प इत्यस्यातुसि रूपम् । तुम्पः संयोगान्तत्वेन असंयोगाल्लिट कित् इत्यास्याप्रवृत्त्या

कित्वाभावात् 'अनिदितां हल उपधाया । क्ङिति' इति नलोपोनेतिभावः । आशिषि तु 'किदाशिषि' ( २२१६ ) इति यासुटः कित्वेन नलोपात्—तुप्यात् इति । प्रात्तुम्प-ताविति—गणसूत्रमिदम् । अर्थश्चायम्—'गौ'—शब्दो यदि कर्त्ता भवेत् तर्हि प्राद्-उपसर्गात् परतः तुम्पधातोः सुडागमः स्यात् इति । सुट् कुत इत्यत आह—पारस्करादिगणे पाठादिति । प्रस्तुम्पति—शस्यादिकं छिनत्तीत्यर्थः । सुटष्टित्वादाद्यवयवः । श्तिपेति—प्रात्तुम्पताविति श्तिप्प्रत्ययेन तुम्पधातोर्निर्द्देशात्—'श्तिपा शपानुबन्धेन—' इत्यादि परिभाषया—प्रादुपसर्गात् परतोऽपि तुम्पतेर्यङ्लुकि सुडागमो न । तेन प्रत्तोतुम्पीति इति सिध्यति ( प्र—तुम्प+यङ्लुक्+अभ्यासस्यगुणः ( गुणो यङ् लुकोः )+ईट् च ) । त्रोपति इति त्रुप इत्यस्य लटि रूपम् । इहाद्याविति—तुम्प तुम्पौ । पञ्चमषष्ठौ—तुफतुम्फौ । नीरेफा—रेफवर्जिताः ( रकारशून्याः ) । अन्ये त्रुप-तुम्पादयः रफलायुक्ताः । प्रथमान्ता इति पवर्णान्ताः । द्वितीयन्ता इति फान्ताः । आद्यः=पर्पं । प्रथमान्तः पान्त—इत्यादि स्पष्टम् ।

अथानुनासिकान्ता इति । कम्यन्ता इति कमुकान्तावित्यन्ता इत्यर्थः । घिणि इति नुमिकृते अनुस्वारे परसवर्णे च घिण्ण इति भवति । ततोऽनुदात्तेत्वादात्मनेपदम् । घिण्णते इति एवमन्यत्र । इमाविति—भ्वादौ तु आत्मनेपदिनाविति भेदः । पण—इति । पन चेति पृथङ् निर्द्देशः । पनधातुः स्तुत्यर्थक एव न तु व्यवहारार्थकः इति भावः । एतच्च सम्प्रदायानुरोधादुक्तमिति द्रष्टव्यम् । पनिसाहचर्य्यात्—इति । लोके चैवं दृष्टम् । यथा विभिन्नजातीययोरपि समानवस्तुव्यवसायवशात् उभयोरेव समानात् सञ्ज्ञादिलाभ एवमिहापि विभिन्नार्थकयोः पणपनयोः स्तुतिरूपसमानार्थ—वशात् आय प्रत्ययः न तु अर्थान्तरे । तेन पणेर्व्यवसायार्थकादायप्रत्ययो न । ततश्च व्यवहारे पणते पेणे इत्याद्येव न तु पणायति इत्यादि रूपम् । स्तुतावनुबन्धस्येति । 'कम्यन्ता अनुदात्तेतो दश' इत्युक्तम् । पण धातोस्तदन्तर्भूतत्वेनात्मनेपदित्वं भवत्येव । किन्तु यदायं धातुरस्तुतौ वर्त्तते तदा—अनुबन्धस्य अनुदात्तत्वस्य ( सकृद्गतिन्याय इव ) केवले आय-प्रत्ययशून्ये पणधातौ—चरितार्थत्वाद्—गतार्थत्वात्कृतकार्य्यत्वाद्—(पुनः)आयप्रत्ययान्तात् —पणाधातोः आत्मनेपदं न, किन्तु परस्मैपदमेव । अतएव पणायति इत्यादि—स्पष्टम् ।

पेणे—इति एत्वाभ्यासलोपौ । पणायितासि ( आय इट् लुट् ) पणितासे ( इट् लुट् आत्मने ) । पणाय्यात्—आयप्रत्यये गोपाय्यादितिवत् । पणिषीष्ट ( व्यवहारार्थकस्यात्मनेपदिनः पणतेराशीर्लिङि इट् सीयुट् सुट् त ) । पनायति इत्यादि पणायतिवत् । क्षमूष् (—) षित्करणं षिद्भिदादिभ्योऽङित्यर्थम् । तेन क्षमा इतिसिध्यति । चक्षमे । चक्षमिषे—चक्षंसे इति—ऊदित्वादिड्विकल्पः । चक्षंसे इत्यस्य—'अनुनासिकस्य—क्विझलोः क्ङिति' (२६६६) इति दीर्घो न । तत्र क्विसाहचर्यात्तिङ्भिन्नस्य झलादेर्ग्रहणात् । एवं चक्षमिध्वे—चक्षंध्वे इति । अथ वहिप्रत्यये परे इट पक्षे—चक्षमिवहे इति विधाय—इडभावपक्षे विशेषं विवक्षुराह :—

२३०८ । म्वोश्च ॥८।२।६५॥

टी—। मान्तस्य धातोर्मस्य नकारादेशः स्यात् मकारे वकारे च परे । णत्वम् । चक्षमिवहे—चक्षण्वहे । चक्षमिमहे—चक्षण्महे । क्षमिष्यते—क्षंस्यते । क्षमेत । आशिषि—क्षमिषीष्ट—क्षंसीष्ट । अक्षमिष्ट—अक्षंस्त । 'कमु ४४३ कान्तौ' । कान्तिरिच्छा ।

The मकार of a root ending in म is replaced by the नकार when ( affixes ) मकार and वकार follow. Thus the alternative form is चक्षन्वहे = चक्षण्वहे = चक्षण्वहे ( the न is changed to ण by 'अट्कुप्वाङ् etc ). In the same way चक्षमिमहे—चक्षण्महे । कमु etc.

मित—। म्वोः + च इतिच्छेदः । म् च व् च म्वौ तयोः—सप्तम्यन्तम् । तदाह मकारे वकारे च परे इति । मान्तस्य धातोरिति 'मो नो धातो'रित्यतोऽनुवृत्तेरित्यर्थः । णत्वम्—'अट्कुप्वाङ्नुमव्यवायेऽपि' इत्यनेनेति भावः । क्षम् इत्यत्र—( क् + ष् + अ + म् ) षकारसत्त्वादिति । अन्यत् स्पष्टम् । सर्वत्र इड्विकल्पात् रूपद्वयम् । क्रमु इति—

२३१० । कमेर्णिङ् ॥३।१।३०॥

टी—स्वार्थे । ङित्त्वात्तङ् । कामयते ।

The affix णिङ् is attached after the root कमि ( कम् ) in the sense of स्वार्थ । Being ङित्, कमि becomes आत्मनेपदी, thus कामयते ( कम् + णिङ् = कामि ; कामि + शप् तिप् ( गुणः अयादेशः ) ।

मित— । कमेः णिङ्प्रत्ययः स्यात् स्वार्थे इत्यर्थस्तत् शेषपूरणेन व्याचष्टे—स्वार्थे इति । ङित्त्वादिति—णिङ इति शेषस्तत्साहचर्य्यात् कमेरपीति द्रष्टव्यम् । तङ् इति आत्मनेपदम्—तङानावात्मनेपदमिति सूत्रात् । अत्र यद्यपि 'तत्र अनुदात्तेतः कम्यन्ता दश' इत्यनेन आत्मनेपदत्वं प्राप्तं तथापि प्रत्ययान्तरेण संस्कारादप्राप्तिः ङित्त्वादित्युक्तम् । कामयते—इति—कम् + णिङ् = कामि (अत उपधाया इति वृद्धिः) ततः शपि सार्व्वधातुकार्द्धधातुयोरिति गुणे अयादेशे रूपम् । प्रत्ययान्तत्वेन अनेकाच्त्वेन आमि प्राप्ते लिटि रूपप्रदर्शनार्थमाह—

२३११ । अयामन्ताल्वाय्येत्निष्णुषु ॥६।४।५५॥

टी—'आम्' 'अन्त' 'आलु' 'आय्य' 'इत्नु' 'इष्णु'—एषु णेरयादेशः स्यात् । वक्ष्यमाणलोपापवादः । कामयाञ्चक्रे । 'आयादय आर्द्धधातुके वा' ( २३०५ ) । चकमे । कामयिता—कमिता । कामयिष्यते—कमिष्यते ।

The affix णि ( इ ) is replaced by अय when the affixes आम्, अन्त, आलु, आय्य, इत्नु and इष्णु follow. This rule supersedes what ( i.e' the लोप which ) is enjoined by the rule णेरनिटि ( 2313 ). He says वक्ष्यमाण for he will explain it afterwards. Thus कामयाञ्चक्रे—( कम् + णिङ् ) + आम् + चक्रे ( कृ + लिट् ए )

=कामि+आम्+चक्रे=कामय्+आम्+चक्रे । आयादय etc, चकमे=कम कम् ए—ककम् ए—चकमृए । कामयिता—कमिता (the 1st is णिङन्त and the 2nd without it) and both gets the aug. इट्)। Rest conj. is easy.

मित—अय+आम्+अन्त+आलु+आय्य+इत्नु+इष्णुषु इतिच्छेदः। आम् च अन्तश्चेत्यादीनां इष्णुन्तानां द्वन्द्वात् सप्तमीबहुवचनम्। णरनिटीति पूर्व्वसूत्रात्—णेरित्यनुवर्त्तते तेन आमन्तादिषु परेषु णेः (तदन्तस्य धातोरिकारस्येति फलितार्थः) "अय' इत्यादेशः स्यात्। वक्ष्यमाणेनेति—'णेरनिटि' (२३१३) इति सूत्रेण णे लोपः अस्माभिरग्रे वक्ष्यते तस्येदमपवाद इत्यर्थः। कामयाञ्चक्रे—कम्+णिङ्=कामि=कामय (अयादेशात्)=कामयाम् (आमप्रत्ययात्)=कामयाञ्चक्रे (कृञोऽनुप्रयोगात् आमप्रत्ययवदित्यात्मनेपदम्)। आयादयेत्यादि। चकमे इति पाक्षिकं रूपम्। स्पष्टम्। कामयिता इत्यादि—लुटि लृटि च णिङ् विकल्पात् प्रत्येकं द्वे द्वे रूपे इति बोध्यम्। अथ णिङन्तस्य कमेर्लुङि चङ्विध्यर्थमाह :—

## २३१२। णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् ॥३।१।४८॥

### टी—। ण्यन्तात् श्रादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे। 'अकाम्' 'इ' 'अत' इति स्थिते।

The affix चङ् is ordered in place of च्लि of a root ending in णि (णिच्) and of श्रि, द्रु and स्रु when लुङ् follows in the कर्त्तृवाच्य। Thus अकम+णि+चङ्+त=अकाम् इ अ त (चङ् retains अ only), this being the case we look forward :—

मित—। णिश्च श्रिश्च द्रुश्च स्रुश्चेति द्वन्द्वात् पञ्चमी। प्रत्ययग्रहणपरिभाषया—'णि' इत्यनेन तदन्तग्रहणम् तदाह—ण्यन्तात् इति। श्रादिभ्यश्चेति आदिपदेन द्रुस्रुवोर्ग्रहणम्। कर्त्तरीत्यस्यार्थमाह—कर्त्रर्थे लुङि परे इति। चङः अकारमात्रं शिष्यते तदाह—अकाम् इ अ त इति स्थिते इति (णि इत्यस्मात् इ) :—

२३१३। णेरनिटि ॥६।४।५१॥

टी—। अनिडादावार्द्धधातुके परे णेर्लोपः स्यात्। परत्वात्—'एरनेकाचः—' (२७२) इति यणि प्राप्ते।

"ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्व्वविप्रतिषेधेन" (वार्त्तिक)।—इति वार्त्तिकम्। णिलोपस्य तु पाचयतेः पाक्तिरित्यादौ क्तिजन्तमवकाशः इति भावः। वस्तुतस्तु 'अनिटि' इति वचनसामर्थ्यात् आर्द्धधातुकमात्रमस्य विषयः। तथाचेयङादेरपवाद एवायम्। इयङ्—अततक्षत्। यण्—आटिटत्। गुणः—कारणा। वृद्धिः—कारकः। दीर्घः—कार्य्यते।

The affix णि ( णिच् and णिङ् ) disappears when an आर्द्धधातुक ( affix ) having no इट् in the beginning follows. Now the rule 'एरनेकाचः' (272—6.4.82) is later in order of Panini than the rule 'णेरनिटि' (6.4,51) ; so by the परिभाषा—'विप्रतिषेधे परं कार्य्यम्', यण here being due, we read the Varttika here which means :—"णिलोप ( elision of णि ) and अल्लोप ( elision of अत् by अतो लोपः—2308) are enjoined, by means of पूर्व्वविप्रतिषेध ( this overturns 'पर विप्रतिषेध' taught by Panini in the rule 'विप्रतिषेधे परं कार्य्यम्' ), in the places of इयङ्, यण्, गुण, वृद्धि and दीर्घ directed by 'अचिश्नु-धातु—' ( 271 ), 'एरनेकाचः—' ( 272 ), 'सार्व्वधातुकार्ध—' ( 2168), 'अचो ञ्णिति' ( 254 ) and 'अकृत्सार्व्व—' ( 2298 ) in order." Of these two ( णिलोप aud अल्लोप ), the णिलोप overrules ( the operations ) इयङ्, यण्, गुण, वृद्धि and दीर्घ ( only ) while अल्लोप supersedes ( the operations ) वृद्धि and दीर्घ ( alone). Thus यण्

( enjoined by एरनेकाचः ) though subsequent is barred by णिलोप ( enjoined by णेरनिटि ) । And the intention ( of the Vartikakara ) is that the णिलोप ( i.e. the rule 'णेरनिटि') applies ( only ) in cases like पाक्ति etc ( पच् + णिच् = पाचि ; पाचि + क्तिध् = पाक्ति 'the designation of a certain person' for it is formed by the rule 'क्तिच्क्तौ च संज्ञायाम्' । It should be observed that the root पच् is अनिट्—hence the application of the rule णेरनिटि ); वस्तुतस्तु etc.—In fact, this rule 'णेरनिटि' i. e. णिलोप, occupies ( or applies to ) all the operations of आर्द्धधातुक on the strength of the term 'अनिटि' (in the rule). Thus this णिलोप is an अपवाद of ( or a specified injunction over ) इयङ्, यण्, गुण, वृद्धि and दीर्घ । The drift is this :—There runs the परिभाषा 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' or 'of the subsequent, the persistent, the internal and the special, the later in the order above has precedence over the earlier'—Thus though the rule 'णेरनिटि' is followed by 'अचिश्नु—', 'एरनेकाचः' etc, yet on the strength of its being special ( अपवाद ), it will predominate over the operations इयङ्, यण् etc as ordered by "अचि श्नु—" &c. This is inferred form the application of the term 'अनिटि' in the rule. णिलोप is enjoined to पाचि (in पाक्ति) । But पाचि (or पच्) is already अनिट् । Hence the word अनिटि in the rule 'णेरनिटि' becomes superfluous. But it cannot be so, it has a hidden meaning by which we know that it is a special rule otherwise Panini could have said 'णेः' only instead of 'णेरनिटि'for he also knew fully well that the root पच् is अनिट् । Thus it is concluded that णेरनिटि

will not only operate on पाक्ति ( पच् ), but also where (regarding आर्द्धधातुक ) इयङ् etc were due. Hence there is no need of the Vartika as regards णिलोप। It ( the Varttika ) is, however, valid in respect of अल्लोप in cases like चिकीर्षक ( चिकीर्ष + ण्वुल् ) where वृद्धि was due by 'अचो ञ्णिति' ; but 'अतो लोपः' ( अल्लोपः ), though preceding, comes in and the rule 'अचो—' does not apply, and ( in cases like ) चिकीर्ष्यात् ( चिकीर्ष + आशीर्लिङ् यात् ) where दीर्घ was due by 'अकृत्सार्व्वधातुकयोः' ( 2298 ), but अल्लोप ( अतो लोपः—2308 ) comes in and then चिकीर्ष् not being अकारान्त the rule 'अकृत्—' does not apply. इयङ् etc—These are the instances in order of the Vartika 'यल्लोपावियङ्यण् etc' अततक्षत् ( अट्—तक्ष् + णिच् + चङ् + त् = अ ताक्षि ताक्षि अ त् = अतक्ष् तक्ष् अत् = अततक्षत्—here इयङ् is barred by णिलोप )। Instance of यण् = आटिटत् ( अट + णिच् + लुङ् ( चङ् ) + त् = आट् ( आडजादीनाम् ) + आटिटि ( 'अजादेर्द्वितीयस्य thus 'टि' only is reduplicated and not आ also ) + अ ( चङ् ) + त् = आ आटिट् अत् ( now यण् being due by 'एरनेकाच—' णिलोप prevails giving आटिटत् )। Instance of गुणः—कारणा—( कृ + णिच् = कारि ; कारि + युच् ( अन् ) + स्त्रियाम् + णिलोप = कार् + अन् + आप् and not कारे etc by गुणः )। Instance of वृद्धिः = कारकः—( कृ + णिच् + ण्वुल ( अकः ) = कार् अकः and not कारै अकः by वृद्धिः )। Instance of दीर्घ = कार्य्यते ( कारि with णिच् ) + यक् + शप् + ते = कार + य् अते = कार्यते and not कारीयते by 'अकृत् सार्व्वधातुकयोः— (2298).

मित—। णेः + अनिटि इतिच्छेदः। 'अनिटि' इत्यस्य विशेषणत्वात् तदादि विधिस्तदाह—अनिडादाविति। 'आर्द्धधातुके' ( २२०७—६।४।४६ ) इति चाधिकृतं—

वर्त्तते तच्च अनिटि इत्यनेन विशेष्यते ; तदाह—अनिडादौ आर्द्धधातुके परे इति। 'अतो लोपः' ( २३०८—६।४।४८ ) इत्यतो लोप इत्यनुवर्त्तते तदाह—णेर्लोप इति। परत्वादिति—'णेरनिटि ( ६।४।५१ ) इत्यपेक्षया 'एरनेकाचः—' (२७२—६।४।८२) इत्यस्य परवर्त्तित्वेन 'विप्रतिषेधे परं कार्य्यम्' इति बलवत्त्वाद् यणि ( यणादेशे प्राप्ते ) इत्यर्थः—वार्त्तिक आरभ्यते यथा—ण्यल्लोपाविति = णिलोपस्य अल्लोपस्य त्यर्थः । इयङ्च यण्चगुणस्य वृद्धिश्च दीर्घश्च—इयङ्यण् गुणवृद्धिदीर्घाः (द्वन्द्वः) ; तेभ्यः—विभागे ५मी। पूर्व्वौ विप्रतिषेधौ ( निषेधशास्त्रम् ) तेन। अयमर्थः—णिलोपाल्लोपौ पूर्व्वविप्रतिषेध-नियमेन इयङ्यण्गुणवृद्धिदीर्घेभ्यो बलवत्तरौ भवतः इ, यङादीन् व्यपोद्य प्राक् णिलोप—विधिः अल्लोपविधिश्च ( 'अतोलोप'इत्यतोऽल्लोप इति ) प्रयोक्तव्यौ, ततश्च इयङादी-नामप्रवृत्त्या अततक्षदित्याद्यभिमतरूपाणि सेत्स्यन्ति इति। तत्र णिलोप इयङ्यण् गुणविधिदीर्घेभ्यः ; अल्लोपस्तु वृद्धिदीर्घाभ्यामेव बलवत्तर इति विवेकः। ननु यद्यस्माद् वार्त्तिकादेव णिलोपविधिर्गतार्थस्तर्हि 'णेरनिटि'इति सूत्रं किं व्यर्थम् ? नेत्याह—णिलोपस्य त्विति। पाचयतेरिति = ण्यन्तस्य पचेरित्यर्थः। पाक्तिरिति—'क्तिच्क्तौ च संज्ञायाम् ( ३३१३—३।३।१७४ ) इति क्तिच्। ततः 'तितुत्रतथसिसुसरकसेषु च' (३१६३—७।२।९ ) इति इण्निषेधे 'णेरनिटि' इत्यस्य प्रवृत्तिः। ततो णिलोपे पाक्तिरिति भवति। पाक्तिरिति कस्यचित् पाचकस्य संज्ञा इति वृद्धाः। क्तिजन्तमवकाश इति। अत्रैव णेर-निटि इत्यस्य प्रवृत्तिः नान्यत्रेतिभावः वार्त्तिककारस्याभिप्राय इत्यर्थः। इयङादिषु तु पूर्व्वविप्रतिषेधेन पूर्व्वोक्तवार्त्तिकमेव आदरणीयमिति। वस्तुगत्या तु वार्त्तिकमिदं नादर्त्तव्यम्। णेरनिटीत्यस्मादेव कार्य्यसिद्धेरित्याह—वस्तुतस्त्विति। अनिटि इति वचन-सामर्थ्यादिति। यतः पाणिनिना 'णेः' इत्यनुक्त्वा 'णेरनिटि' इत्युक्तम् अतः सर्व्वा-ण्येव आर्द्धधातुकानि अस्य सूत्रस्य विषयीभूतानि। ततः किम्—इत्यत आह—तथाचेति। अपवादो = विशेषविधिः। अयम् णिलोपः = णेरनिटीति सूत्रमित्यर्थः। अयं भावः—यदि 'णेरनिटि' इत्यत्र अनिड्वचनं केवलं पाक्तिसिद्ध्यर्थं कृतं भवेत् तदा अनिटीति न वक्तव्यम्। एकमात्रविषयत्वात् ; किञ्च परत्वादियङादिविधयो यदि णिलोपविधिं बाधेत तर्हि 'कारयिता' इत्यादौ इडादौ आर्द्धधातुके परे गुणेनैव बाधसिद्धेः

'अनिटि' इति व्यर्थम्। केवलं 'णेः' इत्यनेनैव कार्य्यसिद्धेः। अतएवात्र अयं विवेको यत्—यतः सूत्रे 'अनिटि' इति उपात्तम् अतः सर्व्वमप्यनिडार्द्धधातुकं णिलोपस्य विषयः। एवञ्च अपवादत्वात्—'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परिभाषया परानपि इयङादीन् बाधित्वा णिलोपः प्रवर्त्तते एव। तथाच वार्त्तिकं न कर्त्तव्यम्। अल्लोपांशे तु वार्त्तिकम् आवश्यकमिति स्वीकर्त्तव्यम् अन्यथा चिकीर्षकः —चिकीर्ष्यादित्येवमादयो न सिध्येयुः तत्रैवंविधवचनसामर्थ्यस्य (अनिटि इतिवत्) अभावात्। तथाच चिकीर्ष ण्वुल इति स्थिते णित्त्वाद् वृद्धौ प्राप्तायां पूर्व्वविप्रतिषेध—नियमेन अल्लोपे वृद्धिनिवृत्त्या रूपसिद्धिः। एवम् चिकीर्ष यात् (आशीर्लिङ्) इति स्थिते 'अकृत्सार्व्वधातुकयोः (२२९८) इति दीर्घे प्राप्ते पूर्व्वविप्रतिषेधेनाल्लोपः। ततो दीर्घनिवृत्तिस्ततो रूपमिति। शब्देन्दुशेखरे तूभयत्र पूर्व्वविप्रतिषेधपक्ष एव स्वीकृत इति। अथेयङ्यण्गुणवृद्धिदीर्घान् क्रमेणोदाहरति इयङिति। अततक्षत्—तक्ष तनूकरणे। तक्ष्+णिच्+लुङ् त् इति स्थिते चङडागमद्वित्वेषु 'प्राप्तेषु' अ ताक्षि-ताक्षि अ (चङ्) त् इति जाते संयोगपूर्व्वकत्वाद् यणभावे इयङ्। ततो विप्रति-षेधेन णिलोपे अ तक्ष् तक्ष् अत् इति ततो हलादिशेषे रूपम्। यण्—आटिटत्—अट्+णिच+लुङ् त् स्थिते चङाडागमद्वित्वेषु आट् आटिटि अत् इति जाते ('अजादेस्तु द्वितीयस्य' इति टिमात्रस्य द्वित्वम्) तत्र 'एरनेकाचः' इति यणि प्राप्ते पूर्व्वविप्रतिषेधेन णिलोपो भवति ततश्च आ आटिट् अत् ततो रूपम्। गुणः—कारणेति—कृ+णिच्+युच्=कारि अन्+टाप् (गुणापवादो णिलोपः) कार् अन् आ= कारणा। वृद्धिः—कारक इति कृ+णिच्+ण्वुल (अकः)=कारि+अकः णित्वाद् वृद्धिः प्राप्नोति पूर्व्वविप्रतिषेधेन तदपवादः णिलोपः; ततःकार् अकः=कारकः (युच् ण्वुल इत्येतौ प्रत्ययौ 'युवोरनाकौ (१२४७) इत्यनेन अनाकौ इति भवतः)। दीर्घः—कार्य्यते इति—कृ+णिच्+यक्+शप्ते=कारि य् अ ते=कारि यते= कार् यते (अकृत्सार्व्वधातुकयोरिति दीर्घं बाधित्वा पूर्व्वविप्रतिषेधेन णिलोपः) =कार्य्यते। एवं प्रकृते च अकाम् इ अत इत्यत्र 'एरनेकाचः—' इति यणं बाधित्वा पूर्व्वविप्रतिषेधेन णिलोपे अकाम् अत इति स्थिते।

२३१४। णौ चङ्युपधाया ह्रस्वः ॥७।४।१॥

दो। चङ्परे णौ यदङ्गं तस्योपधया ह्रस्वः स्यात् ।

The penultimate (अच्) of that which is an अङ्ग (verbal base) becomes short (ह्रस्व) when the affix णि follows with the affix चङ् after it. Thus अ काम् अत now becomes अकम् अत ।

मित—। णौ, चङि+उपधायाः+ह्रस्वः इतिच्छेदः। 'चङि' इत्येतत्—'णौ' इत्येतस्य विशेषणमित्याह चङ्परे णाविति—चङ् परो यस्मादिति विग्रहः। तादृशे णौ णिप्रत्यये परत इत्यर्थः। अङ्गमिति अङ्गाधिकारादिति बोद्धव्यम्। तेन अ काम् अ त इति अनेन अ कम् अ त इति भवति। उपधायाः किम्—। अचकाङ्क्षत्। काङ्क्ष इत्यदन्तोऽयं धातुस्तेन आकारस्य उपधात्वं न भवति। चङि किम्—हारयति। अत चङभावाद्धृस्वादेशो न। अथ चङि द्वित्वविध्यर्थमाह :—

२३१५। चङि ॥६।१।११॥

दो। चङि परेऽनभ्यासधात्ववस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य।

The first letter of an एकाच् (containing a single vowel) root and the second letter of an अजादि (having a vowel at the outset) root are reduplicated when the affix चङ् follows (in लुङ्)। Thus अ कम् अत=अ कम् कम् अत=अ ककम् अत (हलादिः शेषः)=अचकम् अत [अभ्यासेचर्च (2182) and "कुहोश्चुः"] :—

मित—। 'एकाचो द्वे प्रथमस्य' (६।१।१) 'अजादेर्द्वितीयस्य' (६।१।२) 'लिटि धातोरनभ्यासस्य' (६।१।८) ततः 'चङि' (६।१।११) इति अष्टाध्यायी—सूत्रक्रमः। लिटीति नानुवर्त्तते तदाह—अनभ्यास धात्ववस्येत्यादि। 'चङि' इति

परसप्तमी ; तदाह—चङि परे इति—नात्र द्विर्वचनेऽचीति द्वित्वनिषेधशङ्का । द्वित्व-निमित्तचङ उपधया व्यवहितत्वादिति द्रष्टव्यम् । एवम् अ कम् अत इत्यत्रानेन द्वित्वे अ कम् कम् अत = अ ककम् अत = अ चकम् अत ( हलादिशेषे चर्त्वे च ) इति स्थिते, अभ्यासस्य सन्वद्भावं भवतीत्याह :—

२३१६ । सन्वल्लघुनि चङ्परेऽनग्लोपे ॥७।४।९३॥

टी— । 'चङ्परे' इति बहुव्रीहिः । अन्यपदार्थो णिः । स चाङ्गस्येति च द्वयमाप्यावर्त्तते । अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति, यावत् तत्परं यल्लघु, तत्परोऽयोऽङ्गस्याभ्यास,—स्तस्य सनीव कार्यं स्यान्नावग्लोपेऽसति । अथवा 'अङ्गस्य' इति नावर्त्तते । चङ्परे णौ यदङ्गं, तस्य योऽभ्यासो लघुपर—स्तस्येतादि प्राग्वत् ।

The term 'चङ्परे' in the rule forms a बहुव्रीहि compound—meaning 'after which (comes) चङ्'—[ and it is an adjective to 'णौ' which is to be drawn from the rule 'णौ चङ्य् उपधाया:—' (2314) to make the predication complete. The word 'णि' is set apart from श्रि, द्रु and स्रु । Hence the expression 'चङ्परे णौ' does not include them for they are not णन्त ( having the affix णि at the end ). This word णि and the ( carrying ) word अङ्गस्य move round i. e. they both are taken twice [ thus णि is once connected with the word लघुनि ( चङ् परे णौ यल्लघु तस्मिन् परे ) and at another time it is connected with the expression 'अनग्लोपे ( णौ अग्लोपेऽसति) and the word अङ्ग is once taken as a निमित्त or cause of 'चङ्परत्व' ( अङ्गसंज्ञानिमित्तं यच्चङ्परम् ) and

at another time it is construhed with the अभ्यास ( योऽङ्गस्य अभ्यासः )] । Thus the meaning of the rule is—( Note that the rule is explained in two different ways according to the two distinct schools or views viz. यथोद्देशपक्ष and the कार्यकालपक्ष) that—that, which is the अभ्यास of a short verbal stem ( अङ्ग ) which is followed by the affix णि which again is followed by the affix चङ् on the strength of the designation of a verbal stem (अङ्ग संज्ञानिमित्तम् )—receives the same operation as has been prescribed for the अभ्यास in सन् provided, owing to the following of the affix णि, there is no elision of ( any of ) the अक् letters ( अ, इ, उ, ऋ, ऌ of the अङ्ग or the verbal stem). [ Now he brings forward the other explanation saying ] or—we need not take the word 'अङ्गस्य' twice. ( In this case the meaning then will be ) that, that which is an अभ्यास followed by a short ( अङ्ग ) after which stands the affix णि along with the affix चङ् after it—receives the same operation as has been etc (as in the former case). ( The difference between the two is that the former contains the clause 'अङ्गसंज्ञानिमित्त' यच्चङ्परम्' whereas the latter contains in its stead the clause चङ्परेणी-यदङ्गम्' ). Now what follows if the अभ्यास receives the सन्वद्भावः ? To answer this he says in the next rule :—

मित— । सन्वत्+लघुनि, चङ्परे+( अनक् लोपे )—इतिच्छेदः ।

[ सूत्रगतपदार्थः ] । सन्वत् इत्यस्यार्थः—'सनि इव,' सप्तम्यन्त्याद्वतिः इत्याह—'सनीव कार्यं स्यात्' इति । 'लघुनि' इति परसप्तमी । तत्र 'अत-लोपोऽभ्यासस्य' ( २६२०—७।४।५८ ) इत्यतोऽनुवृत्तिलभ्यस्य 'अभ्यास'—पदस्य विशेषणं तदाह 'यल्लघु तत्परो योऽङ्गस्याभ्यास' इति । 'चङ् परे' इति 'णौ चङ्युपधाया ह्रस्वः' ( २३१४—७।४।१ ) इत्यतोऽनुवर्तनप्राप्तस्य—'णौ' इत्यस्य विशेषणम्—'चङ् परो

यस्मात्' ( बहुव्रीहिः ) इति तेन च ( बहुव्रीहिणा ) 'यस्मात्—' इत्यनेन णिराक्षिप्यते। तदाह—अङ्गसंज्ञा निमित्तं यश्चङ्परं णिरिति यावदिति। 'अनग् लोपे' इति च भावे सप्तमी। तदाह—अग् लोपे असति इति। अगित्यनेन—इति—पचिकामिश्रकि-प्रभृतयश्च अग्लोपिनः ( अकं लोपयन्ति ये ते इति विग्रहः ) 'चङ परे' इति बहु-

[ वृत्तिगतपदार्थः ]। व्रीहि'रिति दर्शितम्। ननु—'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्' ( २३१२ ) इति श्रिद्रुस्रुवोऽपि चङ् पराः तेन तेषामपि अभ्या-

सस्य—सनवद्भावः स्यात् तत् बहुव्रीह्याश्रयणे कुतो निर्व्वाह इति चेत्। न। यद्यपि चङ् परमित्यनेन अङ्गमेवाक्षिप्यते तथाप्यनुवृत्तिवलात् ण्यन्तस्यैवस्याङ्गस्य आक्षेपो वोद्ध्यः। ततश्च श्रिद्रुस्रुवां ण्यन्तत्वाभात् न तेषां संग्रहः। एतदेवाह—'अन्यपदार्थो णि'रिति। कैयटवचनमिदम्। णिभिन्न इति तदर्थः। चङ् परे इत्यत्र कर्म्मधारयाश्रयणे तु सूत्रगत—'पर'—पदस्य वैयर्थ्यं स्पष्टमेव। केवलं 'चङि' इत्येवमुक्ते एव हि तादृशार्थस्य लाभात् ( चङि परे इति )। स चाङ्गस्य इति चेति—स चेत्यनेन चङ् परकस्य णेः संग्रहः। आवर्त्तते इति—द्विः संवध्यते इत्यर्थः। तथाच णि—पदस्य अङ्गपदस्य च द्विरावृत्तिर्वृत्तावेव स्पष्टं प्रथमव्याख्याने। द्वितीयव्याख्याने तु अङ्गपदस्य सकृदेव प्रवृत्तिरिति। अङ्गसंज्ञानिमित्तमिति—अङ्गस्येति निमित्तभावे ( हेतुहेतुमद्भावे) षष्ठी। तथाच अङ्गसंज्ञाया निमित्तं यश्चङ्परो वर्णः इत्यर्थः। चङ्परो वर्णश्च णेरिकार एव। तेन श्रिद्रुस्रुवामन्त्यवर्णानां न ग्रहणं तेषां प्रत्ययत्वाभावेन अङ्गसंज्ञानिमित्तकत्वाभात् (यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गमित्युक्तेः)। ततः—तत्पर इति तत् परं ( सः परो ) यस्मादिति विग्रहः। अङ्गस्य द्विरावृत्त्या एकम् पदमभ्यासेऽन्वेति इत्याह 'योऽङ्गस्य अभ्यास' इति। अथ द्वितीयव्याख्यानार्थमाह—अथवेति। अत्र व्याख्याने अङ्गपदस्य —अभ्यासे एवान्वयो द्रष्टव्यः। प्राग् वदिति 'सनीव कार्य्यं स्यात् णावग्लोपेऽसति' इति शेषः। तदेतत् पक्षद्वयमपि कैयटग्रन्थे स्थितम्। तथा च तद्वचनम्—

'चङ्पर इति बहुव्रीहिणा अन्यपदार्थो णिराश्रीयते। तेन अचकमत इति केवले चङि सन्वद्भावो न भवति। न हि णिज्व्यतिरेकेण अन्यश्चङ्परः सम्भवति। तेन चङ्परे णौ यल्लघु तस्मिन् परतोऽभ्यासस्य सन्वत् कार्य्यं भवति इति।

'अन्ये तु व्याचक्षते 'चङ्परे णौ यदङ्गं तदभ्यासस्य सन्वद्भावो विधीयते णा'वित्यादि ।

अनयोः प्रथमपक्ष एव भाष्यारूढः । तथाच भाष्यम्—'इह कस्मान्न भवति । अजजागरत् ! 'लघुनिचङ्परे' इत्युच्यते व्यवहितं चावलघुचङ्परम् । इहापि तर्हि न प्राप्नोति अचीकरत् । अजीहरत् (कृहृइत्यनयोर्ण्यन्तयोर्लुङ्) । वचनाद् भविष्यति । इहापि वचनात् प्राप्नोति अजजागरत् । येन नाव्यधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् । केन च नाव्यधानं । वर्णेनैकेन एतेन । पुनः संघातेन व्यवधानं भवति न भवति चेति । अनग्लोपे इति किम् । अचकथत् । अदन्तोऽयं धातुर्नैदन्तम् । अल्लोपस्तु आर्द्धधातुकापेक्षो न तु णिच्प्रत्ययापेक्षः । अत एवोक्तं 'णावग्लोपेऽसतीति" । ननु अभ्यासस्य सन्वद्भावो भवतीत्युक्तं,किं च सनि अभ्यासकार्यमित्यपेक्षायामाह—

२३१७ । सन्यतः ॥७।४।७९॥

दी— । अभ्यासस्यात इकारः स्यात् सनि ।

The short अ af the अभ्यास is replaced by इकार when (the affix) सन् follows. Thus अ चकम् अ त now becomes अ चिकम् अत :—

मित— । सनि+अतः इतिच्छेदः । 'अत लोपोऽभ्यासस्य' (२६२०) इत्यतो अभ्यासस्येत्यनुवर्त्तते । 'भ्रञामित्' (७।४।७६) इत्यत इत् (इकारः) इति च । तदाह—अभ्यासस्येत्यादि । अर्थः स्पष्टः । एतेन अ चकम् अत इति सन्वद्भावात् अ चिकम् अत इति जाते—

२३१८ । दीर्घो लघोः ॥७।४।८४॥

दी— । अभ्यासस्य लघोर्दीर्घः स्यात् सन्वद्भावविषये । अचीकमत । णिङभावपक्षे—"कमेश्च्लेश्चङ् वक्तव्यः" (वार्त्तिक) । णेरभावान्न दीर्घसन्वद्भावौ । अचकमत

संज्ञायाः कार्य्यकालत्वादङ्गं यत्र द्विरुच्यते ।
तत्रैव दीर्घः सन्वच्च नानेकाच्चिति माधवः ॥१॥
चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते ।
किन्त्वस्यावयवः कश्चित् तस्मादेकाच्चिदं द्वयम् ॥२॥
वस्तुतोऽङ्गस्यावयवो योऽभ्यास इति वर्णनात् ।
ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे ॥३॥
चकास्तौ तूभयमिदं न स्यात् स्याच्च व्यवस्थया ।
णौ विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा ॥४॥
इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात् ।
णेरग्लोपेऽपि सम्बन्धस्त्वगितामपि सिद्धये ॥५॥

अथ क्रम्यन्तास्त्रिंशत्परस्मैपदिनः । अण ४४४ रण ४४५ वण ४४६ गुण ४४७ मण ४४८ कण ४४९ क्वण ४५० व्रण ४५१ भ्रण ४५२ ध्वण ४५३ शब्दार्थाः । अणति । रणति । वणति । वकारादित्वादेत्वाभ्यासलोपौ न । ववणतुः । ववणिथ । 'धणि'रपि कैश्चित् पठ्यते । ओणृ ४५४ अपनयने । ओणति । ओणाञ्चकार । 'शोणृ ४५५ वर्णगत्योः । शोणति । शुशोण । 'श्रोणृ ४५६ संघाते' । श्रोणति । 'श्लोणृ ४५७ च' । शोणादयस्त्रयोऽमी तालव्योष्मादयः । 'पैणृ ४५८ गतिप्रेरण— श्लेषणेषु' । 'प्रैणृ' इतिक्वचित् पठ्यते । पिप्रैण । 'ध्रण ४५९ शब्दे' । उपदेशे नान्तोऽयम् । 'रषाभ्याम्—' (२३५) इति णत्वम् । ध्रणति । णोपदेशफलं यङ्लुकि । दन्ध्रन्ति ।

'वण' इत्यपि केचित् । वेणतुः । वेणिथ । 'कन ४६० दीप्तिकान्तिगतिषु' । चकान् । 'ष्टन ४६१ वन ४६२ शब्दे'—स्तनति । वनति । 'वन ४६३ षन ४६४ संभक्तौ' वनेरर्थभेदात् पुनः पाठः । सनति । ससान । सनतुः ।

The short अभ्यास becomes long ( दीर्घ ) in the matter of सन्वद्भावः । Thus अचिकम् अत now figures as अचीकम् अत= अचीकमत । णिङभाव etc—It has been said that affixes like आय, इयङ् and णिङ् are optional by the rule 'आयादय आर्द्धधातुके वा' ( 2305 ); so when the affix णिङ् is wanting, 'it should be said that the च्लि of कमि ( कम् ) is replaced by चङ्' (Vartika). Thus अचकमत for there being no णि, सन्वद्भाव is wanting and consequently no दीर्घादेश । [ ( Now to explain the import of the rules 'सन्वल्लघुनि etc' and 'दीर्घो लघोः' in a single place, Bhottoji versifies the same, Before going to translate the verses we should explain the परिभाषाs 'यथोद्देशं संज्ञापरिभाषम्' (1) and 'कार्य्यकालं संज्ञापरिभाषम्' ( 2) elaborately ; for these have been adopted here.

(1) 'Samjnas and Paribhashas remain where they are taught' ( Kielhorn ). यथोद्देशम् means not going beyond the उद्देश or the place where they ( the संज्ञाs and the परिभाषाs) have been taught or pronounced in the form of a rule. Thus in the present case ( सन्वल्लघुनि चङ्परेऽनग्लोपे ) we repeat the sense only of the words 'अङ्गस्य' and 'अभ्यासस्य' ( which are the संज्ञा—words expressed in the rules 'यस्मात् प्रत्ययविधिस्तदादि

प्रत्यये अङ्गम्' and 'पूर्व्वोऽभ्यासः' (2178) and not carrying down the very rules to place them by the side of 'सन्वल्लघुनि etc.' But this (placing the very rules containing the संज्ञाs 'अङ्गम्' and 'अभ्यासः' in the form of 'अङ्गस्य' and 'अभ्यासस्य') we do in the case of the latter (कार्य्यकालं संज्ञा—) which means :—

(2) Samjnas and Paribhashas unite with the rules that enjoin certain operations, (provided the Samjnas occur or are valid in those rules, and povided the Paribhashas concern them). ('यत्र कार्य्यं तत्रोपस्थितं द्रष्टव्यम्—' भाष्यम्)। Thus the difference between the two परिभाषाs is that of sense and verbatim use; (of course, there is another difference between the यथोद्देश-पक्ष and the कार्य्यकालपक्ष—(as Nagesha holds) that on the यथोद्देशपक्ष—the rules given in Panini's last three पादs (2—4). cannot be placed near the परिभाषाs contained in or indicated by a Jnapaka in Panini (from अध्याय 1st. to the end of the 1st. पाद of the 8th अध्याय), because so far as the latter are concerned they do not exist (or असिद्ध by the rule 'पूर्व्वत्रासिद्धम्') whereas, on the कार्य्यकालपक्ष the परिभाषाs are also placed (without restriction) near those rules which are given in Paninis last three padas or sections. But here we are not concerned with this case)].

'संज्ञायाः etc......माधवः—' Madhava holds that the दीर्घादेशः and the सन्वद्भावः (of the अभ्यास) are effected only where, owing to the कार्य्यकालत्व of the संज्ञा (i.e. the presence of the technical term when the operation is going on), the अङ्ग (verbal stem) is reduplicated (i. e. in the case of one—

vowel-containing or एकाच्क roots only and ) not in the case of more-than-one-vowel-containing (अनेकाच्क) roots ( where a single part or letter only with its vowel instead of the whole root is doubled ). ( 1st verse ) । ( Thus कम् being एकाच is duplicated in full and as a result the form is अचीकमत ( with सनवद्भाव: and दीर्घादेश: ; similarly अचीकरत् (कृ + णिच् लुङ त्), अपीपचत् ( पच् + णिच् + लुङ त् ) and so on. )

'In the case of चकास्ति ( चकासृ दीप्तौ ), अर्थापयति ( अर्थ + णिच् = अर्थापि a णिजन्त root with the aug. आपुक् ) and ऊर्णोति ( ऊर्णुञ् आच्छादने ), not the अङ्ग i.e. whole root but a certain part of it is doubled ; hence these two ( i.e. the सन्वद्भाव: and the दीर्घविधि: ) are applicable in the cases of one-vowel-containing or एकाच्क roots only. ( 2nd. verse ).

Thus चकासृ + णिच् + लुङ त् gives अचचकासत् ( with the duplication of च only ), and अर्थ + आपुक् + णिच + लुङ्त् gives आर्तथपत् (with the duplication of थ only by 'अजादेर्द्वितीयस्य') and ऊर्णु + णिच् gives और्णुनवत् (with the duplication of णु only) ।

'But in fact, according to our opinion दीर्घादेश applies to ऊर्णु only whereas both ( the सन्वद्भाव and दीर्घादेश ) are applicable to the णिजन्त root अर्थापि ( alone ) on the score of our explanation 'अङ्गस्यावयवो योऽभ्यास :—'that reduplication which is a part of the verbal stem.' ( 3rd. verse ).

Thus और्णुनवत् ( सन्वद्भाव is wanting here because there is no अक् in the reduplicate (अभ्यास) hence we have only दीर्घादेश here, and आर्तीथपत् (with सन्वद्भाव: and दीर्घ : ) ।

'But in the case of चकास्ति (i.e. चकास्+णिच्+लुङ्त्) both these (सन्वद्भाव and दीर्घ) are sanctioned and at the same time not—sauctioned according as the व्यवस्था or regulation is ; (and the व्यवस्था is that) the affix णि (णौ) is an adjective either to the adjoining word 'लघुनि' or to (the carrying and remote word) 'अङ्गम्' (The drift is :—if we interpret—'अङ्गसंज्ञानिमित्तं यच्चङ्परो णिरिति यावत् तत्परं यल्लघु etc. (1st. Expln.) then there will be no सन्वद्भाव and दीर्घ (अचचकासत्) ; but on the other hand if we interpret 'चङ्परे णौ यदङ्गम्—' etc. (2nd Expln.) then there will be both सन्वद्भाव and दीर्घ giving अचीचकासत् । (4th. verse).

'(We have interpreted the rule 'सन्वल्लघुनि etc.' in two ways) on the authority of Kaiyata himself and have also construed the affix णि with the term अग्लोप (cf. his explanation 'णावग्लोपेऽसति' under 'सन्वल्लघुणि' etc.) to effect the सन्वद्भाव and दीर्घ in respect of अगित् roots (such as पचि कमि शकि etc.). Thus अपीपचत् etc. also are valid (the word एव in the expression 'कैयटेनैव' is to show that both the views are enunciated by Kaiyata alone and not by Kaiyata and Haradatta as others have explaned—Tattwabodhini).

मित—। अत लोपोऽभ्यासस्य (२६२०—७।४।५८) इत्यतोऽभ्यासस्येति अनुवर्त्तते—तच्च लघोरिति पदेन सम्बध्यते तदाह—अभ्यासस्य लघोरिति अच इत्यर्थः। 'सन्वल्लघुनि चङ् परेऽनग्लोपे' इति सूत्रं सनवज्ज्र्मिद्यानुवर्त्तते तेनेदमपि सूत्रं प्राग्वद् द्विधा व्याख्येयमिति ध्वनयन्नाह—सन्वद्भावविषये इति। फलितमाह अचीकमत इति (अ चिकम् अत इत्यस्यानेन दीर्घे सति रूपम्)। लघोः किम्? णा हिंसायाम्। तस्य णन्तालुङि अचिणावत् इति। अथ 'आयादय

आर्द्धधातुके वा' इत्युक्त्या कमेर्णिङ्विकल्पात् णिङः अभावपक्षे—दीर्घसन्वद्-भावयोरप्यभावात् 'कमेश्च्लेश्चङ् वक्तव्यः' इति वार्त्तिकेन चङः प्राप्तिस्तेन च 'अचकमत' इति सिध्यति। तदेवाह णिङभाव पक्षे इत्यादिना। इह कमेरण्यन्तत्वेन चङभा-वात् वार्त्तिकारवचनम्। अथ पञ्चभिः श्लोकैः 'सनवल्लघुनि—' इत्यत्र 'दीर्घो लघो'रित्यत्र च यन्मतद्वयं संक्षेपादुपन्यस्त' तस्यैव प्रपञ्चार्थमाह—संज्ञायाः कार्य्य-कालत्वादिति—अत्रेदं सम्प्रधार्य्यम् शास्त्रे ऽस्मिन् पक्षद्वयं विद्यते। एकः 'यथोद्देशं संज्ञापरिभाषमिति'। अपरः 'कार्य्यकालं संज्ञापरिभाषमि'ति। यद्यपि मूलतः कार्य्य-कारित्वमुभयोः समानमेव तथाप्यस्ति कश्चिद् विशेषः। तत्र पूर्व्वस्यार्थः—उद्देश-मनतिक्रम्य यथोद्देशम्। संज्ञाः परिभाषाश्च यत्र यत्रास्मिन् शास्त्रे उपदिश्यन्ते तत्र तत्रैव तेषामुपस्थितिः द्रष्टव्या नान्यत्रेति। कार्य्यकालमित्यस्यार्थस्तु—संज्ञाः परिभाषाश्च तत्तत्कार्य्येण तत्र तत्र (कार्य्यप्रदेशे) काल्यन्ते सन्निधिं प्राप्यन्ते सन्निधाप्यन्ते इति। तेन पूर्व्वपक्षे संज्ञापरिभाषाणामर्थस्यैवोपस्थितिर्न तु तत्तत्संज्ञापरिभाषाविधायक-सूत्राणाम्। अन्यपक्षे (कार्य्यकालपक्षे) तु तेषामेवेति भेदः (१)। तथा च प्रकृते सन्वल्लघुनि इति सूत्रे दीर्घो लघोरिति सूत्रे च 'अङ्गस्य' 'अभ्यासस्य' च अर्थत एव उप-स्थितिरनुवृत्तिर्यथोद्देशपक्षे—कार्य्यकालपक्षे तु अङ्गाभ्यासविधायकयो'रङ्गस्य' 'पूर्व्वोऽभ्यास' इति सूत्रयोरपि तत्र (सन्वदित्यत्र दीर्घ इत्यत्र च) एकवाक्यतया अवस्थानमिति। तेन चायमर्थः 'अङ्गस्य ये द्वे उच्चारणे—विहिते तयोः पूर्व्वोऽभ्यास—संज्ञः स च सन्वद् भवतीति। अतश्च 'अङ्गस्य ये द्वे उच्चारणे' इत्यनेन क्रद्योग-लक्षणा कर्म्मणि—षष्ठ्येव समाश्रीयते न त्ववयवषष्ठी। पूर्व्वस्या इतरापेक्षया बलवत्त्वात्। तेन च कृत्स्नस्यैव हि अङ्गस्य द्विरुच्चारणम् न तु तदेकदेशस्य तदवयवस्येति यावत्। तथाच 'कृत्स्नमङ्ग' यत्र द्विरुच्यते न तु तदवयवमात्रं तत्रैव सनवल्लघुनीति सन्वद्भावः, दीर्घो लघोरिति दीर्घश्च फलति। 'कृत्स्नमङ्गञ्च' यदा धातुरेकाज् भवति तदैव

---

(१) इतोऽधिकं जिज्ञासुभिरेवं विधेस्थले परिभाषेन्दुशेखरो द्रष्टव्यः। अस्माभिस्तु विस्तरभिया निरस्तमिति।

द्विरुच्यते। तेन एकाच्कधातूनामेवविषये दीर्घसन्वद्भावयोर्लाभः। न अनेकाचां धातूनामिति कार्य्यकालपक्षपातिमाधवस्य—मतमिति प्रथमफक्किकार्थः। अचीकमत—अचीकरत्—( कृ + णिच् + लुङ् )—अपीपचदित्याद्युदाहरणम्।

चकास्तीति—चकासृ दीप्ताविति धातुः। अर्थमाचष्टे—इति णिचि आपुगागमे 'अर्थापि' इति धातुः। ऊर्णुञ् आच्छादने इति च प्रकृतिः। तयाणामपि श्तिपा निर्द्देशः। आदिपदेन जागृ—निद्राक्षये इत्यादीनां ग्रहणम्। अयमर्थः—चकास्, अर्थ, ऊर्णु इत्यादिषु अङ्गं न द्विरुच्चार्य्यते किन्तु तेषां कश्चिदवयव एव अनेकाच्त्वादिति-भावः। तत्रानेकाचां हलादेः प्रथमावयवस्यएवअजादेस्तु द्वितीस्येवेति विवेकः। यथात्रैव —चकास् इत्यस्य—चकारमात्रस्यद्वित्वम् न तु चकास्रूपस्य कृत्स्नस्याङ्गस्य। अर्थापे रुर्णोतेश्च अजादित्वाद् द्वितीयावयवस्य थकारमात्रस्य 'णु' इत्यस्यैव ( सर्व्वत्राच् सहित-स्यैव वर्णस्य द्विरुक्तिरिति बोध्यम् ) द्वित्वमिति। अनयोर्लङि्चङि—आर्तथपत् और्णुनवत् इति च सिध्यतः। अथ कार्य्यकालपक्षं निगमयति—तस्मादिति। एकाचु—'एकाज्'-धातुषु' इदं द्वयम्—'सन्वद्भावः' 'दीर्घ' श्चेत्यर्थः—इति द्वितीयफक्किकार्थः।

स्यादेतत्। किन्तु यदि कार्य्यकालपक्षमेव समाश्रित्य अत्र समाधानं क्रियते तर्हि —दिदरिद्रासति, जिगणयिषति इत्यादिषु—का गतिः। तेषामनेकाच्कत्वाद् कृत्स्नस्याङ्गस्य द्विरुच्चारणासम्भवने—अभ्यासकार्य्य न स्यात्,—उक्तरीत्याहि कार्य्यकाल-पक्षाश्रयणे—एकाचु धातुष्वेव द्वित्वाभ्यासकार्य्यादिनियमात्—इत्याशङ्क्य समाधत्ते वस्तुत इति—

कार्य्यकालपक्षापेक्षया यथोद्देशपक्षस्यैव अभ्यर्हितत्वाद् वृत्त्यादिष्वभ्युपगमाच्चेति मन्तव्यम्। अङ्गस्येति—'सन्वल्लघुनि—' इति सूत्रे अस्माभिः ( भट्टोजिदीक्षितैः ) 'अङ्गस्य अवयवो योऽभ्यास' इति वर्णितमुक्तमिति यावत् न तु 'अङ्गस्य ये द्वे उच्चारणे तत्र योऽभ्यास' इत्यादि ( कार्य्यकालपक्षाश्रयणे—इयमेव व्याख्यानरीतिः )। तेन एकाचु अनेकाचु चोभयेष्वेव धातुषु—दीर्घसन्वद्भावौ निर्बाधं भवत इति दर्शयति ऊर्णाविति। ऊर्णौ—ऊर्णुधातौ ( केवलं ) दीर्घादेश एव भवेत् न सन्वद्भावः। अभ्यासे अकाराभावेन सन्वद्भावाभावात् 'सन्यत' इति इत्वस्य असम्भवात्। अर्था-

पयतौ णिजन्तार्थापिधातौ—तु 'इयं' सन्वद्भावः, दीर्घश्चेत्येतद्द्वयं 'स्यात्' भवेत् इति 'मन्महे' वयं मन्यामहे—इत्यस्माकं मतमिति यावत्। तथाच ऊर्णु इत्यस्य णिचि लुङि चङि—सन्वद्भावाभावात् केवलं दीर्घादेशेन और्णुनवत् इति भवति। अर्थ इत्यस्य—णिचि लुङि चङि तु—सन्वद्भावाद् दीर्घाच्च—आर्तीथपदिति। इति तृतीय—फक्किकार्थः।

अथ व्याख्याविकल्पाच्चकास्ते दीर्घ सन्वद्भावविकल्पौ भवत इति दर्शयति—

चकास्तावविति—णिजन्तस्य चकास्तेः—लुङि (चङि) तु व्यवस्थया व्याख्यापेक्षया इदम् उभयम् इमौ दीर्घसन्वद्भावौ न स्यात् न भवेत्, स्यात्—भवेच्च। तथा च 'सन्वल्लघुनि—' इत्यत्र 'चङ् परे णौ यल्लघु' इति प्रथमव्याख्याने 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इति न्यायात् (न्यायोऽयं—'पुगन्तलघूपधस्य च' (२१८९) इत्यत्र व्याख्यातम् इति तत्रैव द्रष्टव्यम्) 'अचचकासत्' इत्यत्र चङ्परस्य णेः चकास् इत्यनेकाज्व्यवधानात्—दीर्घ सन्वद्भावौ न भवतः (अचीकमत इत्यत्र तु एकाज्मात्राव्यवधानाद् भवतः); 'चङ्परे णौ यदङ्ग'मिति द्वितीयव्याख्याने तु (दीर्घसन्वद्भावेन) 'अचीचकासत्' इति भवति। 'चकास्' इत्यस्याङ्गसंज्ञकत्वेन तत्परतः एव णेः सत्त्वाद् व्यवधानाभावात् इति ज्ञेयम्। अथोत्तरार्द्धेन व्यवस्थामेव दर्शयति—णौविशेष्यमिति—णेरित्यस्य विशेष्यम् सन्निहितं (समीपवर्त्ति) 'लघुनि' इति—यद्वा अनुवृत्तिलभ्य' दूरवर्त्ति 'अङ्गमि'ति इत्यर्थः। तत्र प्रथमव्याख्याने 'णौ यल्लघु' इत्यनेन 'लघुनि' इत्यस्य विशेष्यत्वं फलितम्; द्वितीय व्याख्याने तु 'णौ यदङ्गम' इत्यनेन अङ्गस्यैव विशेष्यत्वमिति भावः। इति चतुर्थफक्किकार्थः।

ननु किमेवं द्वैविध्येन व्याख्यानं स्वकपोलकल्पितम् उतास्त्यत्र किञ्चिद् मानमित्याशङ्कयाह—इति व्याख्या विकल्पस्येति।

इति इत्थं केयटेनैव नत्वन्येन केनचिद् (एतेन एकं कैयटमतमन्यद् हरदत्तमतमिति व्याचक्षाणा उपेक्ष्या इति एवकारेण—गम्यते; तथाचास्माभिरपि सन्वल्लघुनि सूत्रे—कैयटग्रन्थ उद्धृतः) वर्णनात्—कथनात्—तमनुसृत्यास्माभिरपि तथैव व्याख्यातमिति वाक्यशेषः। ननु 'णि'रितीममावर्त्त्य 'णावग्लोपेऽसति' इत्युक्त्वा (सनवत् सूत्रे)

अग्लोपेऽपि तस्य सम्बन्धः साधितः। स च कथम् इत्यताह—णेरिति। अगिताम् अपि सिद्धये णेः अग्लोपे अपि—सम्बन्धः स्वीकृत इति वाक्यशेषोऽन्वयः। णेः णिचः अग्लोपे सत्यपि सम्बन्धः स्वीकृतः अन्यथा—कमिश्रकिपच्चिप्रभृतीनामगित्त्वमादाय—तेषां णिचि चङि दीर्घसन्वद्भावौ न भवेताम् इति भावः। इति पञ्चमफक्किकार्थः।

अथ क्राम्यन्ता इति क्रमु पादविक्षेपे इत्यन्ता इत्यर्थः। वकारादित्वादिति 'न शश-ददवादिगुणानाम्' (२२६२) इति निषेधादिति भावः। ओणाच्चकार इति इजादित्वादाम्। अर्थभेदादिति—एकत्र शब्दार्थकः अन्यत्र संभक्ताविति भेदः।

## २३१९। ये विभाषा ॥६।४।४३॥

**दी—। जनसनखनामात्त्वं वा स्यात् यादौ क्ङिति। सायात्—सन्यात्। 'अम ४६५ गत्यादिषु।' 'कन दीप्ति—कान्तिगति'—इत्यत्र गतेः परयोः शब्दसंभक्त्योरादिशब्देन संग्रहः। अमति। आम। 'द्रम ४६६ हम्म ४६७ मीमृ ४६८ गतौ'। द्रमति। दद्राम। 'ह्म्यन्त—' (२२९९) इति न वृद्धिः। अद्रमीत्। हम्मति। जहम्म। मीमति। मिमीम। अयं शब्दे च। 'चमु ४६९ छमु ४७० जमु ४७१ झमु ४७२ अदने'।**

The roots जन्, सन् and खन् optionally end in आ when a कित् or ङित् affix beginning with a यकार follows. Thus सायात् etc.—(आशीर्लिङ्) here the augment यासुट् is कित् by 'किदाशिषि' (2216). Similarly जायात्—जन्यात् and खायात्—खन्यात्। कन—दीप्ति कान्ति etc. अम गत्यादिषु—means 'to move' (गति) and also 'to sound' (शब्द) and 'to serve' (संभक्तौ) for the word आदि in गत्यादिषु implies 'शब्द' and संभक्तौ' which follow गति, read

in कन दीप्ति ( to shine ) कान्ति ( to wish ) गतिषु etc. द्रम is मान्त hence वृद्धि is prohibited by 'ह्मयन्त etc. ( 2299 ). चमु etc means 'to eat.'

मित—। 'जनसनखनां सन्झलोः' ( २५०४—६।४।४३ ) इत्यतो जनसन—खनामित्यनुवर्त्तते। तदाह—जनसनखनामिति। 'विड्वनोरनुनासिकस्यात्' (२९८२—६।४।४१ ) इत्यत आदिति ( आ ); अत आह आत्वमिति। वेति विभाषा—पदार्थः। 'अनुदात्तोपदेश—' ( २४२८—६।४।३७ ) इत्यतः 'क्ङिति' इति चानुवर्त्तते तच्च सूत्रस्थेन 'ये' इत्यनेन तदादिविधिमाश्रित्य विशेष्यते। तदाह—यादौ क्ङिति इति। 'ये' इत्यत्र अकार उच्चारणार्थः। य्—मात्रं तिष्ठति। सायात् इत्यादि—अत्र क्ङिदाशिषीति आशीर्लिङि यासुटः क्ङित्त्वात् प्राप्तिः। एवम् जायात्—जन्यात्, खायात्—खन्यात् इति। अम इति आदिश्वित्यादिपदद्वयाख्यार्थमाह—कनदीप्तिकान्तीत्यादि। 'शब्दे'शब्दणम्। वनशब्दे वनसन संभक्तौ इति हि तत्र पाठः। तेन आदिपदेन अमेः शब्दसंभक्तावप्यर्थौ भवतः इति। चमुअदने इत्यस्य रूपविधिं दर्शयति।

## २३२०। ष्ठिवुक्लमुचमां शिति ॥७।३।७५॥

### टी—। एषामचो दीर्घः स्याच्छिति।

### "आङि चम इति वक्तव्यम्" (वार्त्तिक)।

**आचामति। आङि किम् ? चमति। विचमति। अचमीत्। जिमिं केचित् पठन्ति। जेमति। क्रमु ४७३ पादविक्षेपे।**

The अच् of the roots ष्ठिवु ( ष्ठिव् ), क्लमु ( क्लम् ) and चमु ( चम् ) is lengthened when a शित् ( श—eliding ) affix comes after these. Thus चम् becomes चाम (and ष्ठिव becomes ष्ठीव and क्लम् becomes क्लाम् )—. 'It should be expressed that the अच् of चम is long only when it is preceded by the उपसर्ग आङ्' (आ) (Vartika)

Thus आचामति ; why say आङि—witness—चमति and विचमति without दीर्घ। अचमीत् (लुङ) by ह्म्यन्त etc (2299 ). क्रमु—'to step'—.

मित—। 'शिति' इति शकारेत्प्रत्यये शबादौ परे इत्यर्थः। दीर्घ इति 'शमामष्टानां दीर्घः' श्यनि' ( २५१९—७।३।७४ ) इत्यतोऽनुवर्त्तते। दीर्घ इत्यनेन च 'अचश्चे'त्यस्याः परिभाषाया उपस्थितिः। तदाह—'अच' इति। आङीति वार्त्तिकं वक्तव्यम्। अन्यत् स्पष्टम्। क्रमु ( क्रम् )—पादविक्षेपे इति—

## २२२१। वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ॥३।१।७०॥

### टी—। एभ्यः श्यन् वा स्यात् कर्त्रर्थे सार्व्वधातुके परे।

The विकरण श्यन् (of दिवादि class) is optionally attached to these roots ( भ्राश्, भ्लाश्, भ्रम्, क्रम्, क्लम्, त्रस्, त्रुट् and लष् ) when a सार्व्वधातुक affix follows in the कर्त्तृवाच्य।

मित—। भ्राशेत्यादि समाहारद्वन्द्वात् पञ्चम्यन्तम्। तदाह—एभ्य इति। 'दिवादिभ्यः श्यन्' ( २५०५—३।१।६९ ), 'कर्त्तरिशप्' ( २१६७—३।१।६८ ), 'सार्व्वधातुके यक्' ( २७५६—३।१।६१ ) इत्येतेभ्यः क्रमेण श्यन्निति, कर्त्तरीति, सार्व्वधातुके इति चानुवर्त्तते ; तदाह—श्यन् वेत्यादि। श्यन्निति शिद्भवति, यकार—मात्र' शिष्यते।

## २२२२। क्रमः परस्मैपदेषु ॥७।३।७६॥

### टी—। क्रमेर्दीर्घः स्यात् परस्मैपदपरे शिति। क्राम्यति। क्रामति। चक्राम। क्राम्यतु—क्रामतु।

( The penultimates of ) क्रम् become long, when a शित् ( श—eliding ) affix follows in the परस्मैपद। Thus—क्राम्यति—क्रामति ( optionally श्यन् and शप् ) but in the आत्मनेपद the form is क्रमते—विक्रमते etc. भ्राश and भ्लाश् mean to shine—भ्राश्यते—भ्राशते ;

भ्लाश्यते etc ; भ्रमु ( भ्रम् ) to wander भ्रम्यति—भ्रमति (in दिवादि—भ्राम्यति by 'शमामष्टानां दीर्घः—' ) चक्राम—by 'अत उपधायाः' ( 2282 ).

मित—। शमामष्टानां दीर्घः—' ( १५१९—७।३।७४ ) इत्यतो दीर्घ इति, ष्ठिवुक्लमुचमामित्यतः शितीति चानुवर्त्तते। अन्येषां तु भाश भ्लाश् दीप्तौ—भाश्यते—भाशते। भ्लाश्यते—भ्लाशते। भ्रमु चलने ( भ्वादि )—भ्रम्यति—भ्रमति। ( दिवादौ तु भ्राम्यति ); क्लमु ग्लानौ—क्लाम्यति—क्लामति। त्रसी उद्वेगे—त्रस्यति—त्रसति। त्रुटच्छेदने—त्रुट्यति—त्रोटति। लष कान्तौ कान्तिरिच्छा। लष्यति—लषति इत्युदाहरणानि। चक्राम इति अत उपधाया इति णलि वृद्धिः। क्राम्यतु इत्यादि स्पष्टम्।

## २२२३। स्नुक्रमोरनात्मनेपदनिमित्ते ॥७।२।३६॥

**टी—। अत्र वेट्। अक्रमीत्।**

**अथ रेवत्यन्ता अनुदात्तेतः। 'अय ४७४ वय ४७५ पय ४७६ मय ४७७ चय ४७८ तय ४७९ णय ४८० गतौ'। अयते।**

The roots स्नु and क्रम् get the augment इट् (in the कर्त्तृवाच्य only ) provided there is no निमित्त or cause of आत्मनेपद in them. Thus अक्रमीत्—अट् क्रम् इट् सिच् ईट् त्—अ क्रम् इस् ई त्—अक्रम् इ 0 ईत् ( prohibition of वृद्धि by 'ह्म्यन्त—etc' ( 2299 ) and सलोप by 'इट ईटि' )। अय to go अयते—

मित—। स्नुक्रमोः + अनात्मनेपदनिमित्ते इतिच्छेदः। स्नुश्च क्रम् च (द्वन्द्वः) तयोः। पञ्चम्यर्थे षष्ठी ; तेन स्नोः क्रमश्च परस्य सिच इट् इति लभ्यते। नागेशस्तु प्रथमार्थे षष्ठीत्याह। आत्मनेपदनिमित्तस्याभाव इति अनात्मनेपदनिमित्तम्—'अर्थाभावे अव्ययीभावेन सह नञ्तत्पुरुषो विकल्पते' इति वचनात् नञर्थेऽव्ययीभावः।

तेन 'अनात्मनेपदनिमित्ते' इति द्विवचनस्थाने व्यत्ययेनैकवचनम् अनात्मनेपदनिमित्तयोरित्यर्थः। केचित्तु'आत्मनेपदनिमित्ताभावे'इत्यर्थ' इत्याहुः। अर्थस्तूभयत्र समान एव। 'आर्द्धधातुकस्येड्वलादेः' (७।२।३५) इत्यत इडित्यनुवर्त्तते। तेनायं सूत्रार्थः—आत्मनेपदनिमित्तहीनात् (आत्मनेपदनिमित्ताभावे इति वा) स्नोः क्रमश्च परतो वलादेरार्द्धधातुकस्येडागमः स्यात् कर्तृवाच्ये नान्यत्रेति। कर्तृवाच्यनियमार्थमेवेदमित्याह—अत्रैवेडिति। अक्रमीत्—ह्म्यन्तक्षणेति वृद्ध्यभावः। 'इट ईटि' इतिसलोपः। स्नोस्तु अस्नावीत् इति ('सिचिवृद्धिः परस्मै—' इति वृद्धिः) अत्रैवेट् इति किम् भावकर्म्मलकारेषु मामूत् उपस्नोष्यते जलेन। इह भावे=उपक्रंस्यते। इदं कर्म्मणि। अत्रोभयत्रैवेडभावः। किञ्च 'स्नुक्रमोरुदात्तत्वेनेटि सिद्धे नियमार्थोऽयमित्याह अत्रैवेडि'ति तत्त्वबोधिनी। 'निमित्ते इति किम्। स्नौति इति स्नविता—स इवाचरति स्नवितीयते। इह क्यङ् एवात्मनेपदनिमित्तम् न तु स्नौतिरित्याहु'रिति च तत्रैव।

## २३२४। दयायासश्च ॥३।१।३७॥

**दी—। 'दय' 'अय' 'आस्' एभ्य आम् स्याल्लिटि। अयाञ्चक्रे। अयिता। अयिषीष्ट।**

The affix आम् is attached after the roots दय, अय and आस् in लिट्। Thus दयाञ्चक्रे etc. अयिता (लुट्); अयिषीष्ट (आशीर्लिङ्)।

मित—। 'कास्प्रत्ययादाममन्त्रे लिटि' (२३०९—३।१।३५) इत्यत आम् इत्यनुवर्त्तते। दयायासश्च समाहारद्वन्द्वात् पञ्चम्यन्तं, तदाह—एभ्य आम् स्यादिति। अन्यत् स्पष्टम्।

## २३२५। विभाषेटः ॥८।३।७९॥

**दी—। इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धो वा मूर्धन्यः स्यात्। अयिषीढम्—अयिषीध्वम्। आयिष्ट। आयिढम्—आयिध्वम्।**

The ध optionally becomes मूर्धन्य i. e becomes ढ, of षीध्वम्, लुङ् and लिट coming after the augment इट्, which again follows a root ending in इण् ( a प्रत्याहार containing the letters इउऋऌ etc. up to 'लण्' )। Thus अयिषीढ्वम्—अयिषीध्वम् ( अय + इट् + षीध्वम् ( आशी: ) । आयिष्ट—अय + लुङ् त = आट् + य् इट् सिच् ( ० ) त the त not being अपृक्त, there is no ईडागम by—अस्तिसिचोऽपृक्ते ) आयिढ्वम्—आयिध्वम् ( अय् + ध्वम् ( लुङ् ) as before ).

. मित—। विभाषा + इटः इतिच्छेदः। 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' २२४७—८।३।७८ ) इत्यनुवर्त्तते, 'अपदान्तस्य मूर्धन्य' इत्यतो मूर्धन्य इति च ; तदाह —इणः पर इति। इटः इति पञ्चमी तदाह 'य इट ततः परेषाम्' इति। अयिषीढ्वम्—अयिषिध्वम्—अय + आशीर्लिङ् ध्वम् इति स्थिते सीयुटि अय सीयुट् ध्वम् इति जाते लोपो व्योरिति यलोपे आर्द्धधातुकत्वेन सलोपाभावे, सीयुट इडागमे च अय् इ सी ध्वम् इति भवति ततो मूधन्यादेशे—अयिषीढ्वम् इति ; आयिष्ट् अय लुङ् त इति स्थिते आट्—इट्—सिचः। ततस्तकारस्य अपृक्तत्वाभावात् ईडभावे सलोपाभावस्ततो रूपम्। आयिढ्वम्—आयिध्वम्—अय + लुङ् ध्वम् इति स्थिते आट् = अय इट् सिच् ध्वम् इति जाते आय् इ स् ध्वम् इत्यस्य 'धि चेति सलोपे,' मूधन्यादेशे च आयिढ्वम् इति।

## २३२६ । उपसर्गस्यायतौ ॥८।२।१९॥

दी—। अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात्। प्लायते—पलायते। निस्दुसो रुत्वस्यासिद्धत्वान्न लत्वम्। निरयते। दुरयते। निर्दुरोस्तु निलयते। दुलयते। 'प्रत्ययः' इति ल्विणो रूपम्। अथ कथम् 'उदयति विततोर्द्ध्वरश्मिरज्जौ' इति माघः। 'इट किट कटी' इत्यत्र प्रश्लिष्टस्य एर्भविष्यति।

यद्वा "अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्" ( परि—९७ ); चक्षिङो ङित्करणाज् ज्ञापकात्। वादित्वाद्—ववये। पेये। मेये। चेये। तेये। प्रणयते। नेये। 'दय ४८१ दानगतिरक्षणहिंसादानेषु। आदानं ग्रहणम्। दयाञ्चक्रे। 'रय ४८२ गतौ'। 'ऊयी ४८३ तन्तुसन्ताने। ऊयाञ्चक्रे। 'पूयी ४८४ विशरणे दुर्गन्धे च'। पूयते। पुपूये। 'क्नूयी ४८५ शब्दे उन्दने च'। चुक्नूये। 'क्ष्मायी विधूनने। चक्ष्माये। 'स्फायी ४८७ ओप्यायी ४८८ वृद्धौ'। स्फायते। पस्फाये। प्यायते।

ल is substituted for the रेफ or र् of an उपसर्ग which is followed by अयति i. e. the root अय्। Thus प्र+अयते=प्ल+अयते=प्लायते and परा+अयते=पला अयते=पलायते। But निस्+अयते and दुस्+अयते give निरयते and दुरयते without the substitution of ल for the रेफ or र्, because the रुत्व i. e. the र् of निस दुस् is असिद्ध ( as not having existed ) by the rule 'पूर्वत्रासिद्धम्' ( Note the situation of the rules उपसर्गस्यायतौ ( 8. 2. 19 ) and ससजुषो रुः (8. 2. 66 )—where the latter is subsequent hence it is असिद्ध or invalid towards what is enjoined by the former). But निर् and दुर prefixed to अयते gives निलयते and दुलयते for their र् is not the result of रुत्व। The word 'प्रत्यय' is not changed into प्लत्ययः for there is no अय following प्रति ( प्रति—इ+अच् )। Now, if the root अय् is आत्मनेपदी then how to defend उदयति ( उत्+अय्+शतृ+७मी ) used by माघ in 'उदयति

वितत—' etc ( for to speak truely it would have been उदयमाने ) ? ( The answer is ) Do not explain it as उद् + अय etc, but derive as उद् इ etc and this is obtained from disjoining किटी ( किटि + इ + ई ) see under ह्मान्तक्षण etc ( 2299 ) ; or—It is correct by the परिभाषा—'The आत्मनेपद due to the elision of अनुदात्त ( by 'अनुदात्तङ्गित आत्मनेपदम् ) is अनित्य, not persisting i. e. optional.'. And this is inferred on the strength of ङित्करण of the root चक्षिङ् which had it been read as 'चक्षि' ( without 'ङ' ), would have been आत्मनेपद on account of the elision of its 'इ' ( चक्षि—चक्ष् इ ) which is अनुदात्त and elides and thus is a sign of आत्मनेपद by the rule अनुदात्तङ्गित—' । वादित्वात् —the root वय् being begun with व at the beginning there is no 'एत्वाभ्यासलोप' by the prohibition 'न शशददवादिगुणानाम् (2263). Thus it does not give 'वेये' as पय which gives पेये not being वादि । प्रणयते—प्र + णयते । पूयी to burst and to discharge foul smell.' The 'ई' at the end of these roots indicate optional इट् by 'श्वीदितो निष्ठायाम्' and the 'ओ' of ओप्यायी indicates णत्व in निष्ठा by 'ओदितश्च' । प्यायते :—

मित— । उपसर्गस्य + अयतौ इतिच्छेदः । अयताविति श्तिपा निर्दिष्टस्यायतेः सप्तम्यपि—'उपसर्गस्य' इत्यस्य पारार्थ्येन विशेषणम् इत्याह—अयतिपरस्येपि । 'यो रेफ' इति—'कृपोरोलः' ( २३५०—८।२।१८ ) इत्यतोऽनुवृत्त रिति भावः । प्लायते—प्र + अयते । पलायते—परा + अयते । निस्दुसोरिति । निसः दुसश्चेत्यर्थः । असिद्धत्वात्—'पूर्व्वत्रासिद्धम्' ( १२—८।२।१ ) इत्यनेनेति यावत् । तथाच 'ससजुषो रुः' ( १६२—८।२।६६ ) इति सूत्रम्—एतत्सूत्रापेक्षया परमेवेति । उदाहरति निरयते इत्यादि । निर्दुरोस्त्विति—नेदं रुत्वं सकारफलं तेनासिद्धत्वाभावा

दनेन खत्वम्। 'प्रत्यय इतीति—प्रति—इ+अच् इति इण्धातोरेवाच्, प्रत्ययेन तत्-सिद्धेः न तु अयतेरितिभावः—'अनभिधानादिति' कैयटः। अथ अनुदात्तेत्त्वलक्षणतया अयधातोरात्मनेपदित्वात् पृच्छति—अथ कथमिति। उद्—अय+शतृ+७मी १वचन इति उदपूर्व्वस्य शवन्तस्य चायतेः सप्तम्यन्तं मत्वा प्रश्नः। समाधत्ते—इट किट किटीति। तत्र इ ई इति रूपाणामेव मते प्रश्लेषेण पाठः कृतः ('स्नन्तक्षण्श्वस्जागृ—' (२२९९) इत्यत्र द्रष्टव्यम्)। पचान्तरेणैतत् समाधीयते यद्देति। अनुदात्तेत्त्वेति—परिभाषेयम्—'अनुदात्तलोपप्रयुक्तं यत्रात्मनेपदं विहितं तन्न सार्व्वत्रिकमिति' तदर्थः। तत्र लिङ्गं दर्शयति—चक्षिङ इति। 'चक्षिङ्' इत्यनुक्त्वा यदि 'चक्षि' इत्येव पठ्येत तर्हि अनुदात्तस्य इकारस्य लोपेनैव 'अनुदात्तङित—' (२१५७) इत्यनेनात्मनेपदसिद्धि-र्भवेत्। किन्तु तथापि यत् ङकारानुबन्धः क्रियते तेनेदं ज्ञायते यत्—अनुदात्तलोप-प्रयुक्तमात्मनेपदं न सर्व्वत्रेति। तेनापि 'उदयति' इति सिध्यतीति निष्कर्षः। शब्देन्दु-शेखरे तु 'इदं (अनुदात्तेत्त्वेतिवचनम्) भाष्ये—न दृश्यते' इत्युक्तम्। वादित्वादिति—'न शसदद—' (२२६३) इति निषेधात्—एत्वाभ्यासलोपौ नेत्यर्थः। पेये (पय+लिट् ए) वकारादित्वाभावात् प्राप्तिः। प्रणयते (प्र+णय+ते) उपसर्गादसमासे-ऽपीति—णत्वम्। नेये (णय+लिट् ए) 'णो नः' इति णत्वम्। 'ऊय' इत्यादीनाम् ईदित्करणम् 'श्वीदितो निष्ठायाम्' इति इड्विकल्पार्थम्। ओप्यायी (प्याय) इति ओदित्करणं 'ओदितश्च' इति निष्ठानत्वार्थं तेन 'पीन' इत्यादिसिद्धिः। अथ प्याय+लिट् ए (लिटः तझयोरेशिरेच्') इति स्थिते—

## २३२७। लिड्यङोश्च ॥६।१।२९॥

**दी—। लिटि यङि च प्यायः पीभावः स्यात्। पुनः प्रसङ्गविज्ञानात्—पीशब्दस्य द्वित्वम्। 'एरनेकाचः—'(२७२) इति यन्। पिप्ये। पिप्याते। पिप्यिरे।**

'The root 'प्याय्' is replaced by 'पी' in लिट and यङ्। Now there are two rules ('एकाचो द्वे प्रथमस्य' and 'लिड्यङोः') to act upon

प्याय्। By the परिभाषा—'विप्रतिषेधे परं कार्य्यम्', the latter supersedes the former. But if the former ( एकाचो— ) is invalidated then how the reduplication is to be effected? For there is another परिभाषा—namely—'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव'—'When ( two rules ), while they apply ( simultaneously ), actually prohibit each other, that ( rule of the two ) which is once superseded ( by the other ), is superseded altogether ( and cannot therefore apply again after the latter rule has taken effect),—Kielhorn. Thus as the rule 'प्याय: पी' has taken effect, the former 'एकाचो—' should not apply again ( बाधितत्वात् ); under the circumstances, Bhattoji says that according to the परिभाषा 'पुन: प्रसङ्गविज्ञानात् सिद्धम्,' the word 'पी' will be reduplicated. This परिभाषा means—'( occasionally the formation of a particular form ) is accounted for ( सिद्धम् ) by the fact that ( a preceding rule ) is allowed to apply again, ( after it had been superseded by a subsequent rule.—' Kielhorn. Thus though the preceding rule 'एकाचो—' is overruled by the subsequent rule 'लिड्यङो:' yet it ( 'एकाचो—' ) applies again and so पी is doubled and we get पिप्ये—पी पी ए = पि पी ए ( 'ह्रस्व: ) = पि प्य् ए ( by 'एरनेकाच:—' ( २७२ ) )।

मित—। लिड्यङो: + च इतिच्छेद:। लिड्यङोरिति सप्तम्यन्तम् तदाह—लिटि यङि चेति। प्याय: पीङाव इति 'प्याय: पी' ( २०७२—६।१।२८ ) इति पूर्व्वसूत्रात्। पुन:प्रसङ्गविज्ञानादिति। अयमत्र निष्कर्ष:—'एकाचो द्वे प्रथमस्ये'ति ( ६।१।१ ) द्वित्वविधायकं पूर्व्वसूत्रम् 'लिड्यङो:' इति च ( ६।१।२९ ) पीभावविधायकं परसूत्रम्। तत्र विप्रतिषेधे परं कार्य्यमिति—नियमेन परेण पीभाव: क्रियते

'एकाच—' इति च बाध्यते। एवं चास्य बाधितत्वाद् अत्र पीशब्दस्य द्वित्वं न सम्भवति। बाधितस्य पुनरुत्थानासम्भवात्। उक्तं हि—'सकृद्गतौ विप्रतिषेधे—यद् बाधितं तद् बाधितमेवे'ति ( परिभाषेयम्—यदा द्वयोः सूत्रयोः तुल्यबलयोः क्वचित् युगपत्प्राप्तिर्भवति तदा एकेन इतरस्य—बाधे सति बाधितस्य (तस्य) चिराय बाधितत्वमेव भवति इति च तदर्थः। बाधितत्वात्र एकाच इति लिङ्यङोरित्यनेन द्वत्वं न )। एवं प्राप्ते आह—'पुनःप्रसङ्गविज्ञानात् पीशब्दस्य द्वित्वमिति। परिभाषेयम्—पुनःप्रसङ्ग-विज्ञानात् सिद्धम्' इति। विप्रतिषेधेन यद् बाधितं तस्य पुनरपि क्वचित् प्रवृत्तिर्भवति—इति च तदर्थः। तेन 'एकाच—' इत्यस्य पुनःप्रवृत्त्या पीशब्दस्य द्वित्वं भवति इति भावः। एवं पी पी ए इति स्थिते अभ्यासह्रस्वादेशे पि पी ए इति जाते 'एरनेकाच इति यणादेशे—पिप्ये इति सिध्यति। यङि तु पेपीयते इति। अन्यत्—स्पष्टम्। अथ प्यायी लुङि विशेषमाह—

## २३२८। दीप-जन-बुध-पूरि-तायि-प्यायिभ्योऽन्यतरस्याम् ॥३।१।६१॥

### दी—। एभ्यश्च्लेश्चिण् वा स्यादेकवचने तशब्दे परे।

The affix च्लि, coming after these roots ( दीप्, जन, बुध, पूर, ताय and प्याय् ) is optionally replaced by the affix चिण् ( इ ) when the affix त ( 3rd. person आत्मनेपदी sing. ) follows.

मित—। दीपजनेति—द्वन्द्वात्—पञ्चम्यन्तम्। तदाह—एभ्य इति। 'च्लेः सिच्'—( २२२२—३।१।४४ ) इत्यतस्मादिति 'चिण् ते पद'( २४१३—३।१।६० ) इत्यतश्चिण् इति ते इति चानुवर्त्तते।' अन्यतरस्यामिति विकल्पार्थकस्तदाह—चिण्-वेत्यादि—वृत्तौ एकवचने इतिःस्पष्टार्थम्। दीप दीप्तौ, जनी प्रादुर्भावे, बध अवगमने, पूरी आप्यायने। तायृ सन्ताने इति धातवः।

## २३२९। चिणो लुक् ॥६।४।१०४॥

दौ। चिणः परस्य तशब्दस्य लुक् स्यात्। अप्यायि—अप्यायिष्ट। 'तायृ ४८९ सन्तानपालनयोः'। सन्तानः प्रबन्धः। तायते। तताये। अतायि—अतायिष्ट। 'शल ४९० चलनसंवरणयोः'। 'वल ४९१ वल्ल ४९२ संवरणे सञ्चरणे च'। ववले। ववल्ले। 'मल ४९३ मल्ल ४९४ धारणे'। भल ४९५ भल्ल ४९६ परिभाषणहिंसादानेषु'। बभले। बभल्ले। कल ४९७ शब्दसंख्यानयोः'। कलते। चकले। 'कल्ल ४९८ अव्यक्ते शब्दे'। कल्लते। 'अशब्दे' इति स्वामी। अशब्द-स्तूष्णीम्भाव इति च। 'तेवृ ४९९ देवृ ५०० देवने'। तितेवे। दिदेवे। 'षेवृ ५०१ गेवृ ५०२ ग्लेवृ ५०३ पेवृ ५०४ मेवृ ५०५ म्लेवृ ५०६ सेवने'। 'परिनिविभ्यः—(२२७५) इति षत्वम्। परिषेवते। सिषेवे। अयं सोपदेशोऽपीति न्यासकारादयः। तद्भाष्यविरुद्धम्। गेवते। जिगेवे। जिग्लेवे। पिपेवे। मेवते। म्लेवते। 'शेवृ' 'खेवृ' 'क्लेवृ' इत्यप्येके। 'रेवृ ५०७ प्लवगतौ'। प्लवगतिः प्लुतगतिः। रेवते।

अथावत्यन्ताः परस्मैपदिनः। 'मव्य ५०८ बन्धने'। ममव्य। सूर्क्ष्य ५०९ ईर्क्ष्य ५१० ईर्ष्य ५११ ईर्ष्यार्थाः। 'हय ५१२ गतौ'। अहयीत्। यान्तत्वान्न वृद्धिः। 'शुच्य ५१३ अभि-षवे'। अवयवानां शिथिलीकरणं सुरायाः सन्धानं वाभिषवः। स्नानं च। शुशुच्य। 'चुच्य' इत्येके। 'हर्य ५१४ गति-कान्त्योः'। जहर्य। 'अल ५१५ भूषणपर्याप्तिवारणेषु'। अलति। आल।

The word or ( affix ) त elides when it comes after the affix चिण्—( इ )। Thus प्याय्+लुङ् त=अट् प्याय—च्लि त=अ प्याय चिण् ०=अप्याय्—इ=अप्यायि। अप्यायिष्ट—is formed when च्लि is replaced by सिच। Thus अट् प्याय् इट् सिच् त—अप्याय् इस् त। तायृ—means सन्तान and पालन—of which सन्तान means to multiply or increase ( and पालन to protect ). अप्यायि etc, like अतायि etc. अयम्—i.e. षेवृ—( सेव् )। न्यासकारादय: i. e. जिनेन्द्रबुद्धि and others. But that is against भाष्य—for षेवृ is not read as सोपदेश there.

अथावत्यन्ता: etc.—i.e. ending is अव ( 600 ). रक्षणे। यान्तत्वात्—i.e. ह्रय do not get वृद्धि: owing to the prohibition by 'ह्म्यन्तक्षण etc, ( 2299 ) and it ends in य। शुच्य अभिषवे—अभिषव means 'to render inactive' and to distil and also 'to bathe'। अल means to dress, to suffice and to forbid.' अल् :—

मित—। चिण: इति पञ्चम्यन्तम् तदाह—चिणः परस्येति। तशब्दे परे चिणो विधानात् 'चिण:' इत्यनेन तशब्द आक्षिप्यते तदाह—तशब्दस्येति। अप्यायीति—चिणि इडभावात् तशब्द—लोपाभावे दं सिद्धम्। पचे सिचि इडागमे इडभावात् सलोपाभावे च अप्यायिष्ट इति। प्रबन्धो विस्तार:। अतायि—इत्यादि अप्यायि इत्यादिवत्। अयमिति षेवृ इति धातु:। न्यासकारादयोजिनेन्द्रबुद्ध्यादयः। भाष्यविरुद्ध-मिति। 'यदि सोपदेश: स्यात् तदा स्यायतिरिव अयमपि—षोपदेशलक्षणे पर्युदास्येत तदकरणान्नास्ति सोपदेश इति—'तत्त्ववो—'।

अथावत्यन्ता इति—अव ( ६०० ) रक्षणे—इत्यन्ता इत्यर्थ:। यान्तत्वादिति—ह्म्यन्तक्षणेति ( २२९९ ) निषेधादित्यर्थः। हर्य इति—कान्तिरिच्छा। अस्मादेव हर्यते काम्यते इति हिरण्यम् इति 'हर्यते: कन्यन् हिर् चे'ति उणादिसूत्रात्। अलेति वारणं निषेध:। अथास्य सिचि वृद्धिं विधास्यन्नाह :—

२२३०। अतो ल्रान्तस्य ॥७।२।२॥

दी—।' 'लृ' इति लुप्तषष्ठीकम्। अतः समीपौ यौ लौ तदन्तस्याङ्गस्यातो वृद्धिः स्यात् परस्मैपदपरे सिचि। 'नेटि' (२२६८) इति निषेधस्य 'अतो हलादेः—' (२२८४) इति विकल्पस्य चापवादः। मा भवान् आलीत्। अयं स्वरितेदित्येके। तन्मते अलत इत्याद्यपि। 'ञि फला ५१६ विशरणे'। 'तृफल—' (२३०१) इत्येत्त्वम्। फेलतुः। फेलुः। अफालीत्। 'मील ५१७ श्मील ५१८ स्मील ५१९ क्ष्मील ५२० निमेषणे'। निमेषणं सङ्कोचः। द्वितीयस्तालव्यादिः। तृतीयो दन्त्यादिः। 'पील ५२१ प्रतिष्टम्भे'। प्रतिष्टम्भो रोधनम्। 'णील ५२२ वर्णे।' निनील। 'शील ५२३ समाधौ।' शीलति। 'कील ५२४ बन्धने'। 'कूल ५२५ आवरणे। 'शूल ५२६ रुजायां सङ्घोषे च'। 'तूल ५२७ निष्कर्षे'। निष्कर्षो निष्कोषणम्। तच्चान्तर्गतस्य बहिर्निस्सारणम्। तुतूल। 'पूल ५२८ सङ्घाते।' 'मूल ५२९ प्रतिष्ठायाम्'। 'फल ५३० निष्पत्तौ'। फेलतुः। फेलुः। 'चुल्ल ५३१ भावकरणे'। भावकरणमभिप्रायाविष्कारः। 'फल्ल ५३२ विकसने'। चिल्ल ५३३ शैथिल्ये—भावकरणे च। 'तिल ५३४ गतौ'। तेलति। 'तिल्ल' इत्येके। तिल्लति। 'वेलृ ५३५ चेलृ ५३६ केलृ ५३७ खेलृ ५३८ क्ष्वेलृ ५३९ वेल्ल ५४० चलने'। पञ्च ऋदितः। षष्ठो लोपधः। पेलृ ५४१ फेलृ ५४२ शेलृ ५४३ गतौ'। 'षेलृ' इत्येके। स्खल ५४४ सञ्चलने'। चस्खाल। अस्खालीत्। 'खल ५४५ सञ्चये'। 'गल ५४६ अदने'। गलति। अगालीत्। 'षल ५४७ गतौ'।

सलति। 'दल ५४८ विशरणे'। 'श्वल ५४९ श्वल्ल ५५० आशुगमने'। शश्वाल। अश्वालीत्। शश्वल्ल। अश्वल्लीत्। 'खोलृ ५५१ खोर्ऋ ५५२ गतिप्रतिघाते'। खोलति। खोरति। 'धोर्ऋ ५५३ गतिचातुर्य्ये'। धोरति। 'त्सर ५५४ छद्मगतौ'। तत्सार। अत्सारीत्। 'क्मर ५५५ ह्वर्च्छने'। चक्मार। 'अभ्र ५५६ वभ्र ५५७ मभ्र ५५८ चर ५५९ गत्यर्थाः'। चरतिर्भक्षणेऽपि। अभ्रति। आनभ्र। मा भवान् अभ्रीत्। अङ्गान्त्यरेफस्यातः समीपत्वाभावान्न वृद्धिः। 'ष्ठिवु ५६० निरसने'। 'ष्ठिवुक्लमु—' (२३२०) इति दीर्घः। ष्ठीवति। अस्य द्वितीयो वर्णष्ठकारोऽवेति वृत्तिः। तिष्ठेव। तिष्ठिवतुः। तिष्ठिवुः। टिष्ठेव। टिष्ठिवतुः। ठिष्ठवुः। 'हलि च—' '(३५४) इति दीर्घः। ष्ठीव्यात्। 'जि ५६१ जये'। अयमजन्तेषु पठितुं युक्तः। जयः उत्कर्षप्राप्तिः। अकर्म्मकोऽयम्। जयति।

The word 'ल्र' ( in the rule ) is an instance of लुप्तषष्ठी i.e. is elliptical for ' 'ल्र्स्य' । The sense is—The वृद्धि substitute is directed to the short अ of an अङ्ग ( verbal stem ) which ends in ल् or र् provided this ल and र are very closely connected to ( or are invariably present after ) the short—अ। This rule supersedes the prohibition ( of वृद्धि ) taught in the rule 'नेटि' ( २२६४ ) and and the optional presence of वृद्धि taught in the rule 'अतो हलादेः—' ( २२८४ ) । Thus 'मा भवान् आलीत्' 'you should not dress yourself etc. Here the word 'मा' ( माङ् ) has been introduced to make

the वृद्धि obvious to the view ; otherwise the augment आट् being joined to आलीत् ( अल्+इट्+सिच्+ईट+त् ) it would not have clearly been known whether it ( आलीत् ) is the result of सन्धि or वृद्धि ; for the form is the same in both the cases. अयम् etc.—Some say that अल is स्वरितेत् or स्वरित—pitch-eliding. In that case अल would also give अलते etc by the rule 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' ( 2158 ). ञि फला, ञि for 'ञीतः क्तः' ( 3088) and आ for 'आदितश्च' ( 3036 ). अफालीत् ( सिच् ) by this rule. ष्वल ष्वल्ल—'to march quick'. अष्वालीत् ( लुङ् ) by this rule. अष्वल्लीत्—want of वृद्धि by the explanation 'अतः समीपौ' । मा भवान् अभ्रीत्—here the रेफ ( र् ) being not closely connected with the अ of अभ्र i.e. being intervened by भ in the middle, there is no वृद्धि of the short अ by this rule. ञि to win. :—

मित—। लुप्तषष्ठीकम् इति । लुप्ताषष्ठी ( विभक्तिः ) यस्य तत् इति विग्रहः । 'ल्रस्य' इत्यनुक्त्वा 'ल्र' इत्युक्तम् इत्यर्थः । ल् च रश्च इति समाहारद्वन्द्वान्लस्य—अन्तशब्देन वहुव्रीहिसमासात् षष्ठ्यां 'ल्रान्तस्ये'ति । लुप्तषष्ठीकत्वमेव विशदयति, परस्मैपदेषु—( २२९७—७।२।१ ) इत्यतोऽनुवृत्तेरित्यर्थः । मा भवान् आलीत् इति । अत माङ्ग्रहणपुरःसरमुदाहरणम् आडभावेन अलतेरकारस्य वृद्धिः स्पष्टप्रतिपत्त्यर्थमिति बोध्यम् । आडागमेऽपि हि संहितया आलीदिति भवेत् । अतः समीपौ किम्—आखोरीत् अमीलीत् । अतएव सूत्रे 'ल्रान्तस्येति' अन्तग्रहणं कृतम् । अन्यथा तदन्तविधिनैव तत्सिद्धे अन्तग्रहणं व्यर्थं स्यात्—इति सामीप्यार्थे व्याख्यातम् । ल्रान्तस्य किम्—मा भवान् अतीत् । अत सातत्यगमने—इति धातुः । अयं स्वरितेदिति—तेन तेषां मते—'स्वरित ञित—' इति विकल्पेन अलते इत्यादि भवति । अफालीत्—अनेन सूत्रेण वृद्धिः । ञिफला इत्यत्र ञित्करणम् 'ञीतः क्तः' इति निष्ठार्थम् । आत्करणञ्च 'आदितश्चे'ति' इट्—निषेधार्थम् । शील इति । अयं चुरादिरप्यस्ति—'शीलय

नीलनिचोलम्' इति जयदेवः। श्वल श्वल्लति—अश्वालीत् अनेन वृद्धिः। अश्वल्लीत्—अतः समीप—त्वाभावात् वृद्ध्यभावः। त्सर इति। तत्सार हलादिः शेषः। अत्सारीत्—अत्र रकारस्य—अतः समीपत्वाद् अनेन वृद्धिः। मा भवान् अभ्रीत् इति—अत्र वृद्ध्यभावं स्पष्टयति—अङ्गान्त्यरफस्येति। भकारेण व्यवधानादित्यर्थः। जि इति अयमजन्तेष्विति—इकारान्तत्वात्। जि + लिट् णल इति स्थिते—

## २३३१। सन्लिटोर्जेः ॥७।३।५७॥

टी—। जयतेः सन्लिन्निमित्तो योऽभ्यासस्ततः परस्य कुत्वं स्यात्। जिगाय। जिग्यतुः। जिग्युः। जिगयिथ—जिगेथ। जिगाय—जिगय। जिग्यिव। जिग्यिम। जेता। जीयात्। अजैषीत्। 'जीव ५६२ प्राणधारणे'। जिजीव। 'पीव ५६३ मीव ५६४ तीव ५६५ णीव ५६६ स्थौल्ये'। पिपीव। मिमीव। तितीव। निनीव। 'क्षीवु ५६७ क्षेवु ५६८ निरसने'। उर्वी ५६९ तुर्वी ५७० थुर्वी ५७१ दुर्वी ५७२ धुर्वी ५७३ हिंसार्थाः'। ऊर्वाञ्चकार। 'उपधायां च' (२२६५) इति दीर्घः। तुतूर्व। 'गुर्वी ५७४ उद्यमने'। गूर्वति। जुगूर्व। 'मुर्वी ५७५ बन्धने'। 'पूर्व ५७६ पर्व ५७७ मर्व ५७८ पूरणे'। 'चर्व ५७९ अदने'। 'भर्व ५८० हिंसायाम्'। 'कर्व ५८१ खर्व ५८२ गर्व ५८३ दर्पे'। 'अर्व ५८४ शर्व ५८५ षर्व ५८६ हिंसायाम्'। आनर्व। शर्वति। सर्वति। 'इवि ५८७ व्याप्तौ'। इन्वति। इन्वांचकार। 'पिवि ५८८ मिवि ५८९ णिवि ५९० सेचने'। तृतीयो मूर्द्धन्योष्मादिरित्येके। 'सेचने' इति तरङ्गिण्याम्। पिन्वति।

पिपिन्व । हिवि ५९१ दिवि ५९२ धिवि न०३ जिवि ५९४ प्रीणनार्थाः' । हिन्वति । दिन्वति ।

कुत्व is enjoined to जयति i.e. the ज of the root जि is replaced by ग, when it (जि) comes after the अभ्यास, effected or caused by the affix सन् or लिट् । Thus जि+णल=जि जि अ 'अचो ञ्णिति' ( 254 )=जि गै अ=जिगाय । जि जि अतुस्=जि गि अतुस् etc ( no guna due to कित्त्व of अतुस् by 'असंयोगात्' 2242) जिगयिथ—जिगेथ —the augment इट् is optional here by the saying 'अजन्तोऽकारवान्वा यस्तास्यनिट् थलिवेडयम्' । जिगाय जिगय—('णलुत्तमोवा') (under 'ऋतो—'2296) जिग्यिव जिग्यिम ( इट by 'क्राद्यन्यो लिटि सेड्भवेत्' and यण् by एरनेकाचः (272). जेता—( 'तासनिट्' ) । जीयात् ( आशीर्लिङ्—अकृत्सार्व—(2298). अजैषीत्—( सिचिवृद्धिः— ) । हिवि ( हिन्व् )'इदितो नुम धातोः'—हिनुति :—

मित— । सन्लिटोः+जेरितिच्छेदः । सन्लिटोरिति निमित्तसप्तमी, नतु पर—सप्तमी अभ्यासविशेषणम्—तदाह—सन् लिट्निमित्तो योऽभ्यास इति । 'अभ्यासाच्च' ( ३४२०—७।३।५५ ) इत्यतोऽभ्यासादिति पञ्चम्यन्तमभ्यासपदमनुवर्त्तते । कुत्वमिति—'चजोः कुघिण्यतोः' ( २८६३—७।३।५२ ) इत्यतः कुत्वञ्चानुवर्त्तते । 'सन् लिट्-निमित्तो योऽभ्यास' इत्येतन्माधवमतम् । 'सनिलिटि च परे योऽभ्यास' इति परसप्तम्या-श्रयणपुरःसरं प्राचां व्याख्यानं नादृतम् । जयतेर्यङ्लुगन्तात् सनि 'जेजायिषति' इत्यत्र कुत्वप्रसङ्गात् इति बोध्यम् । जिगाय—जि जि णल्=जि जै अ=जि गै अ ( अचो ञ्णिति इति वृद्धिः—तत आयादेशः ) । जिग्यतुः—असंयोगादिति कित्वाद् गुणाभावः । जिगयिथेति 'एकाच उपदेशे—' इति बाधित्वा भारद्वाजनियमाद् इड् विकल्पः । जिगाय—जिगय—'णलुत्तमोवा' इति णिद्विकल्पाद् वृद्धिविकल्पः । जिग्यिवेति—क्रादिनियमादिट् । 'एरनेकाच' ( २७२ ) इति यण् । जेता—अनिट्—कत्वात् तासाविडभावः । जीयात्—आशीर्लिङि—'अकृत्—' ( २२९८ ) इति दीर्घः ।

अजैषीत्—सिचिवृद्धिः—( २२६७ ) इति वृद्धिः। लृटि जेष्यति लृङि अजैष्यत् इति। हिन्वति इत्यादौ नुमि रूपम्। अथ धिवेर्विशेषविधिमाह—

२३३२। धिन्विकृण्व्योर च ॥३।१।८०॥

टी—। अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च शब्विषये। 'अतो लोपः' ( २३०८ )। तस्य स्थानिवद्भावाद् लघूपधगुणो न। उ-प्रत्ययस्य पित्सु गुणः। धिनोति। धिनुतः। धिन्वति।

अकार is the final substitute of धिन्व and कृण्व i. e. the final letter व of धिन्व and कृण्व is replaced by अ and the affix उ is attached to them in connection with शप्। Thus धिन्व and कृण्व become धिन and कृण। Then comes उप्रत्यय। And this उप्रत्यय is आर्द्धधातुक by 'आर्द्धधातुकं शेषः'। Thus the rule 'अतो लोपः' ( 2308—6. 4. 48 ) comes in. Then by अल्लोप धिन becomes धिन्। Now appears the rule 'पुगन्तलघूपधस्यच' ( 2189—7. 3. 86 ) to take effect upon it. But it is counteracted by the स्थानिवद्भाव of अल्लोप i. e. though the affix अ has disappeared by 'अतो लोपं' yet it is to be treated as present (अकारवदेव विभाव्यम्)। Thus the इ of धि ceases to be the penultimate, for the root is धिन in reality, and not धिन्; so there is no लघूपधगुणः। See also our notes under धिनोति in Kirat 1. sl. 22. (Here you cannot rejoin that अल्लोप is not to be takan as स्थानिवत् by the rule स्थानिवदादेशोऽनल्विधौ ( ४९—१।१।५६ ) as in the case of a single letter ( अल्मवम् ) अ; for अ is not a letter, originally connected with the root. Thus

अल्लोप here is an अजादेश and ceases to be an अल्विधि। It is for this reason that Panini has stated as 'धिन्विकृण्व्योरच' and has not said धिन्विकृण्व्योर्लोपश्च, in which case it would be open to the above objection). Now the affix उ attaches itself to धिन giving धिनु by 'अतो गुणे' (191—6. 1. 97). This उ is gunnated where the affix after it drop its प् (as तिप्, सिप् मिप् etc.). Thus धिनोति धिनोषि etc. धिनुतः (for तस् is not पित्) (Cp. 'सार्व्व—' २२३४)। धिन्वन्ति—(by इकोयणचि (48). (शब्विषये is to be taken as—in place of शप्)। धिनु + वस्:—

मित—। धिन्विकृण्व्योः + अ च इतिच्छेदः। धिन्व् कृण्व् इत्यनयोरिका निर्द्दिष्टयोः कृतद्वन्द्वसमासयोः षष्ठीद्विवचनम्। तदाह—अनयोरकार इति। अन्तादेशः अलोऽन्त्यस्य इत्यनेन वकारमात्रस्यैव भवति। 'तनादिकृञ्भ्य उः' (७।१।६९) इत्यत उरिति अनुवर्त्तते। 'कर्त्तरि कृत्—' 'सार्व्वधातुके यक्' इति च। ततः सार्व्वधातुकपदं शवर्थे परिणमयन्नाह—शब्विषये सति यत्र शप् भवति तत्र इत्यर्थः; शपः स्थाने इति निष्कर्षः। एतेन धिन्व इत्यस्य वस्थले अकारे आदिष्टे धिन इति जाते उप्रत्ययेन च धिन उ इति स्थिते आह—अतो लोप इति। 'आर्द्धधातुकं शेष' इत्यनेन उप्रत्ययस्य आर्द्धधातुकत्वम्। उप्रत्ययश्च आर्द्धधातुकान्तरं परतस्तिष्ठति। तेन अतो लोप इत्यनेन धिन् उ इति स्थिते धिनोतेर्लघूपधगुणं वारयति—तस्य स्थानिवद्भावादिति। तस्येति अल्लोपस्य अजादेशत्वादिति भावः। (अ इति स्थानी तस्य 'लोप' इति आदेश। स च 'अ' अज्भवति। तेन तत्स्थाने य आदिश्यते स अजादेशो भवति। लोपश्च आदिश्यते। अतश्च 'लोपः' अजादेशः। स च पुनः स्थानिवद्भवति यतः तस्य पूर्व्वत्वेन दृष्टस्य धिनोतेस्त्विवादयो विधीयन्ते। एवञ्च धिनोतेरिकारस्य उपधात्वाभावात् गुणो निवर्त्तते अकारान्तत्वात् (धिन् अपि स्थानिवद्भावाद धिन एव भवति)। तदाह—लघूपधगुणो नेति। पित्सु—तिप्सिपादिषु इत्यर्थः। धिनोति = स्पष्टम्। धिनुतः पिदभावान्न गुणः। धिन्वन्ति—इकोयणचि इति यणादेशे रूपम्। धिनु + वस् इति स्थिते:—

२३२३। लोपश्चास्यान्यतरस्यां म्वोः ॥६।४।१०७॥

दी—। असंयोगपूर्व्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यात् म्वोः परयोः। धिन्वः—धिनुवः। धिन्मः—धिनुमः। मिपि तु परत्वाद् गुणः। धिनोमि।

The final (i.e. the उ) of an अङ्ग or verbal base which ends in उकार—an affix not having a conjunct letter preceding it—disappears optionally when म and व follow. Thus धिन् उ वस्=धिन् o वस्=धिन्वः। Similarly धिन्मः। But in धिनोमि because the पित्विधि follows on लोपविधि, so गुण prevails.

मित—। लोपः+च+अस्य+अन्यतरस्याम्+म्वोः इतिच्छेदः। अङ्गाधिकारात् सूत्रस्थस्य 'अस्य' इत्यस्यार्थमाह तदन्तस्य (उकारान्तस्य) अङ्गस्येति। 'म्वो'रिति मवयोः परयोरिति सप्तम्यन्तम्। 'उतश्च प्रत्ययादसंयोगपूर्व्वादिति' पूर्व्वसूत्रम्; तदाह—असंयोगपूर्व्वो यः प्रत्ययोकार इति। धिन्वः—धिन् उ वस् इति स्थितेऽनेन उलोपे रूपम्। एवं धिन्म इत्यत्र। ननु धिनोमि इत्यत्र मकारसद्भावादपि कुतो नलोप—इत्यत्राह—मिपित्विति लोपापेक्षया परत्वादित्यर्थः। 'असंयोगपूर्व्वो यः प्रत्ययोकार'इति किम्। शक्नुवः। आप्नुवः। अत्र 'क्न' 'प्न' इति संयोगवर्णसत्त्वान्नलोपः। प्रत्ययोकार इति किम्—यु मिश्रणे इति धातुस्तस्य वकारेमकारे च परे—युवः, युमः—इति लोपो मा भूत्।

२३२४। उतश्च प्रत्ययादसंयोगपूर्वात् ॥६।४।१०६॥

दी—। असंयोगपूर्व्वो यः प्रत्ययोकारः तदन्तादङ्गात् परस्य हेर्लुक् स्यात्। धिनु। नित्यत्वादुकारलोपात् पूर्व्वमाट्। धिनवाव। धिनवाम। जिन्वतीत्यादि। रिवि ५९५ रवि

५९६ धवि ५९७ गत्यर्थाः'। रिखति। रखति। 'कवि ५९८ हिंसाकरणयोश्च' चकारात् गतौ। 'कृणोति' इत्यादि धिनोतिवत्। अयं स्वादौ च। 'मव ५९९ बन्धने'। मवति। मेवतुः। मेवुः। अमवीत्—अमावीत्। 'अव ६०० रक्षण-गति-कान्ति-प्रीति-तृप्त्यवगम-प्रवेश-श्रवण-स्वाम्यर्थ-याचन-क्रियेच्छा-दीप्त्या-लिङ्गन-हिंसादान-भागवृद्धिषु'। अवति। आव। मा भवान् अवीत्। 'धावु ६०१ गतिशुद्ध्योः'। स्वरितेत्। धावति—धावते। दधाव—दधावे।

अथोष्मान्ता आत्मनेपदिनः। 'धुक्ष ६०२ धिक्ष ६०३ सन्दीपनक्लेशनजीवनेषु'। धुक्षते। दुधुक्षे। धिक्षते। दिधिक्षे। 'वृक्ष ६०४ वरणे'। वृक्षते। ववृक्षे। 'शिक्ष ६०५ विद्योपादाने'। शिक्षते। 'भिक्ष ६०६ भिक्षायामलाभे लाभे च'। भिक्षते। 'क्लेश ६०७ अव्यक्तायां वाचि'। 'बाधने' इति दुर्गः। क्लेशते। चिक्लेशे। 'दक्ष ६०८ वृद्धौ शीघ्रार्थे च। दक्षते। ददक्षे। 'दीक्ष ६०९ मौण्ड्येज्योपनयननियमव्रतादेशेषु'। दीक्षते। दिदीक्षे। 'ईक्ष ६१० दर्शने'। ईक्षाञ्चक्रे। 'ईष ६११ गतिहिंसादर्शनेषु'। ईषाञ्चक्रे। 'भाष ६१२ व्यक्तायां वाचि'। भाषते। 'वर्ष ६१३ स्नेहने। दन्त्योष्ठादिः। ववर्षे। 'गेषृ ६१४ अन्विच्छायाम्'। 'ग्लेषृ' इत्येके। अन्विच्छा=अन्वेषणम्। जिगेषे। पेषृ ६१५ प्रयत्ने'। पेषते। जेषृ ६१६ णेषृ ६१७ एषृ ६१८ प्रेषृ ६१९ गतौ'। जेषते। नेषते। एषाञ्चक्रे। पिप्रेषे। 'रेषृ ६२० हेषृ ६२१

ह्लेष् ६२२ अव्यक्ते शब्दे'। आद्यो वृकशब्दे। ततो द्वौ अश्वशब्दे। रेषते। हेषते। ह्रेषते। कासृ ६२३ शब्द-कुत्सायाम्'। कासाञ्चक्रे। 'भासृ ६२४ दीप्तौ'। बभासे। 'णासृ ६२५ रासृ ६२६ शब्दे'। नासते। प्रणासते। 'णस ६२७ कौटिल्ये'। नसते। 'भ्यस ६२८ भये'। भ्यसते। बभ्यसे। 'आङः शसि ६२९ इच्छायाम्'। आशंसते। आशशंसे। 'ग्रसु ६३० ग्लसु ६३१ अदने'। जग्रसे। जग्लसे। 'ईह ६३२ चेष्टायाम्'। ईहाञ्चक्रे। 'बहि ६३३ महि ६३४ वृद्धौ'। बंहते। बबंहे। मंहते। 'अहि ६३५ गतौ'। अंहते। आनंहे। 'गर्ह ६३६ गल्ह ६३७ कुत्सायाम्'। जगर्हे। जगल्हे। बर्ह ६३८ बल्ह ६३९ प्राधान्ये'। ओष्ठ्यादी। 'वर्ह ६४० वल्ह ६४१ परिभाषणहिंसाच्छादनेषु'। दन्त्योष्ठ्यादी। केचित्तु पूर्वयोर्दन्त्योष्ठ्यादितामनयोरोष्ठ्यादितां चाहुः। 'प्लिह ६४२ गतौ'। पिप्लिहे। 'वेहृ ६४३ जेहृ ६४४ बाहृ ६४५ प्रयत्ने'। आद्यो दन्त्योष्ठ्यादिः। अन्त्यः केवलोष्ठ्यादिः। 'उभावप्योष्ठ्यादी' इत्येके। 'दन्त्योष्ठ्यादी' इत्यपरे। जेहृ-तिर्गत्यर्थोऽपि। बबाहे। द्राहृ ६४६ निद्राक्षये'। 'निक्षेपे' इत्येके। 'काशृ ६४७ दीप्तौ'। चकाशे। ऊह ६४८ वितर्के'। ऊहाञ्चक्रे। 'गाहू ६४९ विलोडने'। गाहते। जगाहे। जगाहिषे—जघाक्षे। जगाहिढ्वे—जगाहिध्वे—जघाढ्वे। गाहिता।

The affix हि disappears coming after an अङ्ग that ends

in an उकार—the affix having no conjunct letter preceding it ( उ )—. Thus धिन् उ हि = धिन् उ ० = धिनु । The augment आट् ( directed by 'आडुत्तमस्य पिच्च' ( 2204—3. 4. 92 ) is persisting or compulsory. ( नित्य ). Hence it precedes उकारलोप enjoined by this rule ( 6. 4. 106 ) although it follows upon the former ; for there runs the परिभाषा—'पूर्व्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः'. Thus धिनु आव ( आट् वस् सलोप by नित्यं ङ्कितः ( 2200 )=धिनो आव ( उ is gunnated and does not elide for the व is now intervened by आ ) = धिनव् आव ( अवादेशः ) = धिनवाव । Similarly धिनवाम and also धिनवानि । जिन्वति etc—an example of जिवि read after धिवि । अमवीत्—अमावीत् by optional वृद्धि by 'अतो हलादेर्लघोः ( 2284—7. 2. 27 ). अव—कान्ति to wish. प्रीति—to be glad. तृप्ति—to be satisfied. अवगम—to know. स्वाम्यर्थ—to exercise influence. अवाप्ति—to have. मा भवान् अवीत् here वृद्धि is prohibited by 'नेटि' ( 2268 ).

अथोष्मान्ताः etc—i.e.. ending in शषसह hence, upto घुषि (652) कान्तिकरणे । शिक्ष—to learn. केचित् तु etc, i. e read vice versa. ऊह—to surmise. conjecture etc. गाहू ( गाह ) to bathe, enter etc. जगाहिषे—जघाक्षे the augment इट् is optional here because the root is ऊदित्—ऊ dropping. जगाहिढ्वे—जगाहिध्वे—जगाढ्वे । The first, two are according to the rule 'विभाषेटः ( 2325). and the last ( जगाढ्वे ) is thus—गाह् गाह्ध्वे = गगाह् ध्वे (by ह्रस्वः )—ज गाह् ध्वे (by "कुहोश्चुः") जगाढ् ध्वे ( by 'होढः'—324—8. 2.31)—जगाढ् ढ्वे ष्टुनाष्टुः (113—8. 4. 41)—जघाढ् ढ् वे (by 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' ( 326—8. 2. 37) । जघाढ् वे ( by ढो ढेलोपः' ( 2335 ). गाहिता ( लुट् )

इट् तास्। This is in case of इट् and when इट् is wanting then गाह् + ता = गाढ् ढा = गाढ् धा ( by 'झषस्तथोर्धोऽधः (2280—8. 2, 40 ) = गाढ् ता ( by ष्टुनाष्टुः ( 113) = गाढा by the next rule :—

मित—उतः + च, प्रत्ययात् + असंयोगपूर्व्वात् इतिच्छेदः। उतश्चेति उकारस्य।

'प्रत्ययात्' इति—'असंयोगात्' इति चैतस्य विशेषणे तदाह—असंयोगपूर्व्वीय इति। संयोगः ( 'हलोऽनन्तराः संयोगः' ) पूर्व्वौ यस्मादिति विग्रहः। न तथा असंयोगपूर्व्वस्तस्मात्। अङ्गाधिकारादाह—तदन्तादङ्गादिति। हेरिति 'अतो हेः' ( २२०२—६।४।१०५ ) इत्यतो हेरिति 'चिणो लुक्' ( २३२९—६ ४।१०४ ) इत्यतो लुगित्यस्य चानुवर्त्तनात्। धिनु इति स्पष्टम्। नित्यत्वादिति—'पूर्व्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति न्यायेन बलीयस्त्वादाटः प्राक्प्रवृत्तिः। नित्यो हि विधिः कृते अकृतेऽपि वेतरे—प्राप्नोति इति भाष्यवचनात्। ततश्च आट्-प्रवृत्त्या वकारस्य व्यवहितत्वेन—उलोपाभावे तस्यगुणे—अवादेशे धिनवाव इति ( धिनु आट वस्—धिनु आव—धिनो आव—धिनव् आव इति ); एवम् धिनवाम। धिनवानि इतितु—धिनु मिप् इति स्थिते 'मेर्निः' इति मिभावे पूर्व्ववत् 'आडुत्तमस्यपिच्चेति' आडागमे धिनु आनिप् इति जाते पित्त्वाद्गुणे अवादेशे—रूपम्। कृवि इति 'धिन्विकृण्व्यो—' रिति सौत्रस्य ग्रहणं तदाह—धिनोतिवत् इति। अयमिति कृवि। अमवीत्—अमावीत्—अतोहलादेरिति वृद्धिविकल्पः। अवेति—अवगमो बोधः। अवाप्तिरधिगमः। मा भवान् इति—नेटीति वृद्धिनिषेधः। मा भवानतीदितिवत्। स्वरितेत्—इति ततश्च पदविकल्पः ( स्वरितञित इत्यनेन ) इति दर्शयति धावते धावसे इति—

अघोषान्ताः इति—उष्म ( श ष स ह ) वर्णान्ता इत्यर्थः। ततश्च घुषि ( ६५२ ) कान्तिकरणे इत्यन्तानां लाभः। दीक्षेति मौण्ड्य—इज्या—उपनयन—नियमव्रत आदेशेषु इतिच्छेदः। तत्र मौण्ड्यं केशवपनम्—इज्या यज्ञः इति अन्यः स्पष्टार्थः। कासाद्यर्क—'कास्प्रत्ययादाम—इत्याम्। आङः शसि इति आङ पूर्व्वः शन्स् इति यावत्—'तदा नाशंसे विजयाय सञ्जय' ( महाभारतम् ); "आशंसन्ते समितिषु सुराः" इत्यादि शाकुन्तले। "आशंसता बाणगतिं वृषाङ्के" इत्यादिषु तु शंस स्तौभ्वादिपरस्मैपदिनो ग्रहणम्। केचित्विति—विपर्य्यासेन

पठन्ति इति भावः। काशृ दीप्ताविति यथा सूर्यः प्रकाशते इत्यादि। ऊहृ वितर्के—विहितवितर्कौ युक्त्यार्थनिर्णयः। ऊहते इति—'कथं तर्हि 'अनुत्ताम-प्यूहति पण्डितो जनः' अनुदात्तेत्त्वलक्षणस्य तङोऽनित्यत्वान्नदोष इत्याहु'रिति तत्त्व-बोधिनी। गाहू (ऊदित्) गाह इति शेषः। विलोडनमत्र प्रवेशनाद्यर्थपरं न तु प्रतिघातार्थकमिति ध्येयम्। जगाहिषे—जघाक्षे—ऊदित्वात् 'स्वरतिसूतिसूयतिधूञूदितो वा' इति इड्विकल्पः। जघाक्षे इति। इडभावे जगाह् से इति स्थिते 'हो ढ' इति जगाढ् से इति जाते, एकाचो बशो भष् इति जघाढ् से इति सम्पद्यमाने 'षढोः कः सि, (२९५), इति जघाक् से इति भवति ततः सस्यादेशावयवत्वेन षत्वे—जघाक्षे इति सिद्धम्। जगाहिढ्वे—जगाहिध्वे—जघाढ्वे इति। विभाषेटः इति ढत्वविकल्पात्—पूर्वरूपद्वयम्। एतद्द्वयं इट्पक्षे, इडभावे तु जघाढ्वे इति। तदेवं प्रक्रिया—जगाह्ध्वे—(होढः)—जगाढ्ध्वे—(एकाचो बशोभष—) जघाढ्ध्वे—(ष्टुनाष्टुः)—जघाढ्ढ्वे—जघाढ्ढ्वए—('ढो ढे लोपः')—जघाढ् वए—जघाढ्वे। गाहिता—लुटि—इट्पक्षे इदम्। इडभावे तु गाह्ता इति स्थिते—होढः—गाढ्ता (झषस्त-थोर्धोऽधः (२२८०—८।२।४०)—गाढ्धा—(ष्टुनाष्टुः)—गाढ्ढा ततः—

## २२३५। ढो ढे लोपः॥८।३।१३॥

**ढो—। ढस्य लोपः स्याड्ढे परे। गाढा। गाहिष्यते—घाक्ष्यते। गाहिषीष्ट—घाक्षीष्ट। अगाहिष्ट अगाढ। अघाक्षाताम्। आघाक्षत। अगाढाः। अघाढम्। अघाक्षि। 'गृहू ६५० गर्हणे'। गर्हते। जगृहे।**

**"ऋदुपधेभ्यो लिटः कित्त्वं गुणात् पूर्वविप्रतिषेधेन" (वार्त्तिक ५८३)। जगृहिषे—जघृक्षे। जघृढ्वे। गर्हिता—गर्ढा। गर्हिष्यते—घर्क्ष्यते। गर्हिषीष्ट—घृक्षीष्ट। लुङि। अगर्हिष्ट। इडभावे—**

A ढ elides when it is followed by another ढ। गाहिष्यते—

घात्स्यते—the former is with इट् and the latter without इट् (in लृट्)। Thus गाह्+इट् स्यते ; गाह् स्यते=गाढ् स्यते=घाढ् स्य ते=(‘एकाचो वशो भष्—’) = घाक् स्यते (षढोः कः सि)=घाक्ष्यते। गाहिषीष्ट—घाक्षीष्ट (आशीर्लिङ्)—(गाह्+इट्+सीयुट+सुट्+त) and (गाह्+सीयुट्+सुट्+त=गाढ्+सीय्+स्+त=घाढ् सी स् त=घाक् षी ष् त=घाक्षीष्ट)। अगाहिष्ट—अगाढ (लुङ्)—अट् गाह् इट सिच् त (इटपक्ष) अट् गाह् सिच् त (इडभावपक्ष)=अ गाह् स् त—अगाढ् ० त (by ‘झलो झलि’ (2231—8. 2. 26)=अगाट् ध (झषस्तथोर्धोऽधः)=अगाढ् ढ=अगाढ (by this rule). अघाक्षाताम्—अ गाह सिच् आताम् then as before ‘घ्’ for ‘ग्’, ‘ढ् and then क्’ for ह and स changes into ष। So अघाक्षत (here झ is replaced by अत् by ‘आत्मनेपदेष्वनतः’ (2258—7. 1. 5), अगाढाः—अट्, गाह् सिच् थास्—अगाढ् ० धास्—अगाढ् ढास् etc. अघाढ्वम्—अट् गाह् सिच् ध्वम् अगाढ् ० ढ्वम् etc. अघाक्षि—अट् गाह् सिच् इट् अगाढ् स इ—अधाक् ष इ। ग्टहू (ऊदित्) गर्हणे ‘to condemn’. जग्टहे here ग्टह is not gunnated by the Vartika ‘ऋदुपधेभ्यो लिटः (593). See under rule ‘आदिजिटुडवः— (2289—1.3.5). जग्टहिषे etc like जगाहिषे etc.

मित—। स्पष्टम्। गाहिष्यते—घात्स्यते इड्विकल्पात् लृटि पूर्वमिट्पक्षे। परन्तु इडभावे, तदित्थम्—गाह् स्यते गाढ् स्यते (होढः)—धाक् स्यते (एकाचो बशो भष् इति भष्भावाद् गकारस्य घकारः, ‘षढोः कः सि’ इति ढकारस्य च ककारः) —घाक् ष्यते (षत्वं) ततो रूपम्। गाहिषीष्ट घाक्षीष्ट (आशीर्लिङ्) इड् विकल्पः। इठ पक्षे—गाह् इट सीयुट् सुट् त—गाह इ सीय—स् त (यलोप—षत्वष्टुत्वानि। इडभावे—गाह् सीय् स् त—घाकषीष ट (भष्भावढत्वकत्वषत्वष्टुत्वानि)। अगाहिष्ट—अगाढ (लुङ्) आगह इट् सिच् त (इडभावे)—अगाह स् त (इडभावपक्षे) अगाढ ० ध (होढ—झषतथोः—सलोपश्च)—अगाढ् ढ

( अनेन लोपे )—अगाढ़ इति। अघाक्षाताम्—अगाह् सिच् आताम्)—आगढ स् आताम्—अघाक् ष आताम् ( गकारस्य भषभावेन घकारः; ढकारस्य कत्वम् ततः षत्वम् )। एवमघाक्षत (आत्मनेपदेष्वनतः' (२२५९—७।१।५) इत्यदादेशो बोध्यः)। अगाढ़ाः—अट् गाह् सिच् थास्—अगाह् स् थास्—अगाट् ० थास् (झषस्तथोः— ) अगाट् ढास् ( ष्टुनाष्टुः )—अगाढ़ास् ( ०ढो ढे लोपः )—अगाढ़ाः। अघाढ्वम्—अट् गाह सिच् ध्वम्—अ गाह् स् ध्वम्—अघाढ् ०ढ्वम् (ढो ढेलोपः)। अघाक्षि—अट् गाह् सिच् इ ( उत्तमैकवचनम् )—अगाह् स् इ—अघाढ् स् इ—अघाक् षि ततो रूपम्। गृहू ( ऊदित् ) गर्हणे इति। गर्हणं निन्दा। गर्हते पुगन्तलघूपधस्येति गुणः। जगृहे इति लिटि कित्वाद्गुणाभावं दर्शयति 'ऋदुपधेभ्य इति वार्त्तिकमिदम्. 'आदिर्ञिटुडवः' ( २२८९—१।३।५ ) इति सूत्रस्याधस्तात् विवृतम्। जघृहिषे—जघृक्षे—ऊदित्वाद् जगाहिषे—जघाढ्वे इतिवदिड्विकल्पः। जघृक्षे—गृह्+से गृह्गृह से—अभ्यासस्य—उरदत्वं रपरत्वं हलादिशेषः जश्त्वं ततः जगृह्से इति। तत एकाचोबशो—इति भषभावे हकारस्य ढत्वकत्वे सस्य षत्वञ्च—जघृक्षे इति। जघृढ्वे—जघाढ्वे इतिवत्। गर्हिता—गर्ढा—गुणस्तता-गाढेतिगाहिवत्। एवमन्यत्रापि गाहृवत् केवलं गुणेन विशेषः। इडभावे लुङि रूपान्तरं दर्शयितुमाह—इडभावे इति—

## २३३६। शल इगुपधादनिटः क्सः॥३।१।४५॥

**टी—। इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात्। अघृक्षत।**

The affix च्लि is replaced by the substitute क्स ( स ) when the root is अनिट् and has शल् ( श ष स ह ) letters at the end and इक् ( इउऋऌ ) letters for the penultimate. Thus गृह्+च्लि+त= अट् गृह् क्स त=अ गृढ् स त=अ घृ क् ष त ( 'हो ढः'—'एकाचो बशो भष्—' and 'षढोः कः सि' )।

मित—। शलः + ( इक्—उपधात् ) + अनिटः क्सः इतिच्छेदः। 'धातोरेकाचो हलादेः—' ( २६२९—३।१।२२ ) इत्यतोधातोरित्यनुवर्त्तनात्—शल इत्यनेन तदन्तस्य ग्रहणम्। तदाह इगुपधो यः शलन्त इति। इक् उपधायां यस्येति विग्रहः। शलः ( शलन्तात् ) इगुपधात्—अनिटः—इतित्रयम्—अनुवृत्तिलभ्यस्य धातोर्विशेषणम्। क्सः सिजपवादः। तस्य सकारः अकारेण सह तिष्ठति ककारो लुप्यते। अघुक्षत—गुह् + च्लि + त इति स्थिते अनेन क्सादेशेऽडागमे—अ गुह् क्स त इति जाते क्सस्य कित्त्वेन गुणाभावे—अ गुह् स त इति भवति। ततः पूर्ववत्—'हो ढः' 'षढोः कः सि—' 'एकाचो बशो भष्—' इत्येषां—प्रवृत्त्या षत्वे च अघुक्षत इति ततो रूपम्।

२३३७। क्सस्याचि ॥७।३।७२॥

दी—। अजादौ तङि क्सस्य लोपः स्यात्। 'अलोऽन्त्यस्य' (४२)। अघुक्षाताम्। अघुक्षन्त। 'ग्लह ६५१ च'। ग्लहते। 'घुषि ६५२ कान्तिकरणे'। घुंषते। जुघुंषे। केचित् 'घष' इत्यदुपधं पठन्ति।

अथार्हत्यन्ताः परस्मैपदिनः। घुषिर ६५३ अविशब्दने'। 'विशब्दनं प्रतिज्ञानं। ततोऽन्यस्मिन्नर्थे' इत्यके। 'शब्दे' इत्यन्ये पेठुः। घोषति। जुघोष। घोषिता। इरित्वादङ् वा। अघुषत्—अघोषीत्। 'अक्षू ६५४ व्याप्तौ'।

क्स elides when an अजादि ( beginning with a vowel ) तङ् ( i.e. an आत्मनेपद affix ) follow. By 'अलोऽन्त्यस्य' the final letter अ only elides and not the whole word 'क्स'। Thus अघुक्ष + आताम् = अघुक्ष + आताम् = अघुक्षाताम्। Had the अलोप not been ordained by

this rule then the form would have been अघृत्तेयाताम् by the rule 'आतो ङितः' ( २२३५—७।२।८१ )। अघृत्तन्त—अघृत्त+अन्त ( the whole ( अघृत्त ) being अदन्त the rule 'आत्मनेपदेष्वनतः' ( २२५८ ) does not apply here ).

अथार्हत्यताः—i.e. upto अर्ह ( ७४० ) पूजायाम्' । घुषिर् ( घुष् )—It has been made 'इर्—eliding' to make it have optional अङ् in लुङ् by 'इरितो वा' ( २२६९ )। प्रतिज्ञान—means to promise, to admit etc. घोषात ( by पुगन्त लघूपधस्य च )। अक्षू ( अक्ष् ) to pervade.

मित—। क्सस्य+अचि इतिच्छेद । 'क्सस्य' इत्यस्मादेव ज्ञायते यत् क्सादेशोऽदन्त इति। अचि इत्यनेन तदादिविधिस्तदाह अजादाविति। तङीति 'लुग् वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' ( २३६५—७।३।७३ ) इत्यत एव अपकर्षणात् आत्मनेपदसिद्धौ, [ उत्तरसूत्रात् आनयन' नाम अपकर्षः ] वृत्तौ 'तङि' इति केषाञ्चित् प्रक्षेपः—काशिकादावनुक्तत्वादिति तत्त्वबोधिन्यादौ स्पष्टम्। अलोऽन्त्यस्येति—अनेन क्सस्य अ लोप इति भावः। अलोपाभावे तु अघृक्षेयाताम् इतेव भवेत् 'आतो ङितः ( २२३५ ) इति ङिताम् इयादेशविधानानात् । अघृक्षन्त— अगृह् झ इति स्थिते झस्य अजादित्वाभावात् क्सस्य अकारलोपो न भवति। ततश्च ( क्सस्य अलोपाभावात् ) 'आत्मनेपदेष्वनतः' ( २२५८ ) इत्यस्यापि अप्रवृत्तिः। भष्भावढत्वकत्वषत्वानि पूर्ववत् ।

अथार्हत्यन्ताः इति—अर्ह ( ७४० ) पूजायामित्यन्ताः घुषिर ( घुष् ) 'इरितोवा' इति लुङि अङ्विकल्पार्थमिरित्करणम् । प्रतिज्ञानमभ्युपगमः। अघुषत् इति अङ्पक्षे। अघोषीत् इति सिचपक्षे। इट् धातोर्गुण ईट् चेति ; सिजलोपः। अक्षू उदित्-करणमिट्विकल्पार्थम् 'स्वरतिसूति—' ( २२७९ )—इति सूत्रात् ।

## २३३८। अक्षोऽन्यतरस्याम् ॥३।१।७५॥

दी—। अक्षो वा श्नुप्रत्ययः स्यात् कर्त्रर्थे सार्व्वधातुके

परे। पक्षे शप्। अक्ष्णोति। अक्ष्णुतः। अक्ष्णुवन्ति। अक्षति। अक्षतः। अक्षन्ति। आनक्ष। आनक्षिथ—आनष्ठ। अक्षिता—अष्टा। अक्षिष्यति। 'स्कोः—' (३८०) इति कलोपः। 'षढोः कः सि' (२९५)। अक्ष्यति। अक्ष्णोतु। अक्ष्णुहि। अक्ष्णवानि। आक्ष्णोत्। आक्ष्णवम्॥ अक्ष्णुयात्। अक्ष्यात्। ऊदित्वाद् वेट्। 'नेटि' (२२६८)। मा भवान् अक्षीत्। (मा भवन्तौ) अक्षिष्टाम्। (मा भवन्तः) अक्षिषुः। इडभावे तु—मा भवान् आक्षीत्। (मा भवन्तौ) आष्टाम्। (मा भवन्तः) आक्षुः। तक्ष् ६५५ त्वक्ष् ६५६ तनूकरणे।

The affix श्नु is optionally attached to the root अक्ष् when a सार्व्वधातुक affix follows in the active voice. शप् comes in when श्नु is wanting. Thus अक्ष्णोति—etc. अक्ष्णु वन्ति by 'अचिश्नुधातु—'(२७१) उवङ्। इति अक्षन्ति—'अतो गुणे—'(१९१) इति पररूप। आनक्ष—by 'अत आदेः' (२२४८) and 'तस्मान् ड् द्विहलः' (२२८८)। आनक्षिथ—आनष्ट—optional इट्, for the root is ऊदित्। इट पक्षे—अक्ष् अक्ष् इट् थल्—अक्ष् अक्ष् इथ—अा नुट् क्ष् अक्ष् इथ—आन् अक्ष् इथ (हलादिः शेषः)—आनक्षिथ। इडभावपक्षे—आनक्ष् थ—आनक्ष थ—आनष् ठ ('स्कोः—(३८०—८।२।२९) thus क elides and थ becomes ठ by ष्टुना ष्टुः (११३)। अक्षिता—अष्टा (लुट्)। अक्षिष्यति—अक्ष्यति (लृट्) the process of the latter is being shown thus—स्कोः etc. अक्ष् स्यति—अ० षस्यति (then by षढोः—(२९५) ष changes into क्)—अक् स्यति—अक्ष्यति—अक्ष्यति। अक्ष्णोतु—by 'पित्सु गुणः' as अक्ष्णोति etc. अक्ष्णुहि—here 'उतश्च प्रत्ययादसंयोगपूर्व्वात्' (२३३४) does not apply for उ comes after a संयोगपूर्व्ववर्ण (क्ष्ण्) hence no हिलोप। अक्ष्णवानि

see धिनवानि under 'धिन्विकृण्व्योर च' (२३३२)। आक्ष्णोत्—अक्ष्णु+लङ् तिप्—आट् अक्ष्णो त्=आ अक्ष्णोत्। आक्ष्णवम्—आक्ष्णो+मिप् (अम्)—'तस्थस्थमिपां तांतंतामः'। अक्ष्णुयात्—विधिलिङ्—hence no दीर्घ by 'अकृत्—' (२२९८)। अक्ष्यात्—(आशीर्लिङ्)। Here neither श्नु nor शप् comes in, for, it is an आर्द्धधातुक। मा भवान् अक्षीत्—अक्षिष्टाम्—अक्षिषु—here there is no वृद्धिः by the rule 'नेटि' (२२६८)। But if मा is dismissed the लुङ् forms of अक्ष् will be आक्षीत् आक्षिष्टाम् आक्षिषुः ect (by सन्धिः with आट्)। When there is no इट्—वृद्धि will come in by 'वदव्रजहलन्तस्याचः' (२२६७) giving (मा भवान्) आक्षीत् etc. तक्षू त्वक्षू (ऊदित्)—to make thin or smooth etc.

मित—। अक्षः (६ष्टी१व)+अन्यतरस्याम् इतिच्छेदः। 'स्वादिभ्यः श्नुः' (२५२३—३।१।७३), 'कर्त्तरिशप्' (२१६७—३।१।६८), 'सर्व्वधातुके यक्' (२७५६—३।१।६७) इत्येतेभ्यः क्रमेण श्नु रिति, कर्त्तरीति, सार्व्वधातुके इति चानुवर्त्तते। तदाह—श्नु प्रत्ययः स्यादित्यादि। तत्र श्नभावपक्षे शवित्याह—पक्षे शविति। श्नु पक्षे रूपं दर्शयति—अक्ष्णोति इत्यादि। पित्सु गुण इत्युक्तत्वाद् गुणः। अक्ष्णुतः—तसः अपित्त्वाद् गुणाभावः। अक्ष्णुवन्ति—'अचिश्नुधातु—' (२७१) इत्युवङ्। अक्षति—शपि रूपम्। लघूपधत्वाभावाद् गुणाभावः। अक्षन्ति 'अतो गुणे' (१९१) इति पररूपत्वम्, भवन्ति इतिवत्। आनक्ष—लिटि 'अत आदे'रिति दीर्घः (२२४८) ततः 'तस्मान्नुड् द्विहलः' (२२८८) इति नुडागमः। अक्ष् अक्ष् अ—आक्ष् अक्ष् अ—आनुट्क्ष् अक्ष् अ—आन् अक्ष इति। आनक्षिथ—आनष्ट इति। ऊदित्वादिड्विकल्पः। पूर्व्वोक्तप्रक्रियया आनाक्ष् इति जाते इटि थलि—आनक्ष् इथ—आनक्षिथ। इडभाव—पक्षे आनक्ष् थ—आनक्ष् थ—'स्कोः'—(३८०) इति कलोपे आनष्थ ततः—ष्टुनाष्टु रिति थस्य ष्टुत्वे—आनष्ठ इति। अक्षिता—अष्टा (लुट्) पूर्व्ववत् प्रक्रिया। लृटि रूपमाह—(इट्पक्षे) अक्षिष्यति (अक्ष् इट् स्यति); अनिट्पक्षे—अक्ष् स्यति इति स्थिते स्कोरिति कलोपे अष् स्यते इति जाते—षढोः कः सि (२९५) इति।

षस्य कत्वे सस्य षत्वे च अक्ष्यति ततो अक्ष्यति। अक्ष्णोतु—पित्त्वाद् गुणः। अक्ष्णुहि—अत्र 'क्ष्णु' इत्यस्य संयोग-संज्ञकत्वेन उकारस्य संयोगवर्णपूर्वकत्वाद् 'उतश्च—' (२३३४) इत्यस्याप्रवृत्तेर्हिलोपाभावः। अक्ष्णवानि—'मेर्नि' 'आडुत्तमस्य पिच्च' इत्यादिना—उप्रत्ययस्य गुणेन अवादेशेन च 'धिनवानि' इतिवद् रूपम्। आक्ष्णोत्—आडजादीनामित्याट् पित्त्वाद् उप्रत्ययस्य गुणः 'इतश्चे'ति (२२०७) तिप इलोपश्च। आक्ष्णवम्—आड्गुणावादेशाः, 'मिपः' अमादेशश्च 'तस्थस्थमिपां तांतंतामः' इति। अक्ष्णुयात् इति श्नुपक्षे विधिलिङि रूपम्। 'अकृत्' (२२९८) इत्यस्य आर्द्धधातुकविषयत्वाद् दीर्घाभावः। शपि तु—अक्षेत्—(विधिलिङि)—लङि—आक्षत्—लोटि—अक्षतु। अक्ष्यात् इति त्वाशीर्लिङि। अत्रार्द्धधातुकत्वेन श्नुशपोरभावः। लुङि रूपं दर्शयिष्यन् आह—ऊदित्वादिति। तत्र इट्पक्षे 'नेटि' (२२६८) इति वृद्धि—निषेधाद् आक्षीद् इत्यादि। माङ्भावेतु आक्षीदित्यादि समानमेव। इडभावपक्षे—'वदव्रजेति' (२२६७) हलन्तलक्षणायां वृद्धौ आक्षीत्—इत्यादि। अत्रापि माङ्भावे पूर्ववत्। तक्षू त्वक्षू (ऊदित्)—तनूकरणं संस्करणं यथा—तक्ष्णोति काष्ठं तक्षा इति। अनयोः पूर्वस्यैव श्नु प्रत्ययो भवति नेतरस्येत्याह—

२३३८। तनूकरणे तक्षः ॥३।१।७६॥

टी—। श्नुः स्याद् वा शब्विषये। तक्ष्णोति—तक्षति वा काष्ठम्। ततक्षिथ—ततष्ठ। अतक्षीत्। अतक्षिष्टाम्। अताक्षीत्। अताष्टाम्। 'तनूकरणे' किम्? वाग्भिः सन्तक्षति। भर्त्सयतीत्यर्थः। 'उक्ष ६५७ सेचने'। उक्षांचकार। 'रक्ष ६५८ पालने'। 'णिक्ष ६५९ चुम्बने'। प्रणिक्षति। 'त्रक्ष ६६० ष्ट्रक्ष ६६१ णक्ष ६६२ गतौ'। त्रक्षति। स्त्रक्षति। नक्षति। 'वक्ष ६६३ रोषे'। 'संघाते' इत्येके। 'मृक्ष ६६४ संघाते'। 'म्रक्ष' इत्येके। 'तक्ष ६६५ त्वचने'। त्वचनं संवरणं त्वचो

ग्रहणं च । 'पच्च परिग्रहे' इत्येके । 'मूर्च्छ ६६६ आदरे' । सुमूर्च्छ । 'अनादर' इति तु क्वाचित्कोऽपपाठः । अवज्ञावहेलनमसूर्क्षणम्' इत्यमरः । काक्षि ६६७ वाक्षि ६६८ माक्षि ६६९ काङ्क्षायाम्' । 'द्राक्षि ६७० ध्राक्षि ६७१ ध्वाक्षि ६७२ घोरवाशिते च' । 'चूष ६७३ पाने' । चुचूष । 'तूष ६७४ पुष्टौ' । 'पूष ६७५ वृद्धौ' । 'मूष ६७६ स्तेये' । 'लूष ६७७ रूष ६७८ भूषायाम्' । शूष '६७९ प्रसवे' । प्रसवोऽभ्यनुज्ञानम् । तालव्योष्मादिः । यूष ६८० हिंसायाम् । 'जूष ६८१ च' । 'भूष ६८२ अलङ्कारे' । भूषति । ऊष ६८३ रुजायाम् । ऊषांचकार । 'ईष ६८४ उञ्छे' । 'कष ६८५ खष ६८६ शिष ६८७ जष ६८८ झष ६८९ शष ६९० वष ६९१ मष ६९२ रुष ६९३ रिष ६९४ हिंसार्थाः' । तृतीयषष्ठौ तालव्योष्मादौ । सप्तमो दन्त्योष्ठ्यादिः । चकाष । चखाष । शिशेष । शिशेषिथ । शेष्टा । क्सः—अशिक्षत् । अशेक्षत् । जेषतुः । जझषतुः । शेषतुः । ववषतुः । मेषतुः ।

The root तक्ष् meaning to thin, gets the affix श्नु optionally in the matter of शप् i. e. when a सार्वधातुक follows in the active voice. तक्ष्णोति like अक्ष्णोति, and तक्षति like अक्षति । ततक्षिथ—ततष्ठ—optional इट् becouse it is ऊदित् ( see स्वरतिसूति—२२७९ ) तक्ष तक्ष् इथ—ततक्षिथ । तक्ष् तक्ष् थ=ततक्ष् थ, then क is dropped by स्कोः ( ३८० ), and थ becomes ठ by 'ष्टुनाष्टुः' (११२ )—ततष् ठ=ततष्ठ । अतक्षीत् ( लुङ् )—अट् तक्ष इट् सिच् ईट् त्—अतक्ष् इस् ईत् here वृद्धि is

barred by 'नेटि' ( २२६८ )—अतत्त् इ o ईत् elision of स् by 'इट इटि'—अतत्त् ईत्। अतत्विष्टाम्—अट् तत्त् इट् सिच् ताम् (तसस्ताम्)—अतत्त् इस् ताम्। अतत्विषुः—अट् तत्त् इट् सिच् झि ( जुस् )—अतत्त् इस् उस्—अतत्विष् उस्—अतत्विषुस्। These are in the इट् पक्ष and in the इडभावपक्ष—अताक्षीत् etc—वृद्धिः here being enjoined by 'वदव्रज—' ( २२६७ )। Why say तनूकरणे—'to thin or polish etc.'—witness वाग्भिः etc 'is reproaching with (harsh) words.' उक्ष 'to sprinkle.' उक्षाञ्चकार—'आम्' comes because it is इजादि and गुरुमान् by 'संयोगे गुरुः।' प्रणिक्षति—being णोपदेश, णिक्ष first becomes निक्ष by 'णोनः' then by 'उपसर्गादसमासेऽपि—' (२२८७) gets णत्व। क्वाचित्क—means ( read ) somewhere. चूष to drink ( to suck ). शूष प्रसवे—here प्रसव means permission. शिश्लेष—लिट् of श्लिष to injure etc. क्सः ( in लुङ् ) i.e. by the rule 'शल इगुपधाद—'( २३३६ )।

मित—। स्पष्टम्। ततक्षिथ—ततष्ठ। ऊदित्वाद्वेट्। इडभावे = ततष्ठ—तत्त् तत्त् थ—ततक्ष् थ—कलोपः ष्टुत्वम्—ततष्ठ। अतक्षीत्—अताक्षीत्—ऊदित्वाद् इट्पक्षे 'नेटि' (२२६७) इति हलन्तलक्षणाया वृद्धेर्निषेधात् अतक्षीत् इति। इडभावपक्षे तु 'वदव्रजहलन्तस्याचः ( २२६७ ) इति वृद्धिः। झिप्रत्यये अतक्षिषुरिति ( झेर्जुस् इति। ) तनूकरणभिन्नार्थे श्नु प्रत्ययो नेति दर्शयति—तनूकरणे किमिति। उक्षाञ्चकारेति—संयोगपरत्वेन गुरुमत्वाद् आम्। प्रणिक्षति—'उपसर्गादसमासेऽपि णोपदेशस्य' ( २२८७ ) इति मूर्धन्यादेशः। अनादरे इति—क्वाचित्कः इति—अमरादौ दर्शनाद्दिति भावः। तथाच कोषः—'अवज्ञावहेलनमसूर्क्षणमिति। क्सः—इति—शल इगुपधात्—(२२३६) इत्यनेन लुङि इत्यर्थः। अशिक्षत् (श्लिषो रूपम् )। एषु रुषरिषो रिड्विकल्पं दर्शयितुमाह—

२३४०। तीषसहलुभरुषरिषः ॥७।२।४८॥

दो—। इच्छत्यादेः परस्य तादेरार्धधातुकस्येड् वा स्यात्।

रोषिता—रोष्टा । रोषिष्यति । रेषिता—रेष्टा । रेषिष्यति । 'भष ६८५ भर्त्सने' । इह भर्त्सनं श्वरवः । भषति । बभाष । 'उष ६८६ दाहे' । ओषति ।

The augment इट् is prefixed optionally to an आर्द्धधातुक affix, beginning with त्, when it follows the roots इष्, सह्, लुभ्, रुष् and रिष् । Thus रोषिता etc. by लघूपधगुण ॥ श्वरवः—'barking of a dog'. उष+लिट्—takes आम् by :—

मित— । ति+इषसहलुभरुषरिषः इतिच्छेदः । इष इत्यादि समाहार—द्वन्द्वात् पञ्चम्यन्तम् । इष इच्छायाम् । एषिता—एष्टा । षह मर्षणे । सहिता—सोढा । लुभ गार्ध्ये । लोभिता—लोब्धा । रुषरिषौ हिंसायाम् । 'आर्द्धधातुकस्येड् वलादे-रित्यनुवृत्तेराह—आर्द्धधातुकस्येति । ति इत्यनेन तदादिग्रहणं तदाह—तादेरिति । इष इति तुदादेः क्र्यादेश्च ग्रहणं न दिवादेः 'इषेस्तकारे श्यन्प्रत्ययात् प्रतिषेधः' इति वार्त्तिकादित्याह—इच्छत्यादेरिति । रोषिता इत्यादि—लघूपधगुणे पूर्ववत् प्रक्रिया । श्वरवः कुक्कुरशब्दः । उषो लिटि—आम्विकल्पार्थमाह—

२३४१ । उषविदजागृभ्योऽन्यतरस्याम् ॥३।१।३८॥

टी— । एभ्यो लिट्याम् वा स्यात् । ओषाञ्चकार । उवोष । ऊषतुः । उवोषिथ । जिषु ६८७ विषु ६८८ मिषु ६८९ सेचने' । जिजेष । क्रादिनियमादिट् । विवेषिथ । विविषिव । वेष्टा । वेक्ष्यति । अविक्षत् । 'पुष ७०० पुष्टौ' । पोषति । पोषिता । पोषिष्यति । अपोषीत् । अनिट्केषु 'पुष्य' इति श्यना निर्देशादयं सेट् । अतो न क्सः । अङ्विधौ दैवादिकस्य ग्रहणान्नाङ् । 'श्रिषु ७०१ श्लिषु ७०२ प्रुषु ७०३ प्लुषु ७०४ दाहे' । श्रेषति । शिश्रेष । श्रेषिता ।

श्लेषति। शिश्लेष। श्लेषिता। अयमपि सेट्। अनिट्सु दैवादिकस्यैव ग्रहणमिति कैयटादयः।

यस्त्वनिट्कारिकान्यासे द्वयोर्ग्रहणमित्युक्तम् तत् स्वोक्ति-विरोधाद् ग्रन्थान्तरविरोधाच्चोपेक्ष्यम्। पुप्रोष। पुप्लोष। पृषु ७०५ वृषु ७०६ मृषु ७०७ सेचने'। 'मृषु' सहने च। इतरौ हिंसासंक्लेशनयोश्च। पर्षति। पपर्ष। पृष्यात्। 'घृषु ७०८ संघर्षे'। 'हृषु ७०९ अलीके'। 'तुस ७१० ह्रस ७११ ह्लस ७१२ रस ७१३ शब्दे।' तुतोस। जह्रास। जह्लास। ररस। लस ७१४ श्लेषणक्रीडनयोः। 'घस्लृ ७१५ अदने'। अयं न सार्वत्रिकः। 'लिट्यन्यतरस्याम्' (२४२४) इत्यदेर्घस्लादेशविधानात्। ततश्च यत्र लिङ्गं वचनं वास्ति तत्रैवास्य प्रयोगः। अत्रैव पाठः शपि परस्मैपदे लिङ्गम्। लृदित्करण-मङि। अनिट्कारिकासु पाठो वलाद्यार्धधातुके। क्वचित्तु विशिष्योपादानम्। घसति—घस्ता।

In लिट् the affix आम् comes optionally after these roots viz उष, विद and जागृ। Thus—ओषाञ्चकार by लघूपधगुण and अनुप्रयोग of कृ। In the आमभावपक्ष—उ उष अ—उवङ् ओष् अ ( by अभ्यासस्यासवर्णे ( २२९० )—उव् ओष अ ( लघूपधगुण )—उवोष। उषतुः—उष् उष् अतुस्—उ उष् अतुः—here there is simlarlity of the letters उ and उ hence 'अभ्यासस्यासवर्णे does not apply and we get ऊषतुः ('by अकः सवर्णेदीर्घ'). उवोषिथ—by इट्, लघूपधगुण and उवङ्। विवेषिथ—विष विष इट् थ—विविष इथ—विवेष् इथ ( लघूपधगुण ); affixes वस् मस् being कित् (by असंयोगाल्लिट् कित् ) their substitutes व, म also are कित् i.e. अगुणी hence

विविषिव विविषिम । वेष्टा—लुट् । वेक्ष्यति—लृट्—विष् स्यति (षढो: क: सि—) वेक्ष्यति । अविक्षत् (लुङ्) क्स: by 'शल etc' (2336). पुष् 'to nourish.' It is सेट् hence पोषिता पोषिष्यति, 'अपोषीत्—अट् पुष् इस्ईत्—गुण—अपोष् ईत् ; under अनिट् roots पुष is read as पुष्य with श्यन् ; hence it (भ्वादि पुष्) is सेट् and thus does not get the affix क्स: । In the अङ्विधि, under 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' (२३४३), the root पुष—is referred to be दिवादि hence it i. e. भ्वादि पुष् cannot have अङ् । Thus अपोषीत् is the only form here in लुङ् । अयमपि i.e. the root श्लिष् (भ्वादि) is सेट् ; for Kaiyata and others (Haradatta etc) hold that 'दिवादि श्लिष् alone is read in the list of अनिट् roots. Hence the statement of न्यासकार (जिनेन्द्रबुद्धि) in the अनिट् verse (कारिका) 'that both भ्वादि and दिवादि श्लिष् are सेट्, should be rejected on the ground that it (the statement) is not only at variance with his own saying but also with that of others (Kaiyata etc). घस्लृ (लृ for अङ्) to eat. This is not used in all the tense affixes (लकारs); for had it been used every where Panini could not have again enjoined it optionally in place of अद् by the rule 'लिटयन्यतरस्याम्' (२४२४)। And its sphere of application is to be known from implication or (open) expression. Thus its reading here shows that it is परस्मैपदी in शप्; to make it ऌदित् (लृ—eliding) shows that it gets the affix अङ् (in लुङ्) ; its instruction under the अनिट्कारिकाs proves that it (घस्) is वलादि आर्द्धधातुक । But in क्मरच् it is expressely mentioned by the rule 'सृघस्यदः क्मरच्' (सृमर—घस्मर—अद्मर)। Thus in शप् घसति, in लुट्—घस्ता (because अनिट्) ; for लृट् we look forward—

मित—। 'कास्प्रत्ययादाममन्त्रे लिटि' (३।१।३५) इत्यतोऽनुवृत्तेराह लिटि आमिति। ओषाञ्चकारेति। वेत्तिजागर्त्योस्तु विदाञ्चकार जागराञ्चकार इति। उवोष—आमभावे द्वित्वं—'वार्णादाङ्गं बलीयः', इति सवर्णदीर्घं बाधित्वा अङ्गस्य गुणः, 'अभ्यासस्यासवर्णे' इत्यभ्यासस्य उवङ् ततो रूपम्। ऊषतुः—अतुसः कित्वेन (असंयोगाल्लिट् कित्) गुणाभावात् सवर्णपरत्वेन उवङादेशाभावस्ततो रूपम्, सवर्णदीर्घमाश्रित्य (अकः सवर्णे—') इति। उवोषिथ—थसः पित्त्वेन अङ्गस्य गुणे अभ्यासस्य उवङि रूपम्। जिषविदादेः दवहिभूतत्वादाह—क्रादिनियमात् इति। विवेषिथ—थलः पित्त्वेन धातोर्गुणः। विविषिव—कित्त्वेन गुणाभावः। वेष्टा (लुट्)। वेक्ष्यति—विष् स्यतिप्—वेष् स्यति—वेक्ष्यति—षढो कः सि (२९५) अविक्षत्—(लुङ्) अट्—विष् क्स तिप्—अ विष् स त् (क्सस्य कित्वम-तो गुणाभावः)—अविक्षत् ('षढो :—')। पुष पुष्टाविति। अयं भ्वादिः। अतो लुङि विशेषमाह—अनिटकेष्विति। धातुषु इति योज्यम्। दिवादेरनिट्कत्वं, न भ्वादे—स्तस्य सेट्त्वात् 'शल इगुपधात्' (२३३६) इत्यस्याप्रवृत्त्या सिजेव भवति न क्सः इति भावः। ननु 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति निर्देशादत्र अङ् प्रत्ययोऽपि भवेत्। नेत्याह—अङ्विधौ लिति—तत्र सूत्रे दिवादेरेव पुषेर्ग्रहणं न भौवादिकस्य। अतोऽङपि न। अतः सिचि अपोषीत् इति (अट् पुष् इट् सिच् ईट् त्—अपोष् ईत्)। श्रिषु इति चत्वारोऽपि दाहार्थाः। श्रेषति लघूपगुणः एवमन्यत्र। श्लिष इति पुष इतिवत् भ्वादावपि पठ्यते दिवादावपि। तत्र कः सेट् कोऽनिट् इति निर्णेतुम् आह—अयम् इति। श्लिष इत्यर्थः। सेट् (भ्वादिरेवेति)। भौवादिकश्लिषतेः सेट्त्वमेव प्रमाणयति—अनिट्स्विति। दैवादिकस्य दिवादेः 'श्लिष्यति काममपि चुम्बति काममपि काममपि रमयति रामाम्' (जयदेवः) इत्यस्य। इति कैयटहरदत्तादयः इति। अथ न्यासकारं दूषयति—यत्विति न्यासग्रन्थो जिनेन्द्रकृतः। द्वयोरिति दैवादिकभौवादिकयोः। स्वोक्तिस्तावत् 'अनिट्सु दैवादिकस्यैव ग्रहणम्' इति। ग्रन्थान्तरविरोधश्च=कैयटादिग्रन्थैरिति बोद्धव्यम्। 'उपेक्ष्यम्' तन्मतं परित्याज्यम्। अयमिति—अयं घसॢ (घस्) इति। ॡदितकरणम् अङ्विधौ

लिङ्गमिति स्वयमेव वक्ष्यति। न सार्व्वविक:—सर्व्वत्र लकारेषु प्रयोगो न दृश्यते इति भाव:। तादृशानुमानस्य प्रमापकमाह—'लिड्यन्यतरस्याम्' (२४२४) इति। तथाच यद्ययं सार्व्वत्रिकोऽभविष्यत् तर्हि 'अद भक्षणे' इत्यस्य लिटि घसल्रादेशो व्यर्थोऽभविष्यत्—'घस्लृ अदने' इत्यनेनैव सिद्धे: पुनरुक्तिप्रसङ्गात्। असार्व्वविकत्वेऽपि ज्ञापकेन विशेषवचनेन च प्रयोगविज्ञानं भवेदित्याह ततश्चेति—अतैव घस्लृ अदने इति भ्वादौ पाठ:—अयं परस्मैपदीति ज्ञापयति। लृदिदित्युक्तम्। अनिट् धातुषु—अस्य पाठात् ज्ञायते यदयमनुदात्तोपदेश इति। एतदेव वलाद्यार्द्धधातुके प्रयोगविषये लिङ्गम्। एतानि लिङ्गानि (ज्ञापकानि)। अथ विशेषवचनमाह—क्मरचीति—'सृघस्यद: क्मरच्'—(सृमर: घस्मर:, अद्मर:) इति। 'उपादानं' ग्रहणम्। घस्ता—वलादार्द्धधातुके लिङ्गमित्यस्योदाहरणमिदम्। लृटिविशेषमाह—

२३४२। स: स्यार्द्धधातुके ॥७।४।४९॥

दी—। सस्य त: स्यात् सादावार्द्धधातुके। घत्सति। घसतु। अघसत्। घसेत्। लिङ्गाद्यभावादाशिष्यास्याप्रयोग:।

A स् is replaced by त् when an आर्द्धधातुक (affix) beginning with a स follows. Thus घस्+स्यति—घत्स्यति। अघसत्—अङ्। There being no implication or express injunction whatsoever, the root is not used in आशीर्लिङ्।

मित—। स: सि+आर्द्धधातुके इति च्छेद:। स इति षष्ठ्यन्तं तदाह—सस्य इति। सीति सप्तम्यन्तम् आर्द्धधातुकविशेषणम्। तेन तदादिविधि:। तदाह सादौ इति। घस्+स्यति—घत्स्यति। अघसत्—लृदित्करणलिङ्गात् अङ्। लिङ्गाद्यभावादिति—लिङ्गस्य विशेषवचनस्य च अभावात् आशीर्लिङि घसते: प्रयोगो नेत्यर्थ:।

२३४३। पुषादिद्युताद्य्लृदित: परस्मैपदेषु ॥३।१।५५॥

दी—। श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्ले-रङ् स्यात् परस्मैपदेषु। अवसत्। 'जर्ज ७१६ चर्च ७१७ झर्झ ७१८ परिभाषणहिंसातर्जनेषु'। 'पिस्ट ७१९ पेस्ट ७२० गतौ'। पिपिसतुः। पिपेसतुः। 'हसे ७२१ हसने'। एदित्वान्न वृद्धिः। अहसीत्। 'णिश ७२२ समाधौ'। 'तालव्योष्मान्तः। प्रणेशति। मिश ७२३ मश ७२४ शब्दे रोषकृते च'। तालव्योष्मान्तौ। 'शव ७२५ गतौ'। दन्त्योष्ठान्त्यस्तालव्योष्मादिः। शवति। अशवीत्—अशावीत्। 'शश ७२६ प्लुतगतौ'। तालव्योष्माद्यन्तः। शशाश। शेशतुः। शेशुः। शेशिथ। 'शसु ७२७ हिंसायाम्।' दन्त्योष्मान्तः। 'न शसदद—' (२२६३) इत्येत्त्वं न। शशसतुः। शशसुः। शशसिथ। 'शंसु ७२८ स्तुतौ'। अयं दुर्गतावपीति दुर्गः। 'नृशंसो घातुकः क्रूरः' इत्यमरः। शशंस। आशिषि नलोपः। शस्यात्। 'चह ७२९ परिकल्कने'। कल्कनं शाठ्यम्। अचहीत्। 'मह ७३० पूजायाम्'। 'रह ७३१ त्यागे'। 'रहि ७३२ गतौ'। रंहति। रंह्यात्। 'दृह ७३३ दृहि ७३४ बृह ७३५ बृहि ७३६ शब्दे च'। 'बृंहितं करिगर्जितम्' इत्यमरः। बृहिर् इत्येके। अबृहत्—अबर्हीत्। 'तुहिर् ७३७ दुहिर् ७३८ उहिर् ७३९ अर्दने'। तोहति। तुतोह। अतुहत्—अतोहीत्। दोहति। अदुहत्—अदोहीत्। अनिट्कारिकास्वस्य दुहेर्ग्रहणं नेच्छन्ति। ओहति। उवोह। ऊहतुः। ओहिता। मा भवान् उहत्। औहीत्। अर्ह ७४० पूजायाम् आनर्ह।

## अथ क्रूपपर्यन्ता अनुदात्तेतः। 'द्युत ७४१ दीप्तौ'। द्योतते।

The affix अङ् is substituted for च्लि coming after the roots पुष् etc, read with the विकरण—श्यन्, after the roots under the द्युतादि class ( see 'द्युद्भ्यो लुङि' ( २३४५ ) ) and after the roots that drop ऌ, in the परस्मैपद। Thus अपुषत्—अद्युतत्—अघसत्। एदित्वात् i. e. by the rule 'ह्म्यन्त—' ( २२९९ )। आशिषि—because it is not इदित् and because it is कित् hence the न disappears by 'अनिदितां—' ( ४१५—६।४।२४ )। अचह्वीत्—by 'ह्म्यन्तक्षण—'। अबृहत्—अबर्हीत् by 'इरितो वा'। मा भवान् उहत्—अङ् being ङित्—no वृद्धि by 'क्ङिति च'। आनर्ह—'अत आदेः' ( २२६८ ) enjoins अभ्यास दीर्घ and 'तस्मान्नुट्' ( २२४४ ) enjoins नुट।

अथ etc—द्युत to shine—द्योतते by पुगन्तलघूपधस्य ( २१८९ )—

पित—। 'च्लेः सिच्' इत्यतः सिच्; 'अस्यतिव्यक्तिख्यातिभ्योऽङ्' ( २४३८ ) इत्यतोऽङित्यनुवर्त्तते। तदाह—च्लेरङिति। 'पुषधातुर्भ्वादौ दिवादौ क्र्यादौ चुरादौ च पठ्यते। यदि तु पुष पुष्टौ इति भौवादिकधातुमारभ्य पुषादिगणो गृह्येत तदा द्युतादिग्रहणमनर्थकः भवेत्। पुषेरुत्तरत्र द्युतादीनां पाठात्। नापि क्र्याद्यन्तर्गतः। तत्र हि पुषधातोरग्रे मुषस्तेये, खच भूतप्रादुर्भावे, हेठ च, ग्रह उपादाने इति चत्वार एव पठ्यन्ते। यदि तु त एव विवक्षिताः स्युस्तर्हि लाघवात् ऌदित एव क्रियेरन्। नापि चुरादिगतः पुषादिगणो गृह्यते इति शेषः। णिचा व्यवहितत्वेन ततोऽनन्तरस्य च्लेरसंभावात्। अतः परिशेषात् दिवादय एव 'गृह्यन्ते इत्याह—श्यन्विकरणपुषादेरिति।' पुषादिर्दिवादिप्रकरणे द्रष्टव्यः। द्युतादिस्तु अनुपदमेव "द्युद्भ्यो लुङि" ( २३४५ ) इत्यत्र स्वयमेव दर्शयिष्यते। उदाहरणं क्रमेण यथा'अपुषत् स्वपोषम्'—अद्युतत्—अघसत् इति। परिभाषणं सनिन्दोपालम्भः। प्रणिशति—उपसर्गादसमासेऽपि ( २२८७७ ) इति णत्वम्। दुर्गो

दुर्गसिंह:। नलोप: 'अनिदिताम्'—( ४१५ ) इत्यनेन। भानई—अत आदेरिति दीर्घ: 'तस्मा'दिति नुट्। अथ क्तपूपर्यन्ता: इति—द्योतते इति लघूपधगुण:—

२३४४। द्युतिस्वाप्यो: संप्रसारणम् ॥७।४।६७॥

दी—। अनयोरभ्यासस्य संप्रसारणं स्यात्। दिद्युते। दिद्युताते। द्योतिता।

( The य् and the व् ) of the अभ्यास of these two roots viz द्युत् and स्वापि (स्वप्+णिच्) undergo सम्प्रसारण i.e. य् is replaced by इ and व् by उ ( Cp.—'इग्यण: सम्प्रसारणम्' ( 323—1.1.45 )). Thus द्युत् द्युत् ए—द य् उ द्युत् ए—द इ उ द्युत् ए—दिद्युते by 'सम्प्रसारणाच्च' ( ३३०—३।१।१०८ )। [Note that this य which is samprasaranated (?) would have elided by 'हलादि: शेष:, had not this rule been there and the form would have been दुद्युते which is not sanctioned by usage. ] The instance of स्वापि is सुष्वापयिषति ( सन् )।

मित—। द्युतिश्च स्वापिश्च ( द्वन्द्व: ), तयो: ; षष्ठी। अभ्यासस्येति 'अत्र लोपो ऽभ्यासस्ये'त्यतो ऽनुवृत्तेरिति भाव:। सम्प्रसारणमिति—'इग्यण: सम्प्रसारणम्' इति सूत्रात्—यकारस्य सम्प्रसारणम् 'इ' ; वकारस्य तु 'उ' इति बोध:। एवम् द्यु द्यु त् ए इति स्थिते सम्प्रसारणे कृते द इ उ द्यु त् ए इति जाते 'सम्प्रसारणाच्च' ( ३३०—३।१।१०८। इति पूर्व्वरूपमेकादेश:। अत्र हिल्वाद्धलादिशेषेण लोपे प्राप्ते वचनम्। स्वापिरिति णिजन्तस्य ग्रहणम्। तस्य सनि सुषुापयिषति इत्युदाहरणम्। अन्यत् सुगमम्। पुषादिसूत्रे 'परस्मैपदे'ष्वित्युक्तम्। तदिदानीं द्युतादीनां लुङि परस्मैपदित्वमेव दर्शयन्नाह—

२३४५। द्युद्भ्यो लुङि ॥१।३।९१॥

दी—। द्युतादिभ्यो लुङ: परस्मैपदं वा स्यात्। पुषादि-

**सूत्रेण परस्मैपदे अङ्। अद्युतत्—अद्योतिष्ठ। श्विता ७४२ वर्णे। श्वेतते। शिश्विते। अश्वितत्—अश्वेतिष्ट। 'ञि मिदा ७४३ स्नेहने'। मेदते।**

The roots द्युत् etc (read under द्युतादि class) optionally become परस्मैपदी in लुङ्। Then अङ् replaces the affix सिच् coming after द्युत् etc, when the roots are परस्मैपदी by the rule 'पुषादि-द्युतादि—' (२३४३)। Thus अद्युतत्—अट् द्युत् अङ् त्—अद्युद्युत् अ त्— without गुण। अद्योतिष्ठ=अट् द्युत् इट् सिच् त (आत्मने)—अद्योत् इ स् त (the root is gunnated and not lengthened due to the prohibition —'नेटि' (२२६८); गुण by 'पुगन्त—')। [ The roots read here upto 'घट (७६३) चेष्टायाम्' are known as द्युतादि]। श्वेतते by गुण। When श्विता (आ here is to prohibit the aug. इट by आदितश्च (३०३६) in the निष्ठा-प्रत्यय) is परस्मैपदी then it becomes अश्वितत्—by अङ् in लुङ्; and when it is आत्मनेपदी it becomes अश्वेतिष्ट (इट सिच्) in that very लकार। This is the process for all roots read under द्युतादि। ञिमिदा—'to grow fat' etc—मेदते। मिद+लिट् एश—

मित—। द्युद्भ्य इति वहुवचनस्यार्थमाह—द्युतादिभ्य इति। द्युतादयश्च द्युतदीप्तौ श्विता वर्णे इत्यारभ्य, घट (७६३) चेष्टायामित्यन्ताः। 'शेषात् कर्त्तरि परस्मैपदम्' (१।३।७८) इत्यतः परस्मैपदमिति, 'वा क्यषः' (१।३।९०) इत्यतो वेति चानुवर्त्तते लुङि इति च षष्ठ्यर्थे वर्त्तते—अतो व्याचष्टे लुङः परस्मैपदं वेति। पुषादीति—'पुषादिद्युतादि—' (२३४३) इति सूत्रे द्युतादेः परस्मैपदिनः अङ् विधानादङ्। तदुदाहरति अद्युतत् इति। पक्षे आत्मनेपदे इटि सिचि नेटीति वृद्ध्य-भावाल्लघूपधगुणे—अद्योतिष्ठ इति। श्विता इति। आदित्करणम् इन्निषेधे लिङ्गम् 'आदितश्च' (३०३६) इति सूत्रितत्वात्। अश्वितदित्यादि स्पष्टम्। एवमग्रे। ञिमिदा

ञित्करणं 'ञीतः क्तः' (३०८८) इत्यवार्थम्। स्नेहनं मेदोवृद्धिः। अथ मिदेर्लिटि असंयोगत्वेन कित्त्वेऽपि गुणमाशङ्कितुमाह—

२३४६। मिदेर्गुणः ॥७।३।८२॥

टी—। मिदेरिको गुणः स्यात् इत्संज्ञकशकारादौ प्रत्यये। एशः आदिशित्त्वाभावान्नानेन गुणः। मिमिदे। अमिदत्—अमेदिष्ट। 'ञि ष्विदा ७४४ स्नेहनमोचनयोः।' 'मोहनयोः' इत्येके। स्वेदते। सिष्विदे। अस्विदत्—अस्वेदिष्ट। 'रुच ७४५ दीप्तावभिप्रीतौ च'। रोचते सूर्यः। हरये रोचते भक्तिः। अरुचत्—अरोचिष्ट। 'घुट ७४६ परिवर्त्तने'। घोटते। जुघुटे अघुटत्—अघोटिष्ट। 'रुट ७४७ लुट ७४८ लुठ ७४९ प्रतिघाते'। अरुटत्—अरोटिष्ट। 'शुभ ७५० दीप्तौ'। 'क्षुभ ७५१ सञ्चलने'। 'णभ ७५२ 'तुभ ७५३ हिंसायाम्'। आद्योऽभावे च। 'नभन्तामन्यके समे'। 'मा भुवन्नन्यके सर्व्वे' इति निरुक्तम्। अनभत्—अनभिष्ट। अतुभत्—अतोभिष्ट। इमौ दिवादौ क्र्यादौ च। स्रंसु ७५४ ध्वंसु ७५५ भ्रंशु ७५६ अवस्रंसने'। 'ध्वंसु गतौ च'। अङि नलोपः। अस्रसत्—अस्रंसिष्ट। 'नास्रसत् करिणां ग्रैवमि'ति रघुवंशे। 'भ्रंशु' इत्यपि केचित् पेठुः। अत्र तृतीय एव तालव्यान्त इत्यन्ये। 'भ्रशु भ्रंशु अधःपतने' इति दिवादौ। स्रम्भु ७५७ विश्वासे। अस्रभत्—अस्रम्भिष्ट। दन्त्यादिरयम्। तालव्यादिस्तु प्रमादे गतः। 'वृतु ७५८ वर्त्तने। वर्त्तते। ववृते।

The इक् of भिद् is gunnated when an affix having an indicatory श in the beginning follows. Thus in भिद्+लिट् एश्, the इ of भिद् is not gunnated in as much as the affix एश् has its indicatory श् at the end and not in the beginning ; so the form is बिभिदे and not बिभेदे । अभिदत्—अभेदिष्ट—like अद्युतत्—अद्योतिष्ठ । आद्य—i.e. णभ also means want or absence. As for example—नभन्ताम् etc ( this is the वेदमन्त्र and its explantion is :—) 'All others will not be or exist'—Nirukta of Yaska. अङि नलोपः—by 'अनिदिताम्' (४१५—६।४।२४) ; अस्रसत्—the लुङ् form of स्रंस to fall away from,—is instanced in the Raghuvamsa in अस्रसत् etc—'the necklet or necktie of the elephants did not unloose.' अस्रंसिष्ट—अट् स्रंस् इट् सिच् त—अस्रंस् इष त । वृत—to exist :—

मित— । मिदेरित्यवयवषष्ठी तदाह—मिदेरिक इति । इको गुण इति 'इको गुणवृद्धी' इति परिभाषोपस्थितेः । इत्संज्ञकशकारादाविति । 'ष्ठिवुक्लमुचमां शिति' ( २३२०—७।३।७५ ) इत्यतः'शिति' इत्यस्यानुवृत्तेरित्यर्थः । आदिशित्त्वा—भावादिति । आदि शकार इत् यस्येति ; आदौ शकारस्तेद् यस्येति वा विग्रहः । प्राक् शकारेत्त्वाभावादित्यर्थः । ञिष्विदा—ञित्करणमादित्करणं पूर्ववत् । 'ष्वि'इति षोपदेशे लिङ्गम् । अस्विदत्—अस्वेदिट इति—अद्युतत्—अद्योतिष्ट इतिवत् । रोचते सूर्य्य=प्रकाशते इत्यर्थः । हरय इति अत्र अभिप्रीत्यर्थकः । उभयत्राप्यकर्म्मकः । आद्यः—णभ इत्यर्थः । अभावार्थमेवदर्शयति नभन्तामिति । वेदमन्त्रोऽयम् । मा भुवन्निति—तु निरुक्तकार-यास्ककृतं तस्यैव व्याख्यानम् । तत्र नभन्ताम् इति लोटि प्रथमबहुवचनान्तम् । अर्थस्तु मा भुवन् इति । न भवन्त्वित्यर्थः । अन्यकी—अन्य+अकच् इत्यकच्प्रत्ययान्तस्य प्रथमाबहुवचनम् । अन्ये इत्यर्थः । समे इत्यास्यार्थः—सर्व्वे इति । तेन 'अन्ये सर्व्वे न भवन्तु' इति अक्षरशो व्याख्यार्थः । अवसंसनभुजस्थानान्निपतनम् । अङि नलोप इति । तस्य ङित्वेन 'अनिदितामित्यस्य ( ४१५ ) प्राप्तिः । अङन्तमेवोदाहरति अस्रसदित्यादि । ग्रैवं ग्रीवालङ्कारः

श्रृङ्खलादिर्वा बोद्धा: । स्रम्भु विश्वासे इति । अयं शकारादिरपि दृश्यते विश्रम्भालाप इति यथा हितोपदेशादौ । स च भट्टोजिमते प्रामादिक इत्याह—तालव्यादिरित्ति । वृतु ( वृत् ) वर्त्तते—असंयोगात् परत्वात् कित्त्वं न गुणाभाव: । ववृते । अभ्यासस्य उरदत्वम्, हलादि: शेष: । ततो रूपम् ।

२३४७ । वृद्भ्य: स्यसनो: ॥१।३।९२॥

दी— । वृतादिभ्य: परस्मैपदं वा स्यात् स्ये सनि च—

The roots under वृतादि class optionally take परस्मैपद terminations in लृट्, लृङ् and सन् ।

मित— । स्पष्टम्—प्रतिप्रसव ( exception) विधिरयमिति नागेश: ।

२३४८ । न वृद्भ्यश्चतुर्भ्य: ॥७।२।५९॥

दी । एभ्य: सकारादेरार्द्धधातुकस्येट् न स्यात् तङानयोरभावे । वर्त्स्यति—वर्त्तिष्यते । अवृतत्—अवर्त्तिष्ट । अवर्त्स्यत्—अवर्त्तिष्यत । 'वृधु ७५९ वृद्धौ' । 'शृधु ७६० शब्दकुत्सायाम्' । इमौ वृतुवत् । 'स्यन्दू ७६१ प्रस्रवणे' । स्यन्दते । सस्यन्दे । सस्यन्दिषे—सस्यन्त्से । सस्यन्दिध्वे—सस्यन्द्ध्वे । स्यन्दिता—स्यन्त्ता । 'वृद्भ्य: स्यसनो:' (२३४७) इति परस्मैपदे कृते ऊदित्त्वलक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यात् 'न वृद्भ्य:'—( २३४८ ) इति निषेध: । स्यन्त्स्यति—स्यन्दिष्यते—स्यन्त्स्यते । स्यन्दिषीष्ट—स्यन्त्सीष्ट । 'द्युद्भ्यो लुङि' इति परस्मैपदपक्षे अङ् । नलोप: = अस्यदत्—अस्यन्दिष्ट—अस्यन्त । अस्यन्त्साताम् । अस्यन्त्सत । अस्यन्त्स्यत् । अस्यन्दिष्यत—अस्यन्त्स्यत ।

The augment इट is not enjoined to such आर्द्धधातुक affixes as begin with स, when they come after these four roots वृतु (वृत्), वृधु (वृध्), शृधु (शृध्) and स्यन्दू (स्यन्द्) provided there is no तङ् (त आताम् etc....upto महिङ्) or आन (शानच्, कानच्)। Thus वृत् when it is परस्मैपदी will give वर्त्स्यति (without इट्) and when आत्मनेपद (तङ्) will give वर्त्तिष्यते (with इट्)। In both the cases the root is gunnated by पुगन्तलघूपधस्य च (२१७९)। This is the instance in लृट् and in सन् the forms will be विवृत्सति (without इट्) and विवर्त्तिषते (with इट् in तङ्)। अवृतत् (अङ् in the परस्मै—) अवर्त्तिष्ट (सिच्, इट in तङ्)। अवर्त्स्यत् (लृङ् want of इट in the परस्मै—)। अवर्त्तिष्यत (लृङ—इट् in तङ्)। वृध् and शृध् are conjugated like वृत, thus—वर्त्स्यति—वर्द्धिष्यते। अवृधत्—अवर्द्धिष्ट। अवर्त्स्यत्—अवर्द्धिष्यत। शर्त्स्यति—शर्द्धिष्यते। अशृधत्—अशर्द्धिष्ट। अशर्त्स्यत्—अशर्द्धिष्यत। स्यन्दू (ऊदित्; स्यन्द्) to flow. सस्यन्दिषे—सस्यन्त्से (option of इट् because the root is ऊदित्)। सस्यन्त्से—स्यन्द्स्यन्द से—सस्यन्द्से—सस्यन्त्से (by खरि च—121—8. 4. 55). सस्यन्दिध्वे (with इट) सस्यन्द्ध्वे (without इट् and ध not being खर, द is not replaced by त्)। स्यन्दिता—स्यन्ता (लुट्)। वृद्भ्यः etc.—After we have enjoined परस्मैपद to स्यन्द् (in लृट्), the prohibition of इट् by 'न वृद्भ्यः—' applies even though the root is ऊदित्, for though 'न वृद्भ्यः—(7. 2. 59) comes later than 'स्वरतिसूति—' (2279—7. 2. 44) and also though this option of इट् due to the elision of ऊ is an inherent injunction (अन्तरङ्ग विधि) yet it (न वृद्भ्यः—) will bar the option of इट् due to the elision of ऊ in परस्मैपद on the strength of

authority of the word चतुर्भ्यः in the rule ( न वृद्भ्यः—), otherwise Panini could have said 'न वृद्भ्यः' only and not 'न वृद्भ्यश्चतुर्भ्यः'। Thus though स्यन्द् is ऊदित् will not have the option of इट् due to the elision of ऊ in परस्मैपद in as much as it is included in the list वृतु, वृधु, शृधु, स्यन्दू। Therefore, there will be only one form in लृट् परस्मैपद—स्यन्त्स्यति and two forms in आत्मनेपद—स्यन्दिष्यते—स्यन्त्स्यते by option of इट्। Here it cannot be rejcined that this taking up of 'चतुर्भ्यः' in the rule is to exclude क्लृप from the list; for क्लृप has been taken separately so that the augment इट becomes compulsory when a सकारादि आर्द्धधातुक follows. [ In भाष्य, however, the point is explained in a different way. The भाष्यकार says that the term 'चतुर्भ्यः' should not be added so that the rule will be 'न वृद्भ्यः' and not 'न वृद्भ्यश्चतुर्भ्यः' and also says that the rule 'तासि च क्लृपः' ( 2352 ) should be modified as 'तासि च' on the strength of the परिभाषा 'निषेधाश्च बलीयांसः'—'Surely prohibitory rules are more forcible ( than even अन्तरङ्ग rules)'. Thus 'न वृद्भ्यः' being an 'अपवाद' or special rule will bar the अन्तरङ्ग or inherent इट्विधि and give only one form in परस्मैपद as above; and as it ( नवृद्भ्यः ) covers all the five वृतादि roots वृतु, वृधु, शृधु, स्यन्द् and क्लृपू, so the word 'कृलृपः of the rule तासिचक्लृपः ( 2352 ) should be dispensed with; for क्लृप alone is परस्मै—in तास् and not the other roots which are परस्मै—in लुङ्, स्य ( लृट् ) and सन् only ( वृद्भ्यः स्यसनोः—2347 ) ]. स्यन्दिषीष्ट स्यन्त्सीष्ट ( आशीर्लिङ्—ऊदित् वेट् ). [ Remember that वृतादि roots form a

part of द्युतादि class hence) ; स्यन्द्, like other roots, will have अङ् in परस्मै—by the rule 'द्युद्भ्यो—( 2345 ) and give अस्यदत् with नलोप by 'अनिदिताम्—'( 415 )—for अङ् is ङित् । अस्यन्दिष्ट अस्यन्त ( लुङ् आत्मने—इड्विकल्प ) = अट् स्यन्द इट सिच त and ( अट् स्यन्द सिच् त—अस्यन्द् स् त—अस्यन्द् ० त ( by झलो झलि 2281 and 'झरो झरि'—71). अस्यन्त्साताम् ( अट् स्यन्द् सिच् आताम् ). अस्यन्त्सत ( अट् स्यन्द् सिच् अत by 'आत्मनेपदेष्वनतः' ( 2258 ). अस्यन्त्स्यत् ( लृङ् ) । अस्यन्दिष्यत —अस्यन्त्स्यत ( लृङ् आत्मनेपद option of इट् ) ।

मित— । न वृद्भ्यः + चतुर्भ्यः इतिच्छेदः । एभ्यः 'वृतु-वृधु-शृधु स्यन्दूभ्यः' सकारादेरार्द्धधातुकस्य 'स्यति-स्यते—सन्नित्यादीनामित्यर्थः इट् इडागमो न स्यात् न भवेत् तङानयो [—तङः (तातामित्यारभ्य महिङन्तस्य) आनस्य च (शानच्कानचोश्च)] अभावे सति इत्येव ) । भाष्ये 'न वृद्यः—' इति एतस्य विवरणप्रदर्शनावसरे 'वृतादिभ्यः प्रतिषेधे च । किम् । क्वत्युपसंख्यानं कर्त्तव्यम् । विवृत्सिता (सन् तृच् ) विवृत्सितुम् ( सन् तुमुन् ) । विवृत्सितव्यम् ( सन्-तव्य ) । तत्तर्हि उपसंख्यानं कर्त्तव्यम् । न कर्त्तव्यम् । अविशेषेण वृतादिभ्य, इट् प्रतिषेधमुक्त्वा आत्मनेपदपर इट् भवतीति वक्ष्यामि' । इत्यात्मनेपदे परे इड्भवतीत्युक्तं तस्यैव व्याख्यानं तङानयोरभावे इति—'एतच्च 'तङानावात्मनेपदमिति' ( २१४६ ) सूत्रानुसारात् । वर्त्स्यति—वर्त्तिष्यते ( लृट् ) एवमन्यत्र यत्र यत्रायं वृत्तादिगणः परस्मैपदपरस्तत्र तत्रेडभाव आत्मनेपदपरस्य त्विड् भवत्येवेति ध्येयम् । केवलं स्यन्दूक्लृपोरूदित्तया आत्मनेपदपरयोरपि इड्विकल्प इति विशेषः । अवृतत्—अवर्त्तिष्ट (लुङ्)—'द्युद्भ्यो लुङि' (२३४५) इति परस्मैपदे प्राप्ते 'पुषादि—'(२३४२) सूत्रेण पूर्ववाङ् अन्यत्र तु सिच इट् । नेटीति वृद्धिनिषेधात् लघूपध गुणः पूर्ववत् । अवर्त्स्यत्—अवर्त्तिष्यत ( लृङ् ) 'वृद्भ्यः स्य—' ( २३४७ ) इति 'स्य'पदेन लृङ्लृटोर्ग्रहणात्—परस्मैपदे प्राप्ते इडभावः । इमाविति वृतुवृधू इत्यर्थः तथाच अनयोः—वर्त्स्यति—वर्द्धिष्यते । शर्त्स्यति शर्द्धिष्यते । अवृधत्—अवर्द्धिष्ट अशृधत्—अशर्धिष्ट इत्येवं क्रमेण रूपाणि । स्यन्दू ( स्यन्द् ) प्रस्रवणे चरणे इत्यर्थः ।

ऊदिदयं धातुस्तेनात्मनेपदे इडविकल्प सिध्यति। परस्मैपदे तु 'न वृद्भ्यः—' (२३४८) इति निषेधात्—नेत्यग्रे वक्ष्यति। स्यन्दते लघूपधत्वाभावात्—अपि गुणाभावः। सस्यन्दे (लिट)। अत्र संयोगपरत्वेन लिटः कित्त्वाभावेऽपि—'त'—प्रत्ययस्य अपित्वमादाय गुणाभावः। सस्यन्दिषे—सस्यन्त्से (ऊदित्वेन लृटि इड्विकल्पः)। सस्यन्दिध्वे—सस्यन्द्ध्वे (इणः परत्वाभावेन—मूर्धन्यादेशाभावाद् ढत्वाभावः, ढस्य खर्व्यतिरिक्ततया—दस्य चर्त्वाभावः) स्यन्दिता—स्यन्ता (लुट्)। वृद्भ्यः स्यसनोरिति—। अनेन सूत्रेण लृटि (स्ये) 'परस्मैपदे कृते' प्राप्तं ऊदित्त्वलक्षणम्' 'स्वरतिसूति—' (२२७९—७।२।४४) इति सूत्रात् प्राप्तम् अन्तरङ्गम् अपि 'विकल्पम्' इड्विकल्पम् 'बाधित्वा' अधःकृत्य प्रतिषिध्य इति यावत् 'चतुर्ग्रहणसामर्थ्यात्' 'चतुर्भ्यः' इत्येवं सूत्रितत्वात् 'न वृद्भ्यः—(२३४८) इति सूत्रोक्तो निषेधः प्रवर्त्तते इति वाक्यशेषः। अयमभिप्रायः—यदि ह्यत्र (परस्मैपदे) ऊदित्त्व-प्रयुक्त इड्विकल्प एव भवेत् तर्हि 'न वृद्भ्यश्चतुर्भ्यः' इत्यत्र 'चतुर्भ्यः—' ग्रहणं व्यर्थम्। 'चतुर्भ्य' इत्यनुक्तेऽपि हि 'न वृद्भ्यः' इत्यनेनैव अभीष्टसिद्धेः। 'स्यन्दू'—धातोरपि वृत्त्वादिगणमध्यपतितत्वात्। न च 'कृपू'—व्यावृत्त्यर्थं तद्वचनमित्यपि वाच्यम्। 'तासि च कॢपः' (२३५२—७।२।६०) इति चकारेणैव सकाराद्यार्द्धधातुके नित्यमिन्निषेधस्य—वक्ष्यमाणत्वात् पुनः कॢपिग्रहणानर्थक्यप्रसङ्गात्। तस्मात् चतुर्ग्रहणस्येदमेव सामर्थ्यं यत्—अन्तरङ्गमपि 'स्वरतिसूति—' (२२७९—७।२।४४) सूत्रोक्तमूदित्त्वलक्षणमिड्विकल्पं बाधित्वा 'न वृद्भ्यश्चतुर्भ्यः' (२३४७—७।२।५९) इति निषेधो बलवत् प्रवर्त्तते, 'स्यन्त्स्यति' इत्येकमेव च परस्मैपदे रूपं भवति इति। आत्मनेपदे तु 'न वृद्भ्यः—' इति निषेधाप्रसङ्गात्—ऊदित्त्वलक्षणः इड्विकल्पः सिध्यत्येव—स्यन्दिष्यते—स्यन्त्स्यते इति। एतेन 'लृटि स्ये सति 'वृद्भ्यः स्यसनोः' इति परस्मैपदपक्षे 'न वृद्भ्यः—' (७।२।५९) इत्यस्य परत्वात् 'स्वरति—'' (७।२।४४) इति पूर्वसूत्रोक्तमूदित्त्वलक्षणमिड्विकल्पं बाधित्वा 'न वृद्भ्यश्चतुर्भ्यः' (७।२।५९) इति इण्निषेधे 'स्यनत्स्यति' इत्येव रूपमिष्यते (सूत्रकारेण) न तु स्यन्दिष्यते इति यदुक्तं तदपास्तम्। भाष्यवार्त्तिकयोस्तु एतत् प्रकारान्तरेण समाहितम्। तथा च तत्र 'निषेधाश्च बलीयांसः' इति न्याय-माश्रित्य अन्तरङ्गस्यापि ऊदित्त्वलक्षणस्य इड्विकल्पस्य—'न वृद्भ्यः' इत्यनेनैव बाधसिद्धेः

पुनश्चतुर्थ्यं: इति न वक्तव्यमिति कृत्वा चतुर्ग्रहणंभाष्ये प्रत्याख्यातम् । किञ्च—'तासि च' इत्येवं सूत्रितव्यं न तु 'तासि च क्लृपः' (२३५२—७।२।६०) इति । क्लृपेरेव हि तासि परस्मैपदित्वान्नेतरेषां वृतादीनाम् इति । तथा च भाष्यवचनम्—(नवृद्भ्यः—इतिसूत्रे) ............'चतुस्तासि क्लृपिग्रहणानर्थक्यञ्च (वार्त्तिकम्) । चतुर्ग्रहणं चानर्थकम् । सर्वेभ्यो वृत्तादिभ्यः प्रतिषेध इष्यते । तासिग्रहणं (तासि च क्लृप इति सूत्रे) चानर्थकम् । किङ्कारणम् । निवृत्तत्वात् सकारस्य । निवृत्तं सकारादाविति । तास्ग्रहणे चेदानीमक्रियमाणे क्लृपिग्रहणेनापि नार्थः । एषोऽपि हि वृतादिः पञ्चमः । भवेत् क्लृपिग्रहणं न कर्त्तव्यम् । तास्ग्रहणं तु कर्त्तव्यम् । यद्धि तत्सकारादाविति । न तच्छक्यं निवर्त्तयितुम् । इह्यपि प्रसज्येत । वर्त्तिता वर्द्धिता । तास्ग्रहणे चेदानीं क्रियमाणे क्लृपिग्रहणमपि कर्त्तव्यम् । भवेत् तासिग्रहणं कर्त्तव्यम् । क्लृपिग्रहणं तु नैव कर्त्तव्यम् । अन्येभ्योऽपि वृतादिभ्यस्तासौ कस्मान्न भवति । परस्मैपदेष्विति वर्त्तते । क्लृपेरेव च तास् परस्मैपदपरः नान्येभ्यो वृत्तादिभ्यः ।' इति ।प्रदीपे च'.........तासि चेत्यपि कर्त्तव्यम् । क्वापि इत्येतत्तु न कर्त्तव्यम् क्लृपेरन्येभ्यो वृतादिभ्यः तासेरात्मनेपदपरत्वात इटोऽभावादि'ति निगमितम् । शब्देन्दुशेखरकारैश्च भट्टोजि—व्याख्यानमनादृत्य भाष्यपक्ष एव समाश्रित इति दिक् । स्यान्दिषीष्ट—स्यन्त्सीष्ट (आशीर्लिङ्) । नलोप इति—'अनिदिताम्—' (४१५) इत्यनेन अङ्ङित्वात् । अस्यदत् (अङ्) अस्यन्दिष्ट—अस्यन्त (सिच्पक्षे इड्विकल्पः) अस्यन्त इत्यत्र 'झलो झलि' (२३८१) इति सलोपः । अस्यन्त्स्यत् (लङ्) 'न वृद्भ्यः' इति निषेधात् पूर्ववत् परस्मैपदपक्षे इडभावः । अस्यन्दिष्यत—अस्यन्त्स्यत (आत्मनेपदपक्षे इड्विकल्पः) ।

## २३४९ । अनुविपर्य्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥८।३।७२॥

टी—। एभ्यः परस्य अप्राणिकर्त्तृकस्य स्यन्दतेः सस्य षो वा स्यात् । अनुष्यन्दते—अनुस्यन्दते वा जलम् । 'अप्राणिषु'

किम् ? अनुस्यन्दते हस्ती। 'अप्राणिषु' इति पर्य्युदासात् 'मत्स्योदके अनुसयन्दते' इत्यत्रापि पक्षे षत्वं भवत्येव ; 'प्राणिषु न' इत्युक्तौ तु न स्यात्। 'कृपू ७६२ सामर्थ्ये'—

The स of स्यन्द् turns optionally into ष when स्यन्द् agrees with a nominative other than a living being and comes after (any of) the उपसर्गs अनु, वि, परि, अभि and नि। Thus अनु etc. 'the water is flowing.' Why say अप्राणिषु? Witness—अनु etc. 'The elephant sports (in the water) or emits ichor,' The नञ् समास in अप्राणिषु signifies a पर्य्युदासविधि and not प्रसज्यप्रतिषेध one i.e the नञ् is connected with the word प्राणी only (meaning न प्राणिकर्तृकेषु) and not with the verb भवति 'to be' (meaning प्राणिषु न भवति)। Hence by taking advantage of the पर्य्युदासविधि we can have option of ष also in cases like मत्स्योदके etc. 'The water and the fish are (i.e the water along with the fish is) flowing. कृपू (ऊदित्) कृप् 'to be able :

मित—। अनु-वि-परि-अभि-निभ्यः, स्यन्दतेः + अप्राणिषु इतिच्छेदः। अप्राणिषु इत्यस्यार्थमाह—अप्राणिकर्तृकस्येति। तद्धि सप्तम्यन्तमपि स्यन्दतेर्विशेषणतया षष्ठ्यर्थे वर्त्तते इतिभावः। —'सहेः साडः सः' (८।३।५६) इत्यतोऽनुवृत्तिः। षो वा इति 'अपदान्तस्य मूर्धन्यः' (८।३।५५) इत्यतो मूर्धन्यादेशस्य 'सिवादीनां वाड्व्यवायेऽपि' (८।३।७१) इत्यतो वा ग्रहणस्य चानुवृत्तिः। अनुष्यन्दते—चरति प्रवहति वेत्यर्थः। प्राणिकर्तृकस्य स्यन्दतेः षत्वं न भवतीत्याह—अप्राणिष्विति। अनुस्यन्दते मदं स्रवति जलकेलिं करोतीति वार्थः। अप्राणिषु इत्यत्र नञः प्राणिनैवान्वयात् प्राणिभिन्नेष्वित्यर्थलाभात् पर्य्युदासोऽयं विधिर्न तु प्रसज्यप्रतिषेधः। क्रियायामन्वयाभावात्। उक्तं हि—

'प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ इति—
'अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥ इति च ( साहित्यदर्पणे ) ।

तेन यत्र प्राण्यप्राणिनावुभावपि कर्त्तारौ भवतस्तत्र 'अप्राणित्वानपायात् अन्वादिपरस्य स्यन्दतेः षत्वविकल्पं भवत्येवेति दर्शयति—अप्राणिष्वित्यादिना । मत्स्योदके इति । मत्स्यश्च उदकञ्च इति द्वन्द्वः । 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयो'रिति नपुंसकत्वम् । मत्स्यसहितं जलमनुस्यन्दते इति तदर्थः । कृपू—सामर्थ्ये इति सामर्थ्यं शक्तिः—

## २३५० । कृपो रो लः ॥८।२।१८॥

दी— । कृप उः रः लः इतिच्छेदः * । 'कृप' इति लुप्तषष्ठीकम् । तच्चावर्त्तते । कृपो यो रेफस्तस्य लः स्यात् । कृपो ऋकारस्यावयवो यो रेफसदृशस्तस्य च लकारसदृशः स्यात् । कल्पते । चक्लृपे । चक्लृपिषे—चक्लृप्से । इत्यादि स्यन्दिवत् ।

The disjoining of the rule is thus—कृप ( : )+उः+रः+लः । कृप is elliptical for कृपः ending in the sixth case-ending

* द्रष्टव्यम्—'कृपः उः रः लः 'कृप इति लुप्तषष्ठीविभक्तिकम् । षष्ठ्येकवचने उरिति ऋकारस्य रूपम् । अवयवषष्ठी । कृप उरिति स्थिते आद्गुणे कृपोरिति भवति । रः इति षष्ठ्यन्तम् । कृपोर् रः इति स्थिते रोरि इति रेफलोप 'कृपोः' इति भवति । लः इति प्रथमान्तम् । अकारः उच्चारणार्थः ।' इति बाल—मनोरमायाम् ( ११७ ) पृष्ठे ।

singular. And this कृप moves twice i.e. is to be pronounced twice ( so as to make the rule constituent of two sentences): thus—कृप: र: ल:, (first sentence ) which means that which is the रेफ or र् of कृप is substituted by ल्; and कृप: ऋ: र: ल: ( second sentence ) which affords the meaning 'that which is a part of the ऋकार of कृप and which resembles a रेफ् is also replaced by a letter which resembles a लकार। Thus according to first explanation we have कल्पते ( by लघूपधगुण ;—thus कृप् शपते—क ल् प् अ ते = कल्पते ) and according to the next explanation we have चक्लृपे etc (कृप् कृप् ए—कृप् क्लृ प् ए—कृकार् प् ( by 'उरत्' and उरण् पर: ) कक् लृ प् ए—क (हलादि:शेष:) क् लृ प् ए—चक्लृपे (कुहोश्चु; etc) Similarly चक्लृपिषे—चक्लृप्से (ऊदित्, hence option of इट् ). etc like the root स्यन्द् above.

मित—। 'ऋलृक्'—सूत्रस्थ भाष्यमनुसृत्य प्रथमं सूत्राक्षराणि विभजति कृप इति। अत्र वाक्यद्वयसमावेशार्थं सूत्रकारेण कृप इति लुप्तषष्ठीविभक्तिकतया पठितमित्याह—कृप इतीति। लुप्ता षष्ठीविभक्तिर्यस्येति विग्रह:। तच्चेति कृप इत्यन्वय: सूत्रमित्यन्यं। अथ प्रथमावर्त्तनस्य फलमाह—कृपो रो रेफ इति। अत्र त्रीण्येव सूत्रपदाणि कृप: र: ल: इति। अस्योदाहरणन्तु—कल्पते कल्पेते कल्पन्ते इत्यादि लघूपधगुणेकृतेरेफस्यलत्वे रूपम्। अथ द्वितीयावर्त्तनस्य फलमाह— कृपे: ऋकारस्य अवयवो य: र इति। अत्र पक्षे चत्वारि सूत्रपदानि कृप:, ऋ: र: ल: इति। तत्र कृप इत्यवयवषष्ठी। ऋरिति ऋकारस्य षष्ठ्येकवचने रूपम्—यथा 'मातृ' इत्यस्य मातुरिति। तदाह—कृपे: ऋकारस्य इति। 'वर्णैकदेशस्य वर्ण-ग्रहणेन ग्रहणं भवेत्' इति न्यायं पुरस्कृत्याह—ऋकारस्य अवयव: अंश: ऋकारैकदेश इत्यर्थस्तस्यापि वर्णग्रहणेन ग्रहणात्। रेफसदृशऋकारांशरूप इत्यर्थ:। एवं यथा रेफसदृशो र: ऋकारांशे लक्षणया गृह्यते एवं ल इत्यपि लकार-

सदृशे लकारांशे लाक्षणिकः। अयं स्पष्टार्थः—कृपधातोरवयवो यः ऋकारस्तस्य यो रेफः (ऋकारस्य अंशविशेषरूपः) तस्य लकारः स्यादित्यादि। अत्र पंचे चक्लृपे—चक्लृपिषे इत्याद्युदाहरणम्। तदित्थम्—कृप् कृप ए—कृप् क् ऌ प् ए कृप् क् ल् ऌ प् ए (अंशविशेषस्य स्थले लकार आदिष्टः अंशान्तरन्तु यथा—पूर्व्वं तिष्ठति) क र् व् ऌपे (अभ्यासस्य उरत् (२२४४) इत्युरत्वं ततो रपरत्वम् ('उरण्रपर' इत्यनेन) ततो हलादिशेषे अभ्यासे चर्त्वं (२१८२) "कुहोश्चुः" इति चर्त्वं च कृते) चक्लृपे—चकल्पे इति। एवमन्यत्र। चक्लृपिषे—चकल्प्से (ऊदित्वाद्वेट्)।

## २३५१। लुटि च कॢपः ॥१।३।९३॥

### दी—। लुटि स्यसनोश्च कॢपेः परस्मैपदं वा स्यात्।

कॢपि turns परस्मैपदी in लुट् and in लृट्, लृङ् and सन् also.

मित—। सूत्रमिदं 'वृद्भ्यः स्यसनोः' (२३४७—१।३।९२) 'इत्यस्मादव्यवहित-परवर्त्ति; तेन चकारेण 'स्यसनो'रित्यत्रापि परस्मैपदमिति सम्बद्ध्यते तदाह—लुटि स्यसनोश्चेत्यादि।

## २३५२। तासि च कॢपः ॥७।२।६०॥

### दी—। कॢपेः परस्य तासेः सकारादेरार्द्धधातुकस्य चेट् न स्यात्तङानयोरभावे। कल्प्तासि। कल्प्तास्थ। कल्पितासे—कल्प्तासे। कल्प्स्यति—कल्पिष्यते—कल्प्स्यते। कल्पिषीष्ठ—कॢप्सीष्ठ। अकॢपत्—अकल्पिष्ट—अकॢप्त। अकल्प्स्यत्—अकल्पिष्यत—अकल्प्स्यत। वृत्। वृत्तः सम्पूर्णो द्युतादिर्वृतादिश्चेत्यर्थः।

The augment इट् is not enjoined to the affix तासि and to a सकारादि (having a स in the beginning) आर्द्धधातुक affix—

both ( तास and आर्द्धधातुक ) coming after the root कॢपि provided there is no तङ् or आन i. e. an आत्मनेपदसंज्ञक affix. Thus कल्प्तासि ( though the root is ऊदित्—yet it is not sactioned to have the augment इट् in परस्मै—for which see rule 'न वृद्भ्यः—' (२३४८)। कल्प्तास्थ ( थ without इट् ) कल्पितासे —कल्प्तासे (the prohibition is invalid in the case of an आत्मनेपद hence the option of इट् here ). कल्प्स्यति—कल्पिष्यते—कल्प्स्यते (exactly like स्यन्त्स्यति—स्यन्दिष्यते स्यन्त्स्यते)। कल्पिषीष्ट—कॢप्सीष्ट—(आशीर्लिङ् कॢप् सीष्ट here it is not gunnated by the rule लिङ्सिचावात्मनेपदेषु (२३००)। अकॢपत् (अङ्—गुणाभावः)—अकल्पिष्ट—अकॢप्त ( here the स of सिच् elides by 'झलो झलि' (२२८१)) अकल्प्स्यत्—अकल्पिष्यत—अकल्प्स्यत ( लृङ् forms )। वृत् i. e. here ends the द्युतादि class along with the वृतादि class.

मित—। इदं सूत्रं 'न वृद्भ्यश्चतुर्भ्यः' (२३४८—७।२।५९) इत्येतस्मात् अव्यवहित परवर्त्ति। तेन तत्र यदुक्तं तदत्रापि सम्बद्ध्यते। केवलं 'तासि' इत्येवाधिकं वर्त्तते तदर्थं सूत्रम्। अतएवाह—कॢपेः परस्य तासेः सकारादेरार्द्ध-धातुकस्य च इट् न इति (अत्रस्थचकारेण 'नवृद्भ्य'—' इत्यत्रस्थस्य 'सकारादे-रार्द्धधातुकस्य' लाभ इति ज्ञेयम्। भाष्ये तु 'तासि च' इत्येवमुक्त्वा कॢपिग्रहणं प्रत्याख्यातमिति प्रागुक्तम्। कल्प्तासि—कॢप्+तासि ( लघूपधगुण )—कल्प् तासि। कल्प्तास्थ (थ)। 'लुटि च कॢपः' (२३५२) इति परस्मैपदे प्राप्ते ऊदिल्लक्षणस्य इड्विकल्पस्य 'तासि च कॢपः' इत्यनेन निषिद्धत्वात् प्रतिविभक्ति एकमेव परस्मैपदे रूपमिति विज्ञेयम्। आत्मनेपदपक्षे तु इड्विकल्पः सिध्यत्ये-वेत्याह—कल्पितासे—कल्प्तासे ( लुट्—गुणः ) कल्प्स्यति—कल्पिष्यते—कल्प्स्यते ( लृट् ), कल्पिषीष्ट—कॢप्सीष्ट—(आशीर्लिङ्)। अकॢपत्—( लुङ्—अङ्गुणा-भावौ) अकल्पिष्ट—अकॢप्त (लुङ्—सिज्गुणौ)। अकॢप्त—अट् कॢप् सिच् त—अकॢप्

स त। ततः सलोपे (झलोझलि—२२८१) रूपम् इत्यात्मनेपचे इड् विकल्पात्, पूर्व्वत्र अकल्पिष्ठ इत्यत्र नेटीति निषेधात् इडभावे लघूपधगुणः। उत्तरत्र तु लिङ्—सिचावात्मनेपदेषु (२३००—१।२।११) इति कित्त्वाद् गुणाभावः। ततोऽप्युत्तरत्र—'अक्लृप'दित्यत्र तु 'द्युद्भ्यो लुङि' (२३४५) इति परस्मैपदे कृते 'पुषादि—' (२३४३) सूत्रेण अङि ङित्त्वाद् गुणाभावे रूपम्। अक्लप्स्यत्—अकल्पिष्यत—अकल्प्स्यत (लृङ्) इति। अस्यन्त्स्यत् इतिवत्। वृत्—इत्यस्य अर्थमाह—वृत्तः सम्पूर्ण इत्यर्थः इति। वृत्+क्विप्=वृत् इति।

दी—। अथ त्वरत्यन्तास्त्रयोदशानुदात्तेतः षितश्च। 'घट ७६३ चेष्टायाम्'। घटते। जघटे। 'घटादयो मित' इति वक्ष्यमाणेन मित्संज्ञा। तत्फलन्तु णौ 'मितां ह्रस्वः' (२५६८) इति 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (२७६२) इति च वक्ष्यते। घटयति। विघटयति। कथं तर्हि 'कमलवनोद्घाटनं कुर्व्वते ये,' 'प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव' इत्यादि। शृणु। 'घट सङ्घाते' इति चौरादिकस्येदम्। न च तस्यैवार्थविशेषे मित्त्वार्थमनुवादोऽयम् इति वाच्यम्। 'नान्ये मितोऽहेतौ' इति निषेधात्। अहेतौ स्वार्थे णिचि ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेत्यर्थः। 'व्यथ ७६४ भयसञ्चलनयोः। व्यथते।

The thirteen roots ending in ञित्वरा (७७५) सम्भ्रमे (to look sharp) are अनुदात्त—eliding and ष—dropping. [The object of अनुदात्त—eliding is to make the roots आत्मनेपदी and of ष—dropping is to affix अङ् (कृदन्त) after them by the rule 'षिद्भिदादिभ्योऽङ्' (३२४१—३।३।१०४) घटा—व्यथा—प्रथा—etc.]. घट to try. The root घट

is technically known as मित् or म-eliding by the गणसूत्र 'घटादयो मितः'। 'The root घट and others are 'मित्' to be anounced here after. And the object of the मित्करण is to make their penultimate short by the rule मितां ह्रस्वः (२५६८—६।४।९२) in णिच्, and to make it (penultimate) optionally long in चिण् and णमुल by the rule—चिण् णमुलोर्दीर्घोऽन्यतरस्याम् (२७६२—६।४।९३) which (rules) also are to be expressed later on. Thus by ह्रस्व—घटयति—विघटयति ; as in वेणीसंहार—'क्रुधा भीमः सन्धिं विघटयति यूयं घटयत' here though the sense varies yet it is to be held correct by the maxim 'धातूनामनेकार्थत्वात्'। कथं तर्हि etc—well you say that घट becomes दीर्घ optionally only in चिण् and णमुल् how then applications like उद्घाटनम् (दीर्घ in ल्युट्) and प्रविघाटयिता (दीर्घ in लुट् ता) etc are to be defended in 'कमलवनोद्घाटनं कुर्वते ये' and 'प्रविघाटयिता समुत्पतन्—[The former line is taken from 'सूर्यशतक' of the poet 'मयूर'; and the latter is taken from Bharavi 2nd canto. 1st mens—'Such rays of the sun which open a number of lotuses; and the 2nd means 'you, by rising all of a suddenwill desperse or drive asunder (your friends) as the sun (हरिदश्वः) opens the petals of the bed of lotuses.] Hear this घट is 'घट सङ्घाते to occur, to join together etc' read in चुरादि class (and not under घट read in भ्वादि)। You cannot say that this चुरादि घट is read again, in a particular sense, in भ्वादि to make it technically known as मित् (i.e. you cannot say that घट is a single root read in चुरादि and that there is no other घट known as मित् in भ्वादि), for there runs the prohibiting गणसूत्र 'नान्ये—मितोऽहेतौ' i.e., No चुरादि root other than the beginning

with ञ प and the five यम, वह, रह, वल and चि, is to be treated as मित् in णिच् in the sense of 'it is his own or it is the same'(स्वार्थे)। Thus it is proved that घट ( भ्वादि ) is separate from घट ( चुरादि ) so that there are two घटs। व्यथ—to fear and to move—व्यथते—

मित—। अथ लरत्यन्ता इति—ञित्वरा ( ७७५ ) सम्भ्रमे इत्यन्ता इत्यर्थः। षितश्चेति—'घटादयः षितः' इति गणसूत्रादिति भावः। षित्करणान्तु 'षिद्भिदादिभ्योऽङ्' ( ३२८१—३।३।१०४ ) इति क्तस्तु अङि टाबर्थम् इति ज्ञेयम्। तेन च घटा व्यथा प्रथेत्यादि सिद्धमित्याहुः। घटते इति—'सार्वधातुकमपित्' ( २२३४ ) इति ङित्त्वाद् गुणाभावः। 'घटादयो मितः' मित्संज्ञका इति वक्ष्यति। तदाह—इति वक्ष्यमाणेनेति। मित्करणप्रयोजनमाह—तत्फलन्त्विति—णौ णिच्चि 'मितां ह्रस्वः (२५६८ ) इत्युपधाह्रस्वार्थम्—'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' ( २७६२) इति चिणि णमुलिच दीर्घविकल्पार्थम् इति ( उदाहरणन्तु अघटि—अघाटि इति चिणि। घटं घटम्—घाटं घाटमिति णमुलि )। वक्ष्यते—चुरादावित्यर्थः। मित्त्वमेवोदाहरति—घटयति विघटयति इति। अत्रेदं बोध्यम्। धातुपाठे अर्थनिर्द्देश उपलक्षणार्थमित्युक्तं प्राक्। तेन च उपसर्गादिना अर्थान्तरवृत्तेरपि घटादेर्मित्कार्य्यं ह्रस्वादिकं भवत्येवेति विघटयति इत्यादि सिद्धम्। अतएव 'क्रुधा भीमः सन्धिं विघटयति यूयं घटयत' ( वेणीसंहारः ) इत्यादि सङ्गच्छते। ननु 'चिण्णमुलोः—'( २७६३ ) इत्यनेन चिण्णमुलोरेव परतो दीर्घः प्राप्तः न तु ल्युटि लुटि वा। तर्हि 'उद्घाटनमिति ल्युटि 'प्रविघाटयिता' इति लुटि चान्यत्र च ये दीर्घोपधप्रयोगा दृश्यन्ते तत्र का गतिरिति प्रतिपिपादयिषुराह—कथं तर्हि 'कमलवनोद्घाटनमिति—'प्रविघाटयिता' इति च। तत्र पूर्व्वोदाहरणम् मयूरकवेः सूर्य्यशतके उत्तरन्तु किरतार्ज्जुनीये द्वितीयसर्गे इति ज्ञेयम्। शृणु—'उच्यते मयेति' शेषः। चौरादिकस्येति। चुरादौ पठितस्यैव घटधातोरेते रूपे न तु भौवादिकस्य। तेनात्र चिण्णमुलोरविषयेऽपि दीर्घो भवत्येवेति न काचिदनुपपत्तिरिति भावः। ननु 'घट' इत्येक एव धातुश्चुरादौ पठ्यते। तस्यैव चार्थान्तरवृत्तित्वमादाय पुनर्भ्वादौ पाठः, न

तु घट चेष्टायामिति भ्वादावुक्तं धात्वन्तरम्। तत्कथमुक्तदोषपरिहार इत्याशङ्क्य समाधत्ते—न चेति। तत्रैव 'चौरादिकत्वेव' अर्थ विशेषे 'सम्भ्रमव्यतिरिक्तार्थे' 'घट चेष्टायाम्' इत्याद्यर्थरूपे इति यावत्; मित्त्वार्थं मित्करणार्थं अनुवादः अनु-पश्चात्वादो वचनम् पुनः पाठ इति यावत्। अयम् 'घटधातुः' इति वाच्यं नेति पूर्व्वेण अन्वयः। तत्रावाच्यत्वे प्रमाणं दर्शयति—'नान्ये मितोऽहेतौ' इति निषेधात् इति। गणसूत्रमिदं चुरादौ पठ्यते। हेतुशब्देन 'हेतुमति च' इति सूत्रविहितो णिच् हेतुमत् तद्भिन्नस्तु स्वार्थेच इति ज्ञापयन् स्वयमेव सूत्रं व्याचष्टे आह— ताविति। ज्ञपादिपञ्चकव्यतिरिक्ता इति। अत्र अतद्गुणसंविज्ञानो बहुव्रीहिः— ज्ञपः आदिर्येषां (पञ्चकानाम्) इति तेभ्यो व्यतिरक्ता अन्ये। तथा च 'ज्ञप मिच्च, यम च परिवेषणे, चह परिकल्कने, रह त्यागे, वलप्राणने, चिञ् चयने' इति षड् धातव एवमितो नान्ये इति फलति। तेन च चुरादौ ज्ञपादिपञ्चकव्यति-रिक्तानां मित्वाभावात् चुराद्यान्तर्भुक्तस्य 'घट सम्भ्रमे' इत्यस्य मित्त्वार्थम् 'घट चेष्टायाम्' इति भ्वादावनुवाद इति न भ्रमितव्यमिति भावः। अतः सिद्धं यद् 'घट' इति विभिन्नं धातुद्वयम्। एको भ्वादावपरश्च रादौ पठ्यते। नत्वेकोऽपरस्यानुवाद इति। एतेन—'ये तु धातवो घटादिगण एव पूर्व्वं पठिता ते तु गणान्तरे तेषान्तु अर्थान्तरवृत्तावपि मित्त्व'मिति इति धातुवृत्त्यादिग्रन्थसिद्धान्तः प्रत्युक्तो वेदितव्य इति दिक्। व्यथ इति। अपित्वेन ङिद्वत्त्वात् व्यथते इत्यादि।

## २३५३। व्यथो लिटि ॥७।४।६८॥

टी। व्यथोऽभ्यासस्य संप्रसारणं स्याल्लिटि। हलादि-शेषापवादः। यस्य हलादिशेषेण निवृत्तिः। विव्यथे। प्रथ ७६५ प्रख्याने। पप्रथे। प्रस ७६६ विस्तारे। पप्रसे। म्रद ७६७ मर्दने। स्खद ७६८ स्खदने। स्खदनं विद्रावनम्। क्षजि ७६९ गतिदानयोः। मित्त्वसामर्थ्यादनुपधात्वेऽपि

'चिण्णमुलोः—' ( २७६२ ) इति दीर्घविकल्पः । अखञ्जि—अखाञ्जि । खञ्जं—खञ्जम् । खाञ्जं—खाञ्जम् । दक्ष ७७० गतिहिंसनयोः । योऽयं वृद्धिशैघ्र्ययोरनुदात्तेत्सु पठितस्तस्येहार्थविशेषे मित्त्वार्थोऽनुवादः । क्रप ७७१ कृपायां गतौ च । कदि ७७२ क्रदि ७७३ क्लदि ७७४ वैक्लव्ये । 'वैकल्ये' इत्येके । त्रयोऽप्यनिदित इति नन्दी । इदित इति स्वामी । कदि—क्रदौ इदितौ क्रद—क्लद इति चानिदिताविति मैत्रेयः । कदि-क्रदि—क्लदीनामाह्वानरोदनयोः परस्मैपदिषूक्तानां पुनरिह पाठो मित्त्वार्थ आत्मनेपदार्थश्च । ञि त्वरा ७७५ सम्भ्रमे । 'घटादयः षितः' (ग. सू. १८६ ) । षित्त्वादङ् क्तस्तु वक्ष्यते ।

The अभ्यास ( reduplicate ) of the root व्यथ receives सम्प्रसारण in लिट । This supersedes the rule 'हलादिः शेषः' (7. 4 60) ; but the थकार of the अभ्यास disappears by 'हलादिः शेषः', for there is no special injunction for its being retained. Thus विव्यथे—व्यथ् व्यथ् ए—व्य०व्यथ् ए—व् इ व्यथ् ए=विव्यथे ; the व् of the अभ्यास is not samprasaranated by (?) the rule 'न संप्रारणे सम्प्रसारणम्' (363—6. 1. 37). मित्त्वसामर्थ्यात् etc—because खजि is read under घटादि । अनुपधात्वे अपि—i.e. though there is no 'अ' in the penultimate ( for the root being इदित the न of नुम् occupies the room of 'अ' ) yet by virtue of मित्व the अ will optionally become दीर्घ in चिण् and णमुल । Thus in चिण्—अखञ्जि—अखाञ्जि ( by 'चिणो लुक्'—2329 ) and in णमुल्— खञ्जम् etc. The form

is doubled in each case by the rule 'आभीक्ष्ण्ये णमुल् च' (3343). योऽयम् etc—the root दच is read in the list of अनुदात्तेत् roots in the sense of 'increment and promptness' and yet it is again read here to the effect of making it मित्। Thus like खजि it also will have forms like अदचि—अदाचि in चिण् and दखम्—दचम्, दाचम्—दाचम् in णमुल्। तयोऽपि i.e. Nandi takes them (कद, क्रद and क्लद) as अनिदित् or not इ-eliding i.e, as कन्द, क्रन्द etc.; while Swami takes them as they are as इदित् or इ-eliding. But Maitreya reads कदि and क्रदि as इदित् and क्रद and क्लद as not so. Roots कदि क्रदि and क्लदि meaning to call and to weep are read in the परस्मैपदी list and yet they are read here with a view to making them मित् as well as आत्मनेपदी। ञित्वरा i.e, त्वर् (ञि for 'ञीतः क्तः' and आ for 'आदितश्च') to look sharp or to execute promptly. घटादयः etc—this is explained. N. B.—घटादि roots will close with फण ( 821 ) गतौ।

मित—। 'अत्र लोपोऽभ्यासस्य—' ( २१२० ) इत्यतोऽभ्यासस्य इति 'द्युति—स्वाप्योः सम्प्रसारणम्' (२३४४) इत्यतः सम्प्रसारणमिति चानुवर्तते। तदाह—व्यथोऽभ्यासस्येत्यादि। ननु अभ्यासे सम्प्रसारणार्हमचरद्वयं वर्तते वकार इति यकार इति च। तदनयोः कस्यानेन सूत्रेण सम्प्रसारणमिति विप्रतिपत्तौ आह—हलादिशेषापवाद इति। तेन वकारयकारौ शिष्येते इति बोधः। तयोश्चापवादवचनसामर्थ्यात्—यकारस्यैव सम्प्रसारणं न वकारस्य। ननु तर्हि यकारसम्प्रसारणादूर्ध्वं वकारस्य सम्प्रसारणं स्यात्। मैवं वाच्यम्। 'न सम्प्रसारणे—सम्प्रसारणम्' ( ३६३—६।१।३७ ) इति निषेधात्—ननु हलादिशेषापवादश्चेत् तर्हि यकारोऽपि शिष्येत। तत्राह यस्य हलादिशेषेण—निवृत्तिरिति। सम्प्रसारणार्थं ह्यत्र सूत्रप्रवृत्तिः। तेन यमधिकृत्य सम्प्रसारणं विधीयते सोऽनादिरपि शिष्यते वचनप्रामाण्यात्। यकारमधिकृत्य—त्वत्

न किञ्चिद् विधीयते अतस्तस्य हलादिशेषेण—निवृत्तिः प्रयोजनाभावात् इति भावः। विव्यथे इति—व्यथ् व्यथ् ए इति स्थिते अनेन यकारस्य—इकार ( 'इग्यणः सम्प्रसारणम्'), यलोपे = विव्यथे इति। 'न—सम्प्रसारणे—सम्प्रसारणमिति' निषेधादभ्यासवकारस्य सम्प्रसारणाभावः। मित्त्वसामर्थ्यादिति—चजेर्हि इदित्वात् नुमागमो भवति। नुमि च कृते एकाचरवृद्ध्या चजिः चञ्ज् इति नकारो भवति। तेन च नकारस्यैव उपधात्वं भवति न लकारस्य। एवमकारस्य 'अनुपधात्वेऽपि' यदयं चजि घटादौ मित्सु पठितोऽतो मित्त्वसामर्थ्यादनुपधास्थस्याप्यकारस्य 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इत्यनुसाराद् दीर्घविकल्पः स्यादेवेति दर्शयति—अचञ्जि—अचाञ्जि इत्यादि। अत्र 'चिणोलुक्' (२३२९) इति इकारात् परस्य तशब्दस्य लोपः। खञ्जम्—खञ्जम् इत्यादेस्तु 'आभीक्ष्ण्ये णमुल च्' (३३४३) इति णमुल् 'नित्यवीप्सयो'रिति द्वित्वञ्च। योऽयमिति—दच इति शेषः। वृद्ध्यर्थे—शीघ्रत्वार्थे च अनुदात्तेत्सु अनुदात्तलोपिषु धातुषु पठित उपात्तः, तस्य इह घटादौ अर्थविशेषे गतिहिंसनात्मके मित्वार्थः मित्कारणार्थः अनुवादः पुनरुपादानमित्यर्थः। तथा च चञ्जिवत् अस्यापि चिण्णमुलोः—अदचि—अदाचि, दचम्—दचम्; दाचम्—दाचम् इति दीर्घविकल्पो भवतीति फलितम्। वयोऽपीति। नन्दिना—कद्, क्रद्,क्लद् इत्येवं पठितमन्यत्—स्पष्टम्। 'घटादयः षित' इति प्रागेतेषां षित्कारणफलं दर्शितम्। फण गतौ ( ८२३ ) इति यावत् घटादयो बोद्ध्याः तत्र घटादिषु परस्मैपदिन आरभ्यन्ते—

**अथ फणान्ताः परस्मैपदिनः। ज्वर ७७६ रोगे। ज्वरति। जज्वार। गड ७७७ सेचने। गडति। जगाड। हेड ७७८ वेष्टने। 'हेडृ अनादरे' इत्यात्मनेपदिषुगतः। स एवोत्सृष्टानुबन्धोऽनूद्यते अर्थविशेषे मित्त्वार्थम्। परस्मैपदिभ्यो ज्वरादिभ्यः प्रागेवानुवादे कर्त्तव्ये तन्मध्येऽनुवादसामर्थ्यात् परस्मैपदम्। हेडति। जिहेड। हिडयति। अहिडि—अहीडि। अनादरे तु हेडयति। वट ७७९ भट ७८० परि-**

भाषणे। 'वट वेष्टने', 'भट भृतौ' इति पठितयोः परिभाषणे—भिन्नार्थयोऽनुवादः। णट ७८१ नृत्तौ। इत्थमेव पूर्व्वमपि पठितम्। तत्रायं विवेकः। पूर्व्वं पठितस्य नाट्यमर्थः। यत्कारिषु नटव्यपदेशः। व्याक्यार्थाभिनयो नाट्यम्। घटादौ तु नृत्यं नृत्तं चार्थः। यत्कारिषु नर्त्तकव्यपदेशः। पदार्थाभिनयो नृत्यम्। गात्रविक्षेपमात्रं नृत्तम्। केचित्तु घटादौ 'नट नृतौ' इति पठन्ति। 'गतौ' इत्यन्ये। णोपदेशपर्य्युदासवाक्ये भाष्यकृता 'नाटि' इति दीर्घपाठाद्घटादिर्णोपदेश एव। ष्टक ७८२ प्रतीघाते। स्तकति। चक ७८३ तृप्तौ।

तृप्ति-प्रतिघातयोः पूर्व्वं पठितस्य तृप्तिमात्रे भिन्नार्थोऽनुवादः। आत्मनेपदिषु पठितस्य परस्मैपदिष्वनुवादात् परस्मैपदम्। कखे ७८४ हसने। एदित्वान्न वृद्धिः। अकखोत्। रगे ७८५ शङ्कायाम्। लगे ७८६ सङ्गे। ह्रगे ७८७ ह्लगे ७८८ षगे ७८९ ष्टगे ७९० संवरणे। कगे ७९१ नोच्यते। 'अस्यायमर्थं' इति विशिष्य नोच्यते। 'क्रियासामान्यार्थवाचित्वादि'त्यन्ये। अक ७९२ अग ७९३ कुटिलायां गतौ। कण ७९४ रण ७९५ गतौ। चकाण। रराण। चण ७९६ शण ७९७ श्रण ७९८ दाने च। 'शणगतौ'इत्यन्ये। श्रथ ७९९ स्नथ क्नथ८०० क्रथ ८०१ क्लथ ८०२ हिंसार्थाः। 'जासिनिप्रहणेति—(६१७) सूत्रे क्राथेति मित्वेऽपि वृद्धिर्निपात्यते। क्राथयति। मित्वन्तु निपातनात् परत्वात् 'चिण्णमुलोः—' (२७६२) इति दीर्घ

चरितार्थम्। अक्रथि—अक्राथि। क्रथं—क्रथम्। क्राथं—क्राथम्।

वन ८०३ च। हिंसायामिति शेषः। वनु च नोच्यते। 'वनु' इत्यपूर्व्व एवायं धातुर्न तु तानादिकस्यानुवादः। उदित्करणसामर्थ्यात्। तेन क्रियासमान्ये वनतीत्यादि। प्रवणयति। अनुपसृष्टस्य तु मित्त्वविकल्पो वक्ष्यते। ज्वल ८०४ दीप्तौ। णप्रत्ययार्थं पठिष्यमाण एवायं मित्त्वार्थमनूद्यते। प्रज्वलयति। ह्वल ८०५ ह्मल ८०६ चलने। प्रह्वलयति। प्रह्मलयति।

स्मृ ८०७ आध्याने। चिन्तायां पठिष्यमाणस्य आध्याने मित्त्वार्थोऽनुवादः। आध्यानमुत्कण्ठापूर्व्वकं स्मरणम्। 'दॄ ८०८ भये। दॄ विदारणे' इति क्र्यादेरयं मित्त्वार्थोऽनुवादः। दृणन्तं प्रेरयति दरयति। भयादन्यत्र दारयति। धात्वन्तरमेवेदमिति मते तु दरतीत्यादि। केचित्तु घटादौ 'अत्स्मृदृत्वर—' (२५६६) इति सूत्रे च "दॄ" इति दीर्घस्थाने ह्रस्वं पठन्ति। तन्नेति माधवः। नॄ ८०९ नये। क्र्यादिषु पठिष्यमाणस्यानुवादः। नयादन्यत्र नारयति।

श्रा ८१० पाके। श्रै इति कृतात्वस्य श्रा इत्यादादिकस्य च सामान्येनानुकरणम्। 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य' (परि ९१), 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' (परि ११४) इति परिभाषाभ्याम्। श्रपयति—विक्लेदयतीत्यर्थः। पाकादन्यत्र श्रापयति। स्वेदयतीत्यर्थः।

मारणतोषणनिशामनेषु—ज्ञा ८११। निशामनं चाक्षुषज्ञानमिति माधवः। ज्ञापनमात्रमित्यन्ये। 'निशानेषु' इति पाठान्तरम्। निशानं तीक्ष्णीकरणम्। एषु वार्थेषु जानातिर्मित्। 'ज्ञप मिच्च' इति चुरादौ। ज्ञापनं मारणादिकं च तस्यार्थः। कथं 'विज्ञापना भर्तृषु सिद्धिमेति' इति तथा 'ज्ञापयत्याचार्य्यः' इति च। शृणु—माधवमते अचाक्षुषज्ञाने मित्त्वाभावात्। ज्ञापनमात्रे मित्त्वमिति मते तु 'ज्ञा नियोगे' इति चौरादिकस्य। धातूनामनेकार्थत्वात्। निशानेष्विति पठतां हरदत्तादीनां मते तु न काप्यनुपपत्तिः।

कम्पने चलिः ८१२। चल कम्पने इति ज्वलादिः। चलयति शाखाम्। कम्पनादन्यत्र तु शीलं चालयति। अन्यथा करोतीत्यर्थः। 'हरतीत्यर्थः' इति स्वामी। सूत्रं चालयति। क्षिपतीत्यर्थः। छदि ८१३ ऊर्जने। 'छद अपवारणे इति चौरादिकस्य स्वार्थे णिजभावे मित्वार्थोऽयमनुवादः। अनेकार्थत्वादूर्ज्जनेऽर्थे वृत्तिः। छदन्तं प्रयुङ्क्ते छदयति। बलवन्तं प्राणवन्तं वा करोतीत्यर्थः। अन्यत्र छादयति। अपवारयन्तं प्रयुङ्क्ते इत्यर्थः। स्वार्थे णिचि तु छादयति। बलीभवति। प्राणीभवति। अपवारयति वेत्यर्थः। जिह्वोन्मथने लडिः ८१४। "लड विलासे' इति पठितस्य मित्वार्थोऽनुवादः। उन्मथनं क्षोभनम्। जिह्वाशब्देन षष्ठीतत्पुरुषः। लडयपि जिह्वाम्। तृतीयातत्पुरुषो वा। लडयति जिह्वया। अन्ये तु जिह्वाशब्देन

तद्व्यापारो लक्ष्यते । समाहारद्वन्द्वोऽयम् । लडयति शत्रुम् । लडयति दधि । अन्यत्र लाडयति पुत्रम् ।

मदी ८१५ हर्षग्लेपनयोः । ग्लेपनं दैन्यम् । दैवादिकस्य मित्त्वार्थोऽयमनुवादः । मदयति हर्षयति ग्लेपयति वेत्यर्थः । अन्यत्र मादयति चित्तविकारमुत्पादयतीत्यर्थः । ध्वन ८१६ शब्दे । भाव्ययं मित्वार्थमनूद्यते । ध्वनयति घण्टाम् । अन्यत्र ध्वानयति अस्पष्टाक्षरमुच्चारयतीत्यर्थः । अत्र भोजः 'दलिवलिस्खलिरणि ध्वनित्रपिक्षपयश्च' इति पपाठ । तत्र 'ध्वनिरणौ' उदाहृतौ । 'दल विशरणे' । 'वल संवरणे' । 'स्खल सञ्चलने' । 'त्रपूष् लज्जाया'मिति गताः । तेषां णौ दलयति । वलयति । स्खलयति । त्रपयति । 'क्षै क्षये' इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः । क्षपयति । स्वन ८१७ अवतंसने । शब्दे इति पठिष्यमाणस्यानुवादः । स्वनयति । अन्यत्र स्वानयति । 'घटादयो मितः' ( गणसूत्र—१८७ ) मित्संज्ञका इत्यर्थः ॥ 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' ( गणसूत्र—१८८ )—'मितः' इत्यनुवर्त्तते । 'जृष्' इति षित्वनिर्देशाज्जीर्यतेर्ग्रहणम् । जॄणातेस्तु—जारयति । केचित्तु 'जनीजॄष्णसु—' इति पठित्वा 'णसु निरसने' इति दैवादिकमुदाहरन्ति ।

'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' ( गणसूत्र १८९ )—एषां मित्त्वं वा । प्राप्तविभाषेयम् । ज्वलयति—ज्वालयति । उपसृष्टे तु नित्यं मित्वम् । प्रज्वलयति । कथं तर्हि प्रज्वालयति ।

उन्नामयतीति। घञन्तात्—'तत्करोति—' इति णौ। कथं संक्रामयतीति। 'मितां ह्रस्वः' (२५६८) इति सूत्रे 'वा चित्तविरागे' (२६०५) इत्यतो वेत्यनुवर्त्य व्यवस्थित—विभाषाश्रयणादिति वृत्तिकृत्। एतेन 'रजो विश्रामयन् राज्ञाम्', 'धुर्य्यान् विश्रामयेति सः' इत्यादि व्याख्यातम्।

'ग्ला स्नावनुवमां च' (गणसूत्र १९०)—अनुपसर्गादेषां मित्त्वं वा स्यात्। आद्ययोरप्राप्ते इतरयोः प्राप्ते विभाषा।

"न कम्यमिचमाम्" (गणसूत्र १९१)—अमन्तत्वात् प्राप्तं मित्त्वमेषां न स्यात्। कामयते। आमयति। चामयति॥ "शमो ८१८ दर्शने" (गणसूत्र १९२)। शाम्यतिर्दर्शने मिन्न स्यात्। निशामयति रूपम्। अन्यत्र तु 'प्रणयिनो निशमय्य वधूकथाः'। कथं तर्हि 'निशामय तदुत्पत्तिं विस्तराद् गदतो मम' इति। 'शम आलोचने' इति चौरादिकस्य। धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः शाम्यतिवत्। "यमो ८१९ अपरिवेषणे" (गणसूत्र—१९३) यच्छतिर्भोजनतोऽन्यत्र मिन्न स्यात्। आयामयति। द्राघयति व्यापारयति वेत्यर्थः। परिवेषणे तु यमयति ब्राह्मणान् भोजयतीत्यर्थः। 'पर्य्यवसितं नियमयन्' इत्यादि तु नियमवच्छब्दात् तत् करोतीति णौ बोध्यम्। "स्खदिर् ८२० अवपरिभ्यां च" (गणसूत्र—१९४) मिन्नेत्येव। अवस्खादयति। परिस्खादयति। 'अपावपरिभ्यः' इति न्यासकारः। स्वामी तु 'न कमि—' इति नञमुत्तर-

त्रिसूत्रग्रामननुवर्त्त्य 'शमः अदर्शने' इति चिच्छेद । यमस्तु 'अपरिवेषणे' मित्त्वमाह । तन्मते 'पर्य्यवसितं नियमयन्' इत्यादि सम्यगेव । 'उपसृष्टस्य स्वदेश्चे दवादिपूर्व्वस्य इति नियमात् प्रस्खादयतीत्याह । तस्मात् सूत्रद्वये उदाहरण-प्रत्युदाहरणयोर्व्यत्यासः फलितः । इदञ्च मतं वृत्तिन्यासादि-विरोधादुपेक्ष्यम् ।

फण ८२१ गतौ । 'न' इति निवृत्तमसम्भवात् । निषेधात् पूर्व्वमसौ न पठितः ( मयेति शेषः ) ; फणादिकार्य्यानुरोधात् ।

Now we are going to take up परस्मैपद roots ( of घटादि class ) up to फण (४२१) गतौ—(where the घटादि class comes to a close) ; ज्वर like घट will give ज्वरयति—संज्वरयति ; ज्वरं ज्वरम् ; ज्वारं—ज्वारम् (णमुल) ; and अज्वरि—अज्वारि ( चिण् ) ; similarly all roots up to फण ( including ). हेड to surround :—The root हेडृ is spoken of in the list of टवर्गीयान्त भ्वादि roots (see हेडृहोडृ (२८४—८५) अनादरे under अक्षतसाव्व°—( २२९८ ) । This very root हेडृ is again taken up here, apart from the indicatory ऋ with a view to making it मित् and that in a different sense ( viz to surround ). It ( हेड ), ought to have been read before the परस्मैपदी ज्वरादि roots ( because the root हेडृ is read in the आत्मनेपदी list ), but as it is read within the list ( ज्वरादि परस्मै—) so (on this ground ) it is to be treated as परस्मैपदी । Thus हेडति—जिहेड ( ए=इ by 'ह्रस्वः' and 'एच इग्ह्रस्वादेशे' and ह = ज by 'कुहोश्चुः' ( 2243 ) हिडयति ( by मितां ह्रस्वः ) । अहिडि— अहीडि

(alternatively दीर्घ—by चिण्णमुलोः—(२७६२)। But in the sense of 'disregarding' the form will be हेडयति (because it is not मित् there and therefore not ह्रस्व) वट (root no. ३००) भट (३०७) and णट (३१०)—see under the rule 'ज्ञान्तचण—(२२९९)। इत्यम् etc.—णट is read as such also beforehand. Now the difference in meaning between the two is this:—The former means नाट्य (play)—the performers of which are termed as नटs (actors); and नाट्य means to act in words (and gestures) the subject or the time of the play: (Thus शकुन्तला विषादं नाटयति etc.); whereas this घटादि णट—means नृत्य as well as नृत्त—the actors of which are called dancers. Of the two again—नृत्य means to dance so as to bring out the sense with the help of feet (thus माधुरी नटति नटयति etc) and नृत्त means to move only (some parts of) the limbs. Some read it in घटादि (i. e. here) as णट नतौ 'to bow down' and others as णट गतौ 'to go.' The भाष्यकार in the sentence—अनड्‌नाटि (see 'णो नः' (२२८६) has mentioned नाटि as दीर्घ and not the short नट। Hence by this पर्युदासविधि, the root णट—is षोपदेश। चक was first read in आत्मनेपदी list as 'चक तृप्तौ प्रतीघाते च' and here it is read again as 'चक तृप्तौ' meaning thereby that in this sense only the root is मित् (चकयति) and also being read within the परस्मैपद roots is also परस्मै—कगे नोच्यते—The term 'नोच्यते' (न—उच्यते) means 'its particular sense is not pointed out (by me)'; for it is a verb in general and may bring out any sense, the speaker wishes to express by it, Others hold that because the root has multifarious

meanings so it is not read with its special meaning ( by Panini ). जासिनिप्रहण—etc.—Though the root क्रथ being मित् ( because it is read under घटादि ) the form should have been क्रथयति ( by मितां ह्रस्वः ), yet it ( क्रथ ) gives क्राथयति ( and not क्रथयति ) in an irregular way ( निपातने ) on the strength of its being read as क्राथ in the rule 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' ( ६१७—२।३।५६ ); and the मित्त्व is valid only in the दीर्घविधि in चिण् and णमुल by the rule 'चिण्णमुलोः—' ( २७६२ ) because this rule comes after (६।४।९३ the निपातन expressed in 'जासिनिप्रहण—' ( २।३।६५ )। The drift is—though the rule 'मितां ह्रस्वः' ( २५६८—६।४।९२ ) is also पर i.e subsequent to जासिनिप्रहण—' (२।३।५६) and not चिणमुलोः—'(६।४।९३) only yet by the परिभाषा—'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' ( परि ५९ )—'Apavadas that precede ( the rules which teach operations that have to be superseded by the Apavada operations ) supersede ( only ) those rules that stand nearest to them, ( and ) not the subsequent ( rules )'—( Kielhorn ). Thus 'जसिनिप्रहण—' ( २।३।५६ ) bars 'मितां ह्रस्वः' ( ६।४।९२ ) which is nearest and not 'चिणमुलोः—' ( ६।४।९३ ) which is subsequent ( उत्तर )। Hence we cannot have क्रथयति by 'मितां ह्रस्वः' but 'चिण्णमुलोः—' not being barred we can have as usual अक्रथि—अक्राथि in चिण् and क्रथं—क्रथम्, क्राथम्—क्राथम् in णमुल्।

'वनु च नोच्यते' etc—'वनु is a quite new root and not the re-expression of the तनादि वनु ( 1471 ) याचने ( see under the rule—'तनादिभ्यस्तथासोः ( 2547 ) on the authority of making it उदित्। The idea is this—Had this वनु been the

अनुवाद or re-expression of 'वनु याचने—' of the तनादि class, then making it उदित् again becomes superfluous for it was already made उदित् there ( in तनादि ). Hence it is a separate root and does not belong to the तनादि class. Thus it expresses a verb in general and is conjugated as वनति etc. For मित्करण, it will give प्रवनयति etc with उपसर्ग prefixed to it but that—without उपसर्ग it will give वनयति—वानयति through the option of मित्त्व—will be expressed later on ( i,e. under the गणसूत्र 'ग्लास्नावनुवमाश्च' ( 190). [ N.B. वन च हिंसायाम् (before वनु च नोच्यते ) is the re-expression of 'वन (462 ) शब्दे' and 'वन ( 463 ) संभक्तौ' under 'दीर्घो लघोः' (2818 ) to make it मित् so as to give वनति—वनयति, अवनि—अवानि ( चिण् ) and वनं—वनम्, वानं—वानन् (णमुल् ]. ज्वल to shine. It will be read in 'ज्वलिति-कसन्तेभ्यो णः' ( २९०२—3. 1. 140 ) under कृत्प्रकरण and here it is read to make it मित् to effect प्रज्वलयति etc.

स्मृ आध्याने—आध्यान means to think fervently ( of some one)'. This root will be read as 'स्मृ—( 933 ) चिन्तायाम्' under the rule 'स्मृक: किति' (2381—7. 2. 11 ) and here it is read to show that it is मित् in the sense of 'fervent-thought' only. The forms are स्मरति—स्मरयति ; अस्मरि—अस्मारि etc. दृ—to fear is the अनुवाद or transferred form of दृ, 'to rend' read in क्र्यादि, to make it मित् । Thus in णिच् the form will be दरयति in the sense of 'causing one (दृणन्तम्—दृ + शतृ + २या १व ) to fear'. In the sense other than to fear it will give दारयति—causing to rend—for in that sense it will cease to be मित् and hence

the form is दीर्घ। According to those, however, who hold that it is a separate root and not the transcription of 'दृ to rend' (क्र्यादि), the form will be दरति etc prescribed for भ्वादि। Some read this दॄ to fear, read here in घटादि and also in the rule 'ऋत्स्मृदॄत्वरप्रथम्रदस्तॄस्पशाम्' (2566) as दृ (short) and not as दॄ (दीर्घ); but that is not recommended by Madhava, the author of धातुवृत्ति। नॄ to lead.— It is the transcription (अनुवाद) of नॄ (1496) नये to be read in क्र्यादि under the rule ('प्वादीनां ह्रस्वः' 2558). In the sense other than 'to lead' it will cease to be मित् and the forms will be नारयति etc.

श्रा to cook, or to ripen etc. This श्रा is the imitation form, in a general way, both of श्रै (919) पाके after it has been made to end in आ (by the rule 'आदेच उपदेशेऽशिति' (2370—6. 1. 59) to be read (later on) in भ्वादि and of 'श्रा (1053) पाके to be spoken of in अदादि (under 'लङः —' 2463 —3.4.111) by the परिभाषाs 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव' and 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' (परि—90 and 105). Now the अदादि class is known as लुग्विकरण (by the rule 'अदिप्रभृतिभ्यः शपः' (2423) and other classes like भ्वादि etc are called अलुग्विकरण। Hence the former (परिभाषा) means 'when there arises a case of doubt regarding the taking up of a root or term which is read both in the लुग्विकरण class and in the अलुग्विकरण class, (then) that root or term should be taken to belong to the अलुग्विकरण class only. Thus in this case भ्वादि being अलुग्विकरण, this 'घटादि श्रा' is to be taken

to be the transcription ( अनुकरण ) of श्रै भ्वादि ( after it has been made to end in श्रा (कृतात्व ) and not of श्रा of लुग्विकरण ( अदादि )। The latter ( परि ) means 'when, as to the taking up of a root or term which is expressed both directly ( प्रतिपदोक्त ) and indirectly ( लक्षणोक्त ), a doubt should occur then that root or term must be taken to belong to the spot where it is directly mentioned'. Thus this परिभाषा directs us to take this 'घटादि श्रा' as the imitation form of 'अदादि श्रा' and not भ्वादि श्रै which is made श्रा in an indirect way. Hence through the authority of these two परिभाषाs we are to take this 'घटादि श्रा' as an imitation form of both 'भ्वादि श्रै' and अदादि 'श्रा' in a general way. Thus in श्रिच्—श्रपयति—is boiling or causing to boil' ( with the augment पुक् by अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ' ( 2570—7. 3. 36). In a sense other than cooking, the root श्रा will not be considered as मित् and hence the form will be श्रापयति ( दीर्घ ) meaning 'causing to perspire or warm'.

The root ज्ञा means 'to kill, to satisfy and to perceive' and in these senses the root is मित्। Madhava says that निशामन means 'eye-perception', while others say that it simply means 'information'. Another reading for निशामनेषु is निशानेषु where निशान means 'to sharpen'. The root ज्ञप expressed in 'ज्ञप मिच्' is read in चुरादि and its sense is to inform and to kill. Thus the instances of the root ज्ञा in those senses will be in order—पशुं संज्ञपयति ( kills ), स्वामिनं ज्ञपयति

२२६४—। ऊदुपधाया: गोहः ॥ ६।४।८९ ॥

दी—। गुह उपधाया ऊत् स्याद् गुणहेतावजादौ प्रत्यये। गूहति—गूहते। ऊदित्वादिड् वा। गूहिता—गोढा। गूहिष्यति—घोक्ष्यति। गूहेत्। गुह्यात्। अगूहीत्। इडभावे क्सः। अघुक्षत्।

The उपधा or penultimate i.e. the उ of गुह become ऊ (ऊत्) when an affix which begins with a vowel and at the same time occasions गुण। Thus गुह् शप् तिप् (and ते) गूहति—गूहते. (Here अति (शप्+तिप्) and अते are considered as गुणहेतु). The root being ऊदित्, the augment इट् will come optionally गूह इट् ता=गूहिता (here ता along with इट् (इता) is considered an अजादिप्रत्यय hence the ऊदादेश)। गुह+ता=गोह् ता (by 'पुगन्त—' (2189))—गोढ् धा (by 'हो ढः' (324—8. 2. 31) and 'झषस्तथोर्धोऽधः' (2280—8. 2. 40))=गोढ्ढा (by 'ष्टुनाष्टुः' (113))=गो ० ढा (by ढो ढे लोपः (2335—8. 3. 13)). This is in the इडभावपक्ष। गूहिष्यति,—घोक्ष्यति (option of इट in लृट्)। In the former case (गूहिष्यति) इष्यति is a गुणहेतु अजादिप्रत्यय hence ऊत्त्व। In the latter case गुह्+ष्यति=गोढ्क् स्यति (by 'षढोः कः सि' (295))=घोक् ष्यति (by 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (326—8. 2. 37))=घोक्ष्यति। In आत्मने—गूहिष्यते—घोक्ष्यते। गूहेत्—(विधिलिङ्)। गुह्यात्—(आशीर्लिङ्) here there being no अजादिप्रत्यय there is no ऊत्त्व and it being कित् there is no लघूपधगुण and finally गुह having no उ at the end, the rule 'अकृत्सार्व—' (2298) does not apply; hence no दीर्घादेश)। अगूहीत्—(लुङ् इट पक्ष) गु is

changed to गू for इट् is an अजादिप्रत्यय। Thus अट गुह इट् सिच् ईट त्=अगुह इ इष् ईत्=अगूहीत् ( सलोप by 'इट ईटि' ( 2266 ). When इट is wanting, on account of its ऊदित्व क्स will come in by 'शल इगुपधात्—' ( 2336 ) giving अघुक्षत्—अट् गुह क्स तिप्=अगूह् स त्। There being no अजादि प्रत्यय—गुह is not long and क्स being कित् it ( गुह ) is not gunnated. Thus the result is अगुह् सत्=अगुढ् स त् ('हो ढः')=अघूक् स त ( by 'एकाचो बशो भष्—' ग is changed into घ and by 'षढोः कः सि', ढ is replaced by क् then by षत्व the form is )=अघुक्षत्। Other forms in परस्मै. लुङ् are अगूहिष्टाम्—अगूहिषुः etc and अघुक्षताम्—अघुक्षन् etc.

मित—। ऊत्+उपधायाः+गोहः इतिच्छेदः। गोह उपधायाः स्थाने ऊकारः स्यादिति सामान्यतोऽर्थः। गोह इति किम्? गुह इत्यस्य विकृतो निर्द्देशः। कथमित्थंकारं निर्द्देशः। गुणग्रहणं यथा प्रत्याख्यायेत इति कृत्वैवं निर्द्देशः। अतएव वृत्तौ आह—गुह उपधाया ऊत् स्याद्गुणहेताविल्यादि। अजादौ इति 'अचि श्नु—' इत्यतो'ऽचि' इत्यनुवर्त्त्य तेन अङ्गाक्षिप्तप्रत्ययो विशेष्यते। विशेषणत्वाच्च तदादिविधिस्तदाह—अजादौ प्रत्यये परे इति। गूहति—गूहते—अत्रोभयत्र शपः अजादिप्रत्ययत्वमादाय ऊदादेशो विहितः। एवमन्यत्र। एवञ्च गुणहेतावित्युक्तत्वाद् गुणापवादो ज्ञेयः। अन्यथा हि लघूपधगुण एवात्र स्यादिति दिक्। ऊदित्वादिति—गूहिता—गोढ़ा ( लुटि इड्विकल्पात् रूपद्वयम् )। तत्र पूर्व्वत्र इटोऽजादित्वमादाय ऊत्त्वम्। ततश्च गुणाभावः। अन्यत्र तु इडभावे गुह् ता इति स्थिते लघूपधगुणे गोह् ता इति जाते 'होढः' ( ३२४ ), 'झषस्तथोर्धोऽधः' (२२८०) 'ष्टुना ष्टुः' ( ११३ ) 'ढो ढे लोपः' इति क्रमेण—ढत्वधत्वष्टुत्वढलोपेषु——कृतेषु गोढ़ा इति। गूहिष्यति—घोक्ष्यति ( लृटि परस्मैपदपक्षे रूपे ) गूहिष्यतीति पूर्व्ववत्। घोक्ष्यति इत्यत्र त्वयं विशेषः—गुह् स्यति—गोह् स्यति—घोढ् स्यति 'एकाचो—'इति गकारस्य

भषभावेन घकारः 'हो ढः'इति च हकारस्य ढकारः ततः घोक्ष्यति—'षिढोः कः सि' इत्यनेन)•ततः षत्वे इण्कोरादेशप्रत्यययोः इति, यथोक्तं रूपम् । गूहेत्—(विधिलिङ्) । गुह्यात् आशीर्लिङि अजादिप्रत्ययाभावात् 'किदाशिषि' इति कित्वेन गुणाभावात्—'अक्ङित्साव्वे—' इत्यस्याविषयत्वाच्च ऊत्त्वगुणदीर्घनिषेधा वोध्याः । लुङ्यपि ऊदित्वेन 'स्वरति—' 2279 इति इड्विकल्पादाह—अगूहीत् (इट—अजादित्वात् पूर्ववत् ऊत्वादि ) इत्यादि—इडभावे अघुक्षत्—अट् गुह् क्स ( शल इगुपधात्—' (२३३६) त्—ततो भष्भावाद ढत्वकत्वषत्वेषु सत्सु अघुक्षत् । अथ गूहतेरात्मनेपदपक्षे लुङि विशेषमाह—

२३६५ । लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥७।३।७३॥

दो— । एषां क्सस्य लुग् वा स्याद्दन्त्ये तङि । ढत्वधत्वष्टुत्व-ढलोपदीर्घाः । अगूढ़—अघुक्षत । 'क्सस्याचि' ( २३३७ ) इत्यन्तलोपः । अघुक्षाताम् । अघुक्षन्त । अगुह्वहि—अघु-क्षावहि । अघुक्षामहि ।

अथाजन्ता उभयपदिनः । श्रिञ् ८८७ सेवायाम् । श्रयति—श्रयते । शिश्रियतुः । श्रयिता । 'णिश्रि—' (२३१२) इति चङ् । अशिश्रियत् । भृञ् ८८८ भरणे । भरति । बभार । बभ्रतुः । बभर्थ । बभृव । बभृषे । भर्त्ता ।

The affix क्स after दुह, दिह, लिह and गुह elides optionally when a dental तङ् i.e. आत्मनेपद affix follows. Thus when there is elision of क्स there will occur ढत्व धत्व, ष्टुत्व, ढलोप and दीर्घ [i.e. ढत्व of ह् by 'हो ढः' ( 824 ), धत्व of त by 'झषस्तथोर्धोऽधः' ( 2280 ), ष्टुत्व i. e. ढत्व of this धत्व by 'ष्टुना ष्टुः' ( 113 ), ढलोप i. e. the former ढ of हो ढः disappears by 'ढो ढे लोपः'

( 2335 ) and दीर्घ i. e. longness of the penult—( उपधा ) of गुह by 'ढ्लोपे पूर्व्वस्य दीर्घोऽणः' ( 174—6. 3. 111) operate ] in order giving अगूढ़ ( the root cannot have क्स because there is no अजादि affix and it is not gunnated for क्स is कित् ) and when there is क्स present the form is अघुक्षत ( see अघुक्षत् in the preceding rule ). अघुक्ष drops its last accent 'अ' when आताम् and अन्त follow by 'क्सस्याचि ( 2337 ) and through the result of this elision we get अघुक्षाताम्—अघुक्षन्त and not अघुक्षेयाताम् etc. by 'आतो ङितः' ( 2235 ). अगुह्वहि—अट् गुह् क्स वहि ( क्सलुक् )=अगुह्वहि the व of वहि is दन्त्योष्ठ hence 'होढः' ( 324 ) does not apply and गुह is not gunnated for क्स is कित्। अघुक्षावहि ( alternative form—here ग is turned into घ by 'एकाचो—' ( 326 ) and 'आ' comes in by 'अतो दीर्घो यञि' )। अघुक्षामहि—here अगुह्महि cannot be taken as an alternative form for म is ओष्ठ्य दन्त्य। दुह, दिह, लिह will give अधुग्ध—अधुक्षत, अदिग्ध—अधिक्षत and अलीढ—अलिक्षत etc. Here end गूहत्यन्ता स्वरितेतः।

अथाजन्ता etc.—upto नीञ् ( 901 ) प्रापणे। श्रयति—श्रयते ( श्रि+शप्+तिप्=श्रे अ ति by 'सार्व्वधातकार्द्ध—' ( 2168 )=श्रय् अ ति by 'एचोऽयवायावः' ( 61 )=श्रयति। Similarly श्रयते। शिश्रियतुः—श्रिश्रि अतुस्=शि श्रि अतुस ( by 'हलादिः शेषः' )=शि श्रियङ् अतुस् by 'अचिश्नु-धातुभ्रुवां य्वोरियङुवङौ' ( 271—6. 4. 77 )=शिश्रिय् अतुः। In णल—शिश्राय by 'अचो ञ्णिति' ( 254—7. 2. 115). Similarly शिश्रियुः etc. Other forms are—शिश्रियिथ, शिश्रियथुः, शिश्रिय, शिश्राय—शिश्रय, शिश्रियिव, शिश्रियिम ( Note that in शिश्रियिथ etc. the augment

इट् passes for an अजादि affix and hence comes इयङ् )। श्रयिता —लुट् गुण इट्। श्रि occurs in the rule 'णिश्रिद्रुस्रुभ्य: कर्त्तरि चङ्' ( 2312 ). Hence it does neither take सिच् nor अङ्। Thus अशिश्रियत्—अट्+श्रि+चङ्+तिप्=अ श्रि श्रि अत् by 'श्लि' ( 2315 )= अशिश्रियत् by 'हलादि: शेष:' and 'अचिश्नु etc.' भृ—to maintain. भरति—भरते like श्रयति—श्रयते। बभार—by 'अचो ञ्णिति' (254 )। बभ्रतु:— भृ भृ अतुम्=भृ अतुम् ( by इको यणचि' ( 47 ) here भृ is not gunnated according to 'असंयोगाल्लिट् कित्' ( 2242 ) )=भर् भृतुम् ( by 'उरत्' ( 2244 ) and 'उरण् पर:' ( 70—1. 1. 51 ) and 'इको—' (47) =भभ्रतु: ( by हलादि:— )=बभ्रतु: ( by 'अभ्यासे चर्च' ( 2182 ) ).

Similarly बभ्रु:। बभर्थ—थल् is पित्, being the substitute of सिप् which is पित् then by 'पित्सु गुण:' भृ is gunnated. You can not expect to have बभरिथ with इट् for भृ falls under the क्रादि restriction, mentioned in 'कृसृभृवृ—' ( 2293 ). Thus बभृव etc, without इट् and गुण:. Similarly बभृषे—भर्त्ता etc.

मित—। लुक्+वा, दुह-दिह-लिह-गुहाम्+आत्मनेपदे, दन्त्ये—इतिच्छेद:। लुक् लोपो वेतुच्यते। कस्य वा लोप: स्यात — 'क्सस्याचि' ( २३३७—७।३।७२ ) इत्यत: 'क्सस्य' इत्यनुवर्त्तनात् तस्यैव लोप:। किम्भूतस्य क्सस्य लोप:—दुह, दिह, लिह गुह इत्येषां परवर्त्तिन:। कदा लोप:। यदा—दन्त्योच्चारणी आत्मनेपदविभक्ति: परतो भवेत् तदा। अत आह—एषामित्यादि। अथ अगूढ़ इत्यत्र प्रक्रियां दर्शयति— ढलेत्यादि—अगुह्+क्स+त इति स्थिते क्सस्य कित्वाद् गुणाभावे ततोऽनेन तस्य लोपे अगुह्० त इति जाते 'होढ:' ( ३२४ ) इति ढत्वम् एवम् अगुढ् त इति स्थिते 'झषस्तथोर्धोऽध:' ( २२८२ ) इति तकारस्य धत्वम् 'इति अ गुढ् ध इति जाते 'ष्टुना ष्टु:' ( ११२ ) इति धकारस्य ष्टुत्वेन ढत्वम् तत: 'ढो ढे लोप:' ( २३३५ ) इति ढलोप: ततो 'ढ्लोपे पूर्व्वस्य दीर्घोऽण:' ( १७४ ) इति उपधोकारस्य

दीर्घे—अगूढ़ इति सिद्धम्। क्सपक्षे—अघुक्षत इति अघुक्षत् इतिवदत्र प्रक्रिया। क्सस्याचि इति अनेन अलोऽन्त्यस्य इत्यकारमात्रस्य लोपस्तेन अघुक्षाताम्—अघुक्षन्त इति सिध्यतः। अन्यथा 'आतो ङितः' इत्यनेन—अघुक्षेयाताम् इत्यादि स्यादिति ज्ञेयम्। अगुह्वहि क्सस्य सद्भावात्—गुणाभावे ततः क्सस्य लोपे रूपम्। क्सपक्षे तु—'अतो-दीर्घो यञि' इति 'भवावः' इत्यादिवद्दीर्घः। अघुक्षामहि अत्र मकारस्य ओष्ठ्य-त्वेन दन्त्यत्वाभावात् क्सस्य लोपो न। दुहादीनान्तु—अदुग्ध—अधुक्षत। अदिग्ध अधिक्षत। अलीढ़—अलिक्षत इत्यादि। दन्त्ये तङि किम्—अघुक्षाताम् इत्यादि।

अथाजन्ताः इति—णीञ् नये—(९०२) इत्यन्ता इत्यर्थः। अयति—श्रयते—'सार्व्व—(२१६८) इति गुणे अयादेशे च रूपम्। णलि—शिश्राय—'अचो ञ्णिति' (२५४) इति वृद्धिः। अतुसि—शिश्रियतुः—द्वित्वहलादिशेषेयङादेशाः ('अचिश्नु—' (२७१) इतीयङ्) तासि—श्रयिता—गुणः अयादेशश्च। लुङि—अशि-श्रियत्—'णिश्रि—' (२३१२) इति चङ्। 'चङि' (२३१५) इति द्वित्वम्। ततः पूर्व्ववद्द्वित्वादिशेषेयङादेशादयः। लिटि थलि वमयोश्च इडागममजादिप्रत्यय-त्वेनादाय इयङादेशो वोध्यः शिश्रयिथ—शिश्रियिव—शिश्रियिम इति। अजाद्यभावे तु शिश्रेथ इति। 'णलुत्तमो वा' इति शिश्राय—शिश्रय—वृद्धिविकल्पः। भृञ् इति—भरणे इत्याद्यपि वोध्यम्। वभार—भृ भृ णल् इति स्थिते भभार अ (अचो ञ्णिति (२५४) इति वृद्धिः) भर्भार (उरत्—' 'उरण् रपरः' इत्यत् रपरत्वञ्च) भभार—वभार (अभ्यासे चर्चेति जशत्वम्)। अतुसि—वभ्रतुः। कित्वेन गुणाभावात्— 'इको यणचि—' (४७) इति यण्। इथं पूर्व्ववत्। उसि—वभ्रुः क्रादिनियमादिडभावे गुणा-भावो यण् (क्रसृभृव—', (२२९३) इति सूत्रमत्र प्रमाणम्)। वभर्थ—थलि पूर्व्ववदिडभावे अजादिप्रत्ययाभावो गुणः थलः सिबादेशत्वेन पित्त्वादिति ज्ञेयम्। वमयोस्तु पित्त्वाभावात्—गुणाभावेन वभृव—वभृम इति। वभृषे इत्यादि पूर्व्ववत्। भर्त्ता—लुट्।

२३६६। ऋद्धनोः स्ये ॥७।२।७०॥

दी—। ऋतो हन्तेश्च स्यस्य इट् स्यात् । भरिष्यति ।

The augment इट् is prefixed to the affix स्य ( of लृट् and लृङ् ) coming after a ऋदन्त root and the root हन् ( to kill ). Thus भरिष्यति etc. by गुण under सार्व—( 2168 ).

मित—। ऋत् ( ऋदन्तो धातुः ) च हन् च ऋद्धनौ ( द्वन्द्वः ) तयोरिति पञ्चम्यर्थे षष्ठीद्विवचनम् । ऋकारान्तात् धातोर्हन्तेश्च परत इत्यर्थलाभः । 'आर्द्धधातुकस्येड्वलादेः' ( २१८४—७।२।३५ ) इत्यत इडित्यनुवर्त्तते । स्ये इति षष्ठ्यर्थे सप्तमी तदाह—स्यस्य इडिति । स्य इति च लृङ्लृटोर्ग्राहक इति बोध्यम् । भरिष्यति—इति गुणे रूपम् ।

## २३६७ । रिङ् शयग्लिङ्क्षु ॥७।४।२८॥

दी—। शे यकि यादावार्द्धधातुके लिङि च ऋतो रिङादेशः स्यात् । रीङि प्रकृते रिङ्विधिसामर्थ्याद्दीर्घो न । भ्रियात् ।

रिङ् ( रि ) is substituted for the ऋ ( of a ऋकारान्त root) when ( the तुदादिविकरण ) श, यक् and the आर्द्धधातुकलिङ् ( i.e. आशीर्लिङ् ) affix beginning with a य follow. Thus भृयात्= भ्रियात्, here you cannot argue that भ्रि will be turned into भ्री ( दीर्घ ) by अकृत्सार्व—( 2298 ), for had the दीर्घ form भ्रीयात् been intended by Panini he could have dispensed with this 'रिङ्' and have only said 'शयक्लिङ्क्षु' for the immediately preceding rule is 'रीङ् ऋतः' ( 7. 4. 27 ). Hence on the strength of the injunction of रिङ्, there will be no दीर्घ by 'अकृत्— etc.

मित—। 'श' च 'यक्' च 'लिङ्' चेति द्वन्द्वात् सप्तमीबहुवचनम्। तेन प्रत्येकं सप्तमीविभक्तिस्तदाह—शे, यकि, लिङि चेति। शे' ति 'तुदादिभ्यः शः' (२५३४—३।१।७७) इति तुदादिविकरणस्य ग्राहकम्। यक् इति—सार्व्वधातुके यक्' (२७५६—३।१।६१) इत्यस्य ग्राहकम्। लिङ् इत्यनेन आशीर्लिङ एव ग्रहणम् तदाह—आर्द्धधातुके लिङि इति। तथा—'अयङ् यि क्ङिति'—(२६४९—७।४।२२) इत्यतो यीत्यनुवृत्तं लिङो विशेषणम् न तु शस्य असम्भावात्। नापि यकः अव्यभिचारात्। अतः परिशेषाल्लिङ् वानेन विशेष्यते। विशेषणत्वेन च तदादि विधिस्तदाह—यादौ आर्द्धधातुके इति। रिङः ङकार इत्। 'ङिच्च' इत्यन्तादेशः। यद्यपि 'रिशयग्लिङ्क्षु' इत्येवमुक्तेऽपि 'निर्द्दिश्यमानस्यादेशा भवन्ति' इति परिभाषया ऋस्थाने रि भवेदेव तथापि ङकारोच्चारणं स्पष्टार्थमुपात्तम्। किञ्च—इडागमेनैव सिद्धे रेफोच्चारणं स्पष्टार्थम् इत्यपि ज्ञेयम्। ननु अनेन विधिना भ्रियात् इत्यत्र भ्रियात् इति जाते 'अकृत्सार्व्व—' (२२९८) इत्यनेन दीर्घे भ्रीयादिति स्यादिति चेत्। नैवम्। यदि त्वत्र दीर्घः समन्वीप्सितः स्यात् तर्हि 'रीङ् ऋतः' (७।४।२७) इत्यनेनैव सिद्धे 'रिङ्' ग्रहणस्यासार्थक्यमापद्यते। अतो यद् रिङ्ग्रहणं करोति तद् ज्ञापयत्याचार्य्यो नात्र दीर्घः स्यादिति। इदमेव हि रिङ्विधेः सामर्थ्यं नाम। भ्रियात् इति स्पष्टम्। शे—म्रियते। यकि—क्रियते—क्रियते इत्यादीन्युदाहरणानि।

## २३६८। उश्च ॥१।२।१२॥

**दी—। ऋवर्णात् परौ झलादौ लिङ् तङ्परः सिच्चेत्येतौ कितौ स्तः। भृषीष्ट। भृषीयास्ताम। अभार्षीत्। अभार्ष्टाम्। अभार्षुः।**

Both a लिङ् (आशीर्लिङ्) affix, beginning with a झल् letter and the affix सिच् followed by a तङ (आत्मनेपद) affix become

कित्—provided they ( the झलादीलिङ् and the तङ्परः सिच् ) follow a root that ends in ऋ । Thus भृ+सीयुट्+सुट् त (here लिङ् is झलादि for स is a झल् letter )=भृषीय स् त (by 'इण्कोः' and आदेश-प्रत्यययोः )=भृषी ० ष् त ( यलोप by 'लोपो व्योर्वलि' ( 873 )=भृषीष्ट (by ष्टुना ष्टुः (113)). Here लिङ् being कित्—there is no गुण by —सार्व्वधातुकार्द्धधातुकयोः ( 2168 ). भृषीयास्ताम्—भृ सीयुट् आताम्=भृ सीय् आ सुट् ताम् ( 'सुट्तिथोः and 'आद्यन्तौ टकितौ' )=भृषीयास्ताम् । भृषी रन् ( by यलोप and 'झस्य रन्' ( 2252 )). तङ्परः सिच् will be instanced in the next rule ; here, the root being उभयपदी, the परस्मै सिच् is dealt with ; this—अभार्षीत्—अट् भृ सिच् तिप=अभृ सिच् ईट् त—अभार स् ईत् ( वृद्धि by 'सिचि वृद्धिः परस्मैपदेषु' ( 2297 ) and want of इट् by 'एकाच उपदेशेऽनुदात्तात्' ( 2246 )=अभार्षीत् ( by षत्व ). अभार्ष्टाम्—अट भृ सिच् तस्=अभार् ष् ताम् ( by तस्थस्थमिपां तां तं तामः )=अभार् ष ताम् । अभार्षुः—अट् भृ सिच् झि=अभार स् जुस् ( by 'सिजभ्यस्तविदिभ्यश्च' ( 2226—3. 4. 109 (=अभर् ष् उस्=अभर्षुः । The remaining forms are अभार्षीः अभार्ष्टम् अभार्ष्ट । अभार्षम्—अभार्ष्व—अभार्ष्म ।

मित—। 'उः' इति ऋकारपञ्चम्यन्तम् तदाह—ऋवर्णात् इति। 'लिङ्-सिचावात्मनेपदेषु—' (२३००—१।२।११ ) इति सर्व्वं सूत्रमनुवर्त्तते। 'इको झल्' ( २६१२—१।२।९ ) इत्यतो 'झल् इति' च। तत्र झल् इति उभयोर्विशेषणं 'आत्मनेपदेषु'इति तु सिचो विशेषणम्—तदेतत् सर्व्वं मत्वाह—झलादौ लिङ् तङ्परः सिच्चेति। 'असंयोगाल्लिट् कित्' ( २२४२—१।२।५ ) इत्यतः किदित्यनुवर्त्तते तदाह—कितावित। भृषीष्ट इति आशीर्लिङ आत्मनेपदपक्षे रूपमिदम्—भृ सीयुट सुट् त—भृसीय् स् त ( कित्त्वान्न गुणः )—भृषीय्ट ( लोपो व्योर्वलि ( ८७३ ) इति यलोपः 'आदेशप्रत्यययोरिति' षत्वं तत् साहचर्यात्तकारस्य ष्टुत्वञ्चेति। भृषीयास्ताम्

—भृ—सीयुट—आ सुट् ताम् ( सुट्तिथोरिति—आद्यन्तौ टकिताविति—परिभाषया तकारात्प्राक् सुट् )। भृषीरन् ( 'झस्य रन्' )। तङ्परः सिच् परसूत्रे उदाहरिष्यते अत्र तु परस्मैपदपरः सिच्—उदाह्रियते—अभार्षीत् इति—'एकाच उपदेशेऽनुदात्तात्' (२२४६) इतीण्निषेधः, 'सिचि वृद्धिः परस्मैपदेषु'(२३००) इति वृद्धिः। इटः परत्वाभावात् 'इट ईटि' ( २२९९ ) इत्यस्याप्राप्त्या—सलोपाभावश्चेति प्रक्रिया। अभार्ष्टाम्—सिचं वृद्धिः, तसस्ताम् झलः परत्वाभावात् 'झलो झली'ति सलोपो न। अभार्षुः 'सिजभ्यस्तविदिभ्यश्च' ( २२२६ ) इति जुसि पूर्ववद्रूपम्। सिबादौ तु—अभार्षीः अभार्ष्टमित्याद्याङ्लव्याख्यायां द्रष्टव्यम्। अथ तङ्परस्य सिचो लोपविधिं दर्शयति—

## २३६९। ह्रस्वादङ्गात् ॥८।२।२७॥

**टी—। सिचो लोपः स्याजझलि ॥ अभृत। अभृषाताम्। अभरिष्यत्। हृञ् ८९९ हरणे। हरणं प्रापणं स्वीकारः स्तेयं नाशनं च। जहर्थ। जह्रिव। जह्रिम। जह्रिषे। हर्ता। हरिष्यति। धृञ् ९०० धारणे। धरति। अधार्षीत्। अधृत। णीञ् ९०१ प्रापणे। निनयिथ—निनेथ। निन्यिषे।**

**अथाजन्ताः परस्मैपदिनः—धेट् ९०२ पाने। धयति।**

The elision of सिच् comes about when it comes after a verbal stem (अङ्ग) which ends in a short vowel and is followed by a letter of the झल् प्रत्याहार। Thus भृ+सिच् त=अट् भृ ० त= अभृत (the root is not gunnated for सिच् being तङ्पर is कित् by 'उश्च' (2268) अट्+भृ+सिच्+आताम्=अभृषाताम् ( आताम् has no झल् letter at the outset and hence the सिच् does not elide). ( Want of guna as before ). Similarly अभृषत, अभृथाः, अभृषाथाम् अभृढ्वम्

अभृषि—अभृष्वहि अभृष्महि । अभरिष्यत्—( लृङ् ). The augment इट् comes in by 'ऋद्धनोः स्ये' ( 2366 ) and then the root is gunnated. हञ् हरणे—हरण means to convey, to accept, to commit theft and to destroy. जहार—in णल् । जहर्थ ( in थल् ) prohibition of इट् by ऋतो भारद्वाजस्य ( 2296 ). जह्रिव—जह्रिषे etc. get इट् by the क्रादिनियम under 'कृसृभृवृ—' ( 2293 ). हरिष्यति—by ऋद्धनोः स्ये —( 2366 ). In आत्मनेपद—जह्रे—जह्राते—जह्रिरे etc. In 'लुङ् ( परस्मै— ) अहार्षीत् ( by सिचि वृद्धिः—( 2297 ) ) अहार्ष्टाम्—अहार्षुः— अहार्षीः अहार्ष्टम् अहार्ष्ट,—अहार्षम् अहार्ष्व अहार्ष्म ।—( आत्मनेपद ) अहृत —अहृषाताम्—अहृषत ; अहृथाः etc. धृञ्—to catch hold of, like हृञ्। णीञ् ( नी )—नयति—नयते as before. निनयिथ—निनेथ option of इट by the भारद्वाजनियम under 'ऋतो भारद्वाजस्य' and "अचस्तास्वत् तास्यनिटो नित्यम्' (2294 ). निन्यिषे—इट् by क्रादिनियम—cp—'क्राद्यन्यो लिटि सेड् भवेत्' । Here end the उभयपदी roots.

अथाजन्ता etc.—i. e upto जि जि ( Root No. 947 ) अभिभवे । धेट् (धे ) टित्—to attach ङीप् as स्तनन्धयी कन्या । धयति—( by अयादेश )—

मित—। ह्रस्वात् ( ह्रस्वान्तात् ) अङ्गात् ( अङ्ग—संज्ञकात् धातोः ) इति सूत्रवचनं वृद्धिस्थ विधाय शेषं पूरयन् व्याचष्टे—सिचो लोप इति । 'रात्सस्य —' ( ८।२।२४ ) इत्यतः 'सस्य' इति सिचो ज्ञापकम् इति भावः । 'संयोगान्तस्य लोपः' ( ८।२।२३ ) इत्यतो लोपः इति 'झलो झलि' ( ८।२।२६ ) इत्यतो 'झलि' इति चानुवर्तते । अभृत इतिएवं सिज् लोपे पूर्व्वेण कित्त्वे, अनिट्कत्वादिडभावे, सिज्लोपात् अपृक्तपरत्वाभावाच्च ईडभावे च रूपम् । अभृषाताम्—झल्परत्वाभावात् सिज् लोपो न तङ्परत्वात् तु कित्त्वे न गुणाभावः । एवमन्यत्र । अभरिष्यत्—ऋद्धनोः स्ये ( २३६६ ) इति इट् । जहर्थ—भारद्वाजनियमादिडभावः । जह्रिव इत्यादि क्रादिनियामादिट । अधार्षीत्—सिचि वृद्धि ( २२९७ ) रिति वृद्धिः—हञ् धृञो नि-

त्वादुभयपदित्वेन भज्वद्रूपाणि। निनयिथ—निनेथ—भारद्वाज नियमादिड्विकल्पः। निन्यिषे क्रादिनियमात् इट्। इत्युभयपदिनो गताः।

अथाजन्ता इति—जि ज्रि (९४६—४७) अभिभवे इत्यन्ता इत्यर्थः। घेडिति—टित्त्वात् 'टिड्ढाणञ्—' (४७०) 'इति ङीवर्थम्—स्तनन्धयी। टित्त्वस्य व्यर्थतया समुदायार्थत्वादिति हरदत्तः।

## २३७०। आदेच उपदेशेऽशिति ॥६।१।४५॥

### दी—। उपदेशे एजन्तस्य धातोरात्वं स्यान्नतु शिति।

A root which is taught as एजन्त i. e. ending in ए, ओ, ऐ, औ, gets आ in place of these ए ओ etc. when an affix except a श-eliding one follows. Thus (धे becomes धा)।

मित—। आत्+एचः+उपदेशे+अशिति इतिच्छेदः। आदिति प्रथमैकवचनम् आकार इत्यर्थः। एच् इति एच्प्रत्याहार इत्यर्थः। एचः इति एच्प्रत्याहार—षष्ठ्येकवचनं ए ओ ऐ औचां ग्राहकम्। 'येन विधिस्तदन्तस्य' इति एच इत्यनेन आक्षिप्यते तदाह—एजन्तस्य इति। लिटि धातो—(६।१।८) रित्यतो धातोरिति लभ्यते। अशिति इति प्रसज्यप्रतिषेध इत्याह—न तु शिति इति। तेन शबादौ परे—आत्त्वं नेति ज्ञेयम्। 'शिति' इति कर्मधारयात् सप्तम्यन्तम्। 'श चासौ इच्चे'ति। अशिति इत्यत्र यदि पर्युदासो विज्ञायेत तर्हि सुग्लः सुम्लः इत्यादि दुरुपपादं स्यात्। तथाहि—सुग्लः इत्यत्र कप्रत्ययो विधीयते। स च पर्युदासपक्षाश्रयणे शिद्भिन्नप्रत्ययो भवति। तेन चात्त्वस्य निमित्तं सम्पद्यते। पुनरात्त्वमेव कप्रत्ययस्य निमित्तमित्यन्योऽन्याश्रयो भवति। शिति नेति प्रसज्य प्रतिषेधाश्रयणे तु न दोषो भवति। तथा हि—अस्मिन् पक्षे—शिदभाव एव निमित्तम् न तु कप्रत्ययः। ततश्चात्वे कृते कप्रत्ययः सिध्यति। किञ्च शिति इति बहुव्रीह्याश्रयणे—' 'ग्लै एश्' इत्यत्र जग्ले इति न सिध्येत्। एशः शित्त्वेन तस्मिन् परे आत्त्वस्य निषेधात्। कर्मधारयाश्रयणे तु इत्

संज्ञकशकारादौ परे नेत्यर्थसद्भावादेश: आदिशित्त्वाभावात्—आत्त्वं भवति। तत्र 'आतो लोप इटि चेति (२३७२) आलोपे जग्लं इति भवति। अत्र भाष्यम्—'क: पुनरयं पर्य्युदासो यदन्यच्छित इति। अहोस्वित् प्रसज्यायं प्रतिषेध: शिति नेति। कश्चात्र विशेष:। 'अशित्येकादेशे प्रतिषेधे आदिवत्त्वात्' (वार्त्तिक)। अशित्येकादेशे प्रतिषेधो वक्तव्य:। ग्लायन्ति। म्लायन्ति। किं कारणम्। आदिवत्त्वात्। शिदशितोरेकादेशोऽशित आदिवत्त्वात्। अस्त्यन्यच्छित इति कृत्वात्त्वं प्राप्नोति। प्रत्ययविधिश्च न सिद्ध्यति। सुग्ल:। सुम्ल:। आकारान्तलक्षण: प्रत्ययविधिर्न प्राप्नोति। अनिष्टे प्रत्ययेऽवस्थिते आत्त्वम्। अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्येत। 'अभ्यासरूपं च' (वार्त्तिक)। अभ्यासरूपं च न सिद्ध्यति। जग्लं। मम्लं।' इत्यादि—एवं पर्य्युदासपक्षं दूषयित्वा प्रसज्यप्रतिषेधपक्ष: श्रेयान् इति निगमित इति। उपदेशे किम्। चेता। धातो: किम्। गोभ्याम्।

## २३७१। आत औ णल: ॥७।१।३४॥

### दी—। आदन्ताद्धातोर्णल औकारादेश: स्यात्। दधौ।

The affix णल् is replaced by औ when it (णल) comes after a root ending in आकार। Thus (धे + णल् = धा (2370) + णल् = धा धा + णल् = धा धा औ (2371) = धा धौ = ध धौ (by ह्रस्व:') = दधौ (by "अभ्यासे चर्च्च")।

मित—। आत: + औ, णल: इतिच्छेद:। आत् इति पञ्चमी। तदन्तस्य—ग्रहणमित्याह—आदन्ताद् इति। धातोरिति—'लिटि धातोरनभ्यासस्य' (६।१।८) इत्यत्र प्रकृतमनुवर्त्तते। णल: इति षष्ठी। तस्यैव औकारादेश:। तेन—धेट् + णल् स्थिते पूर्व्वसूत्रेणात्वे कृते, द्वित्वे, णल औकारादेशे, अभ्यासह्रस्वे, जश्त्वे च दधौ इति—एवं जग्लौ—(ग्लै) मम्लौ (म्लै) इत्यादि। अतुसादौ—आकारान्तानामालोपो भवतीत्याह—

२३७२। आतो लोप इटि च ॥६।४।६४॥

टी—। अजाद्योरार्धधातुकयोः किङ्दिटोः परयोरातो लोपः स्यात्। द्वित्वात् परत्वाल्लोपे प्राप्ते 'द्विर्वचनेऽचि' (२२४३) इति निषेधः। द्वित्वे कृते आलोपः। दधतुः। दधुः। दधिथ—दधाथ। दधिव। दधिम। धाता।

The आ (of an आकारान्त root) disappears provided it is followed by such an अजादि (having a vowel at the beginning) आर्द्धधातुक (affix) which is कित् or गित् or ङित् and provided it (आ) is followed by the अजादि affix इट् (इट् वहिमहिङ्) and the augment इट्। Now this rule (6. 4, 64) follows upon the rule 'लिटि धातोरनभ्यासस्य—' (6. 1. 8) which directs duplication. Hence by 'विप्रतिषेधे परं कार्य्यम्' we are to take the former first. But if आ elides first, the root will cease to be एकाच् and consequently there will be no duplication. To avoid this, the author brings forward the rule द्विर्वचनेऽचि' (2243) and says that we shall first of all take up duplication and then enjoin आलोप (lit. after the द्वित्व has been effected, there will come in the आलोप or the elision of आ). Thus धा धा अतुस्=धा ध् अतुस्=ध ध तुस्—दधतुः। दधिथ—दधाथ—option of इट् owing to the भारद्वाजनियम and दधिव। etc take इट् compulsorily by the क्रादिनियमं। धाता—

मित—'आर्द्धधातुके' (६।४।४६) इत्यधिकारसूत्रम्। 'दीङो युडचि क्ङिति' (६।४।६३) इति चाव्यवहितं पूर्व्वसूत्रम्। ततः 'अचि' इति 'क्ङिति' इति चानुवर्त्तते।

अचीत्यार्द्धधातुके' इत्यस्य—विशेषणम्। तेन तदादिविधिः। तदाह—अजाद्योः आर्द्धधातुकयोरिति। द्विवचनोपन्यासः 'क्ङित्' इति 'इट्' इति चैतदपेक्षया। तेनाय वृत्त्यर्थः—यदि अजाद्यार्द्धधातुकः क्ङित् परतो भवति, यदि वा अजाद्यार्द्धधतुक इडागम, इट्प्रत्ययश्च (इट्वहिमहिङ्स्थ इट्प्रत्ययः) परतो भवति तर्हि आकारान्तानां धातूनाम् आकारस्य लोपो भवति इति। सूत्रे 'इटि चेति चकारेण पूर्व्वसूत्रस्थ-क्ङितः संग्रहः। कित्त्वमतुसादीनाम् 'असंयोगाल्लिट कित्' (२२४२) इत्युक्त-त्वात्। इड्ग्रहणसामर्थ्यात्—'क्ङिति इति इटो न विशेषणम्। इट आर्द्ध-धातुकत्वन्तु तदवयवत्वाद ज्ञेयम्। ननु धा+अतुस् इति स्थिते यद्यनेन परत्वाद आतो लोपः प्रागेव विधीयेत तर्हि "लिटि धातो रनभ्यासस्येति" द्वित्वं न स्यात् एकाच्-त्वाभावात् इति चेत्। सत्यम्। परं 'द्विर्वचनेऽचि' (२३४३) इति वर्त्तते। तेन प्रागेव द्वित्वं कर्त्तव्यं ततश्चाल्लोपः। एवञ्चोभयं सिध्यत्येवेति मनसिकृत्वाह—द्वित्वात्परत्वादिति 'लिटि धातोः—' (६।१।८)· इत्यस्मादेतत् सूत्रस्य (६।४।६४) परत्वादिति तदर्थः। इति निषेधः इति—प्रवर्त्तते इति शेषः। द्वित्वे कृते विहिते तु निषेधो न प्रवर्त्तते इति भावः। तत्र '(द्विर्वचने—' इत्यत्र) ह्युक्तं यद 'द्वित्वे कर्त्तव्ये अच आदेशो न स्यादिति कृते तु द्वित्वे अजादेशो भवत्येवेति आल्लोपः। तस्माद—धा धा अतुस् इति जाते आनेनाल्लोपे धा ध् अतुस् इति स्थिते अभ्यासकार्य्यकृत्स्वजश्त्वादिना दधतुरिति। एवं दधुरित्यत्र। अजाद्योः किम्। ग्लै+यक् कर्म्मणि लट् ते—ग्लायते। अस्त्र्यत्र कित्त्वमार्द्धधातुकत्वञ्च परं ना-स्त्यजादित्वम्। ततश्चाल्लोपाभावः। आर्द्धधातुकयोः किम्? यान्ति। वान्ति। अत्रा-स्त्यजादित्वं ङित्त्वञ्च परं नास्त्यार्द्धधातुकत्वम्। ततश्चाल्लोपाभावः। क्ङिति किम्? दधौ अत्रास्त्यजादित्वमार्द्धधातुकत्वञ्च किन्तु कित्वं नास्ति। ततश्चाल्लोपाभावः। इडागमस्योदाहरणम्—दधिथ इति। भारद्वाजनियमदिटिप्राप्ते इदम्; इडभावे त्वाल्लोपो न—दधाथ इति! एवं दधिव इत्यादौ क्रादिनियमादिटि प्राप्ते। इट्प्रत्ययस्योदाहरणम्। दधे। ददे इत्यादि।

## २३७३। दाधा घ्वदाप्॥१।१।२०॥

**टी—। दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्— दैपौ विना।**

The four kinds of दा and the two kinds of धा except दाप् and दैप् are technically known as 'घु'। The four kinds of दा are—डुदाञ् दाने (to give), दाण्—दाने, दो अवखण्डने (to cut) and देङ् रक्षणे (to protect or save) conjugated as ददाति—दत्ते; यच्छति; द्यति and दयते respectively. The two kinds of धा are: —डुधाञ् धारणपोषणयोः (to hold and to maintain—दधाति—धत्ते) and धेट् पाने (to drink धयति). Thus धेट पाने (the root under discussion) is घु संज्ञक—

मित—। दाधाः+घु+अदाप् इतिच्छेदः। दारूपाधा रूपाश्चेति—इह दारूपाश्चत्वारः—डुदाञ् दाने—ददाति—दत्ते। दाण् दाने—यच्छति (एतस्यैव 'पाघ्रे'ति (२३६०) सूत्रेण—यच्छादेशः)। दोऽवखण्डने—द्यति। देङ् रक्षणे—दयते। धारूपाश्च द्वौ—डुधाञ् धारणपोषणयोः—दधाति—धत्ते। धेट् पाने—धयति। एतदर्थमेव घुसंज्ञावतारणमिति ज्ञेयम्। 'दो देङ्' इत्यनयोः कृतात्वेन निर्देशः। एवं धेटः। एवञ्च दाश्च दाश्च दाश्च दाश्च दाः। धाश्च धाश्च धौ। दाश्च धौच 'दाधाः' इति विग्रहः। इति धेटो घुसंज्ञायाम्—

२३७४। एर्लिङि ॥६।४।६७॥

**टी—। घुसंज्ञानां मास्थादीनां चैत्वं स्यादार्धधातुकेकिति लिङि। धेयात्। धेयास्ताम्। धेयासुः।**

The घु संज्ञक roots and मा, स्था, गा (गै गाने), पा (पाने), हा (त्यागे) and सा (षोऽन्तकर्मणि) have their आ replaced by ए i. e they end in ए, when the आर्धधातुक कित् लिङ् i.e. आशीर्लिङ् follows.

Thus धेट्+यासुट+सुट्+तिप्=धे याम् स् त्=धे यात् ( both the सs elide by 'लिङः सलोपोऽनन्त्यस्य' ( 2211 )=धा+यात् ( by 'आदेच:—' ( 2370 ) )=धेयात्—( by this rule ). Similarly धेयास्ताम् etc. and देयात्—मेयात् स्थेयात् etc.

मित—। ए:+लिङि—इतिच्छेद:। एवमत्र सूत्रक्रम:—'आर्द्धधातुके' (६।४।४६) 'घुमास्थागापाजहातिसां हलि' (६।४।६६) 'एर्लिङि' (६।४।६७)। अतएवाह घुसंज्ञानाम्—मास्थादीनाञ्चेति। एरिति प्रथमान्तम्। तदाह—एत्वमिति। 'अलोऽन्त्यस्य'—इत्यन्त्यस्य अकारस्य एत्वमिति फलितम्।' 'दीङो युडचि—(६।४।६३) इत्यत क्ङितीत्यनुवृत्तेरार्द्धधातुकाधिकाराच्चाह—आर्द्धधातुके क्ङिति लिङि—इति। तदेवम्—धेट् यासुट् सुट् तिप् इति स्थिते—'लिङ: सलोप:—' (२२११) इति सकारद्वयनिवृत्त्या—धेट् यात्—इति जाते, 'आदेच:—' (२३७०) इत्यात्वे कृते धा यात्—इति सम्पद्यमाने अनेनैत्वे धेयात्—इति। एवम्—धेयास्ताम् इत्यादिषु प्रक्रिया। धेटो—लुङि—चङ्विकल्पार्थमाह—

## २३७५। विभाषा धेट्श्व्योः ॥३।१।४९॥

**टी—। आभ्यां च्लेश्चङ् वा स्यात्—कर्त्तृवाचिनि लुङि परे। 'चङि' ( २३१५ ) इति द्वित्वम्। अदधत्। अदधताम्।**

The affix चङ् is optionally enjoined in place of च्लि, coming after धेट् and श्वि ( टु ओश्वि गतिवृद्ध्योः ), in the active voice in लुङ्। Thus धेट् is duplicated by the rule 'चङि' ( 2315 ) and we get अदधत्—( अट् धेट् चङ् तिप्—अ धा धा अत् ( by 'आदेच:—' ( 2370 ). and 'चङि'=अ धा ध् अत् ( by आतो लोप:— ( 2372 )—अ ध धत् ( by 'ह्रस्वः' ( 2180 ) )=अदधत् ( by अभ्यासे चर्च ( 2182 ) ). Similarly अदधताम्।

मित—। 'च्लि लुङि' (३।१।४३) इत्यनुवर्त्तते। 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्' (३।१।४८) इत्यतः 'कर्त्तरि' इति 'चङ्' इति च। 'धेट्श्व्योः' इति च द्वन्द्वात् पञ्चमीद्विवचनम् तदाह—आभ्यामित्यादि। तदेवम् अट धेट् च्लि तिप् इति स्थिते अट् धेट् चङ् त् इति जाते 'आदेच:—' (२३७०) इत्यात्वे कृते अ धा अत् इति जाते 'चङि' (२३१५) इति द्वित्वे, 'आतो लोपः—' (२३७२) इत्याल्लोपे च—अ धा ध् अत् इति स्थिते अभ्यासस्य ह्रस्वजश्त्वयोः प्राप्तयोः अदधत् इति। एवमदधताम्। अदधुः। अदधः। अदधतम्। अदधत। अदधम्। अदधाव—अदधाम इति लुङि च्लेश्चङि रूपाणि। श्वयतेरुदाहरणन्तु 'अशिश्वियत्' इति वक्ष्यते इति बोद्धव्यम्। अथास्य धातोश्चङ्भावपक्षे सिज् विकल्पोऽपि स्यात् तत्र सिजभावे रूपं दर्शयन्नाह—

## २३७६। विभाषा घ्राधेट्शाच्छासः ॥२।४।७८॥

**दी—। एभ्यः सिचो लुग् वा स्यात् परस्मैपदे परे। अधात्। अधाताम्। अधुः।**

The affix सिच्, coming after these roots viz.—धेट्, घ्रा, शा (शो तनूकरणे), छा (छो छेदने) and सा (षोऽन्तकर्मणि), disappears optionally when a परस्मै. affix follows. Thus अट् धेट् सिच् तिप् = अ धा ० त् (आत्व by आदेच:—(2370) = अधात्। Similarly अधाताम् and अधुः (आतः (2227) etc.

मित—। घ्रा च धेट् च शा च छा च सा चेत्येषां समाहारद्वन्द्वात् पञ्चम्येकवचनम्। 'शा, छा, षा इति 'शो तनूकरणे', 'छो छेदने,' 'षोऽन्तकर्मणि' इत्येषां कृतात्वेन निर्देशः। 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' (२।४।५८) इत्यतो 'लुक्' इत्यनुवर्त्तते। 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' (२.४।७७) इत्यतः 'सिचः' इति 'परस्मैपदेष्वि'ति च तदाह—एभ्यः सिचोलुगित्यादि। 'गातिस्थे'ति

घ संज्ञकस्य धेटो नित्यं सिज् लोपे प्राप्ते अन्येषान्त्वप्राप्ते वचनम् । तदेवम्—अट् धेट सिच् तिप् इति स्थिते सिज् लोपे—'आदेच:—' (२३७०) इत्यात्वे च अधात् इति । एवम् अधाताम् । अधु: ( आत: ( २२२७ ) इति ( झर्जुस् ) तत: पररूपम् । अधा: अधातम अधात । अधाम् अधाव अधाम इति सिज्लोपपक्षे रूपाणि । अथ सिच्पक्षे विशेषमाह—

## २३७७ । यमरमनमातां सक् च ॥७।२।७३॥

**दो— । एषां सक् स्यादेभ्य: परस्य सिच इट् च परस्मैपदेषु । अधासीत् । अधासिष्टाम् । अधासिषु: । ग्लै ९०३ म्लै ९०४ हर्षक्षये । हर्षक्षयो धातुक्षयः । ग्लायन्ति । जग्लौ । जग्लिथ—जग्लाथ ।**

In परस्मैपद, the augment सक् ( स् ) is enjoined to these roots ( यम्, रम्, नम् and the आकारान्त roots as धा etc ) and the augment इट् is prefixed to the affix सिच्, following them'. Thus अट् धेट् सिच् तिप् = अ धास् ( सक् )इ 0 ईत् ( सिच्लोप by इट ईटि ( 2269 ) = अधासीत् । Similarly अधासिष्टाम् etc.

N. B. Observe that the root धेट् is thus thrice conjugated in लुङ् परस्मैपद पक्ष according as it gets चङ्, सिच्लोप and सिच् । According to चङ्—अदधत्, अदधताम्, अदधु: । अदधा:, अदधतम्, अदधत । अदधम्, अदधाव, अदधाम । सिज्लोपे—अधात्, अधाताम्, अधु: । अधा: etc. सिच् ( with सक् इट् )—अधासीत्—अधासिष्टाम् अधासिषु: etc. यम् रम् etc. will give अयंसीत्—व्यरंसीत् etc.

मित— । यमश्च रमश्च नमश्च आतश्च इति द्वन्द्वात् षष्ठीबहुवचनम् । आत् इत्याकारान्तधातोर्ग्राहकम् । सूत्रे 'सक्चे'त्यनेन सगागमो गृह्यते । स च कित्त्वात् 'आद्यन्तौ टकितौ—' इति यमरमादिभ्य: परं प्रयुज्यते । चकारग्राह्यमाह—एभ्य: सिच

इट् चेति। एभ्यो—धातुभ्यो यः सिच्प्रत्ययो विधीयते—तस्य इडागमश्चेति तदर्थः। 'इडत्त्यर्तिव्ययतीनाम्' (७।२।६६) इत्यत 'इट्' इति, 'अञ्जेः सिचि' (७।२।७१) इत्यतः 'सिच्' इति 'स्तुसुधूञ्भ्यः परस्मैपदेषु (७।२।७२) इत्यत्र परस्मैपदेष्विति चानुवर्तते। अधासीत्—अट् धेट् सिच् तिप् इति स्थिते 'आदेचः—' (२३७०) इति अधा सिच् इट् त् इति जाते सगागमे इटि—अधा सक् इट् स् ईत् इति स्थिते सिज्लोपे अ धा स् इ ० ईत्=अधास् ईत्=अधासीत्। एवम्—अ धासिष्टाम्—इत्यत्र अट् धेटसिच् ताम् इति—अ धा सक् इट् सिच् ताम्=अ धास् इस् ताम्=अधासिष्टाम्। अ धा सिषुरित्यत्र सिजभ्यस्तविदिभ्यश्चेति झेर्जुस् पररूपम्। तदेवम्—धेटः रूपत्रयं चङ् सिच्सिज्लोपापेक्षम्—चङि—अदधत्—अदधाताम् त्यादि। सिचि— अधासीत् अधासिष्टाम् इत्यादि। सिज्लोपे—अधात्—अधाताम्—अधुः इत्यादि। धातुक्षय इति। ''रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः' (आयुर्वेदसंग्रहः) इत्येषां क्षय बलक्षय इत्यर्थः। ग्लायति इति शपि आयादेशे रूपम्। जग्लौ ग्लै ग्लै णल्—ग्ला ग्ला णल् (आदेचः—(२३७०)=ग्ला ग्ला औ (आत औ णलः')=गा ग्ला औ (हलादिः शेषः)=जग्लौ ('ह्रस्वः' 'अभ्यासे चर्च' 'कुहोश्चुः'—(२२४५) जग्लतुः—ग्लै ग्लै अतुस्—ग्ला ग्ला अतुस् ततः आल्लोपाभ्यासह्रस्वजश्त्वादीनि। दधतुरिति वत्। जग्लिथ—जग्लाथ भारद्वाजनियमादिड् विकल्पः।

२३७८। वाऽन्यस्य संयोगादेः ॥६।४।६८॥

टी—। घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके किति लिङि। ग्लायात्—ग्लेयात्। अग्लासीत्। म्लायति। द्यै ९०५ न्यक्करणे। न्यक्करणं तिरस्कारः। द्रै ९०६ ध्रै ९०७ तृप्तौ। ध्यै ९०८ चिन्तायाम्। रै ९०९ शब्दे। स्त्यै ९१० ष्ट्यै ९११ शब्दसंघातयोः। स्त्यायति। षोपदेशस्यापि सत्वे कृते रूपं तुल्यम्। षोपदेशफलं तु तिष्ट्यासति। अतिष्ट्यपदित्यत्र षत्वम्। खै ९१२ खदने। क्षै

९१३ जै ९१४ षै ९१५ क्षये । क्षायति । जज्ञौ । ससौ । साता 'घुमास्था—' ( २४६२ ) इत्यत्र 'विभाषा घ्राधेट्—' ( २३७६ ) इत्यत्र च स्यतेरेव ग्रहणं न त्वस्य । तेन एत्वसिज्लुकौ न। सायात् । असासीत् । कै ९१६ गै ९१७ शब्दे । गायात् । अगासीत् । श्रै श्रैपाके । पै ओवै पोषणे । पायात् । अपासीत् । 'घुमास्था—' ( २४६२ ) इतीत्वं, तदपवाद 'एर्लिङि' (२३७४) इत्येत्वं,'गातिस्था—' (२२२७) इति सिज्लुक् च, न। पारूपस्य लाक्षणिकत्वात् । ष्टै ९२२ वेष्टने । स्तायति । ष्णै ९२३ वेष्टने । 'शोभायां च' इत्येके । 'शौचे' इत्यन्ये । स्नायति । दैप् ९२४ शोधने । दायति । अघुत्वादेत्त्वसिज्लुकौ न । दायात् । अदासीत् । पा ९२५ पाने । 'पाघ्राध्मास्था—' ( २३६० ) इति पिबादेशः । तस्यादन्तत्वान्नोपधागुणः। पिबति । पेयात् । अपात् । घ्रा ९२६ गन्धोपादाने । जिघ्रति । घ्रायात्—घ्रेयात् । अघ्रासीत् । अघ्रात् । ध्मा ९२७ शब्दाग्निसंयोगयोः । धमति । ष्ठा ९२८ गतिनिवृत्तौ । तिष्ठति । 'स्थादिष्वभ्यासेन—' ( २२७७ ) इति षत्वम् । अधितष्ठौ । 'उपसर्गात्—' ( २२७० ) इति षत्वम् । अधिष्ठाता । स्थेयात् । म्ना ९२९ अभ्यासे । मनति । दाण् ९३० दाने । प्रणियच्छति । देयात् । अदात् । ह्वृ ९३१ कौटिल्ये । ह्वरति ।

The आ, of a root, which begins with a conjunct (संयोग) letter and is other than घु, मा, स्था etc, is optionally replaced by ए when the आर्द्धधातुक कित् लिङ् i.e. the आशीर्लिङ् follows.

Thus ग्लायात्—ग्लेयात् ( proceed as before ). अग्लासीत् same process as in अधासीत्। But स्त्यै and ष्ट्यै will give the same form as स्त्यायति etc., ष्ट्यै ( the second root ) being षोपदेश the ष will be replaced by the dental स (by 'धात्वादे: षःसः') and as a result ट will make room for त, so that ष्ट्यै will figure as स्त्यै। Hence the equality of both in form. The result of this षोपदेश—reading will be evident in षत्व ( cerebrality ) of तिष्ट्यासति (सन्) and अतिष्टयपत् ( चङ् ) etc. Thus ष्ट्यै + सन् शप् तिप् = स्त्यै स् अ ति ( by 'धात्वादे:—' ) = स्त्या स ति = स्त्या स्त्या सति ( by 'सन्यङो:' ) = ता स्त्या सति ( by शर्पूर्वा: खय: ) = तस्त्यासति ( by 'ह्रस्व:' ) = तिष्ट्यासति ( by 'सन्यत:' ( 2317 ) and 'इण्कोः—आदेशप्रत्यययोः' ( 211·212 ) )। But स्त्यै with सन् will give तिस्त्यासति for the स of स्त्यै being a natural स and not a substitute स ( आदेशसकार ), the rule 'आदेश—' ( 212 ) will not apply and as a consequence you will not have तिष्टयासति। In the same way ष्ट्यै and not स्त्यै will give अतिष्टयपत् in चङ्। Thus ष्ट्यै + णिच् + तिप् = स्त्या णिच् तिप् by 'आदेच:—' (२३७०) = स्त्यापि ० त् by 'अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुक् णौ—' ( 2570 ) = अट् स्त्यापि + चङ् त् ( by 'णिश्रिद्रुस्रुभ्य:—' ( 2312) ) = अस्ताप् चङ् त् ( by 'णेरनिटि' ( 2313 ) ) = अ स्तप् स्तप् अत् ( by 'णौ चङ्युपधाया: ह्रस्व:' ( 2314 ) ) and 'चङि' (2315) = अ त स्तप अत् (by 'शर्पूर्वा: खय:' ( 2256 ) ) = अ ति स्तप् अत् ( by 'सन्यत:' ( 2317 ) ) — अतिष्टयपत् ( by 'इण्को: and आदेश—' ( 211—12 ) )। घुमास्था etc.—In the rule 'घुमास्था—' ( 2462 ) and in the rule 'विभाषा—' ( 2376 ), by 'सा' is meant the दिवादि 'षोऽन्तकर्मणि' and not this षै क्षये। Hence it ( षै ) will have no एत्व by 'एर्लिङि'

( 2374 ) nor will it have its सिच् elided by 'विभाषा—' (2316). Thus सायात् in आशीर्लिङ् ( not also सेयात् ) and असासीत्' in लुङ् ( with सक् and सिच् ) and not असात् also by सिज्लोपः। ( process as in अधासीत्—अधात् )। ग्लायात्—ग्लै + आशीयात्=ग्लायात्—ग्लेयात् (2370—74) ; अगासीत् like अधासीत्। पै ओदै—to dry up'. ओ is prefixed to वै to have वानम् in निष्टा by 'ओदितश्च'। पा resulting from पै ( by आदेचः—270 ) being secondary or लाक्षणिक and not primitive (प्रतिपदोक्त or मौलिक), will neither have ईत्व directed by 'घुमास्था etc' (2462 ) nor its (ईत्व's) अपवाद (supersession) एत्व in लिङ् enjoined by 'एर्लिङि ( 2374 ), nor will it have the elision of सिच् ( सिज्लुक् ), taught in गातिस्था—' (2223 ). Thus in लिङ् ( आशीः ) the form is पायात् and not पेयात् and in लुङ्—अपासीत् and not अपात् by सिज्लुक् and in यक्—पायते and not पीयते ( by घुमास्था )। दैप्— to purify. दैप् not being घुसंज्ञक will have neither एत्व in आशीर्लिङ् nor the elision of सिच् in लुङ्—thus दायात्। अदासीत्।' The substitute पिब of the root पा to drink being अदन्त or अकारान्त there is no possibility of gunnation of its penultimate ( by पुगन्तलघूपधस्य च—( 2289 ) for the इ in पिब then ceases to be the उपधा or penultimate. Thus पिबति and not पेबति। पेयात्—by 'एर्लिङि' ( 2374 ). घ्रा—to smell'. The substitute जिघ्र also is अदन्त and hence जिघ्रति etc. घ्रायात्—घ्रेयात् by ( 'वाऽन्यस्य संयोगादेः' ( 2378 ). अघ्रासीत्—अघ्रात् by 'विभाषा घ्राधेट्शाच्छासः' ( 2376 ). ध्मा—to make sound ( blow ) and to put fire to. धमति by 'पाघ्रा—etc.' ( 2360 ) ष्ठा— ( स्था ) by 'धात्वादेः षः सः' ) तिष्ठति because the substitute

तिष्ठ is अदन्त। अधितष्ठौ—अधि—स्था + णल्—अधि स्था स्था औ (आत औ णल:) अधि था स्था औ (by 'शर्पूर्वा: खय:')—अधिथस्था औ—अधितस्था औ (by 'ह्रस्व:' and अभ्यासे चर्च )—अधितष्ठौ (by 'स्थादिष्वभ्यासेन—' (2277))। स्थेयात् by 'एर्लिङि'। दाण्—is substituted by यच्छ् by 'पाघ्रा—'। देयात् and not दायात् for this is घुसंज्ञक and thus 'एर्लिङि' applies. ह्वृ to be crooked ; then लघूपधगुण = ह्वरति—

मित—। 'संयोगादेरन्यस्य—वे'ति अन्वय:। कस्मादन्यस्य इत्याकाङ्क्षां पूरयन् व्याचष्टे—घुमास्थादेरिति। 'घुमास्थागापाजहातिसां हलि' (६।४।६६), 'एर्लिङि' (६।४।६७) 'वान्यस्य संयोगादे:' इति सूत्रविन्यासप्रकार:। 'आर्द्धधातुके' (६।४।४७) इति चाधिकृतम् वर्त्तते। तदाह—आत एत्वं वेत्यादि। तेन 'घुमास्थादिसूत्रे अनुपात्तस्य संयोगादेर्धातोरित्याद्यर्थ:। ग्लै इति संयोगादिर्घुमास्थेत्यत्रानुपात्तश्च 'आदेच, इत्यनेन कृतात्त्वादेशश्च तेनात्र प्राप्तिरेत्त्वस्य विकल्पेनेति दर्शयति, ग्लायात्—ग्लेयात् इति। लुङि सिज्लोपाभावसगागमाच्च रूपमाह—अग्लासीत् इति—'यमरमनमातां सक्चे' (२३७७) त्यनेन इत्यर्थ:। अट् ग्लै सिच् तिप् इति स्थिते आदेच इति आत्वे कृते—सगागमे, सिच इटि अपृक्तस्य ईटि—अग्ला सक् इट् सिच् ईट् इति जाते—'इट ईटि' (२२६९), इति सिज्लोपे अग्लास् ईत—अग्लास् ईत् इति। ष्ट्यै ष्ट्यै इति। षोपदेशत्वापीत्यादि—तथाच 'धात्वादे: ष: स:, इति सत्वे कृते तत्संसर्गात् ष्टुत्वस्य निवृत्त्या 'ष्ट्यै' अपि—'स्त्यै' एव भवति। एवञ्च तुल्यरूपता। किं तर्हि षोपदेशो व्यर्थ:। नेत्याह। षोपदेशफलन्त्वित्यादि। तिष्ट्यासति इति—सन्प्रत्यये उदाहरणम्। तथाच ष्टै सन् शप् तिप् इति स्थिते सत्वात्वयोर्धातोर्द्वित्वं स्त्या स्त्या सति इति जाते 'शर्पूर्वा: खय:' इति तामात्रस्य शेषे तस्य ह्रस्वे तस्य 'सन्यत:' (२३१७) इतीत्वे तिस्त्यासति इति सम्पद्यमाने इण: परत्वात् आदेशावयवत्वाच्च सकारस्य मूर्द्धन्यादेशेन षत्वे प्राप्ते तिष्ट्यासति इति सिद्धम्। स्त्यै इत्यस्य सनि तु तिस्त्यासति इत्येव। तत्र सस्य स्वाभाविकत्वेन आदेशावयवत्वाभावात् षत्वं न भवति इति भेद:। अतिष्ट्यपत् इति—णिजन्तस्य स्त्यायतेश्चङि रूपम्। अत्रापि अट् ष्ट्यै + णिच्

+चङ्+तिप् इति स्थिते सत्वे, आत्त्वे, णिचि पुगागमे च अस्थापि चङ् त् इति जाते—'णेरनिटि' ( २३१३ ) इति णिलोपात् स्थाप् इति प्राप्ते तस्य 'णौ चङ्युपधाया: ह्रस्व:' ( २३१४ ) इति उपधाह्रस्वे 'चङि' (२३१५) इति द्वित्वे कृते—अस्थाप् स्थाप् अत् इति सम्पद्यमाने—शर्पूर्वा: खय: इत्यभ्यासे तकारमात्रस्य शेषे तस्य ह्रस्वे इत्वे तत्परत्वात् पूर्ववत् धातो: षत्वे अतिष्ठपत् इति षत्वं फलति ; स्थापि इत्यस्य चङि तु अतिस्थपदित्येव तत्र सकारस्य—आदेशावयवत्वाभावेन षत्वाप्रवृत्तेरित्यत्रापि भेद: । घुमास्थेति सूत्रेरेव 'षोऽन्तकर्म्मणि इति दैवादिकस्यैव कृतात्त्वेन ग्रहण—'निर्द्देश:' न तु 'न पुन:' अस्य 'अनोपात्तस्य' 'षेत्रये' इत्यस्य—विभाषा घ्रेत्यत्र च शाच्छाभ्यां साहचर्यात् श्यन्विकरणस्यैव ग्रहणं न शब्विकरणस्य इति व्याख्यानादिति भाव: । तेन'अतएव' एत्वं 'एर्लिङि' इत्यनेन सिज्लुक् च 'विभाषा घ्राधेट्शाच्छास:'—इत्यनेन न क्रियते इति शेष: । अतएव सेयात्—इति लिङि असात् इति लुङि च नेति विभाव्यम् । गेयात्—कृतात्त्वानन्तरम् 'एर्लिङि—' इत्येत्वम् । अगासीत्—अधासीदितिवत् । ओ वै—ओदित्करणं निष्ठानत्त्वार्थम्—वान: इत्यादि । ननु पायतिरपि कृतात्त्वेन 'पा' इति जाते—घुमास्थेत्यनेनेत्वे कृते सति—पीयते इति स्यात्, लिङि च 'एर्लिङि' इतिपेयात् इति स्यात् । किञ्च—'गातिस्थाघुपा'इति सिज्लुकि—अपादित्यपिस्यादिति चेन्मैवम् । 'लक्षणप्रतिपदोक्तयो: प्रतिपदोक्तस्यैवेति—पै इत्यस्य लक्षणेन पारूपत्वाद् ग्रहणं नेति बोध्यम् । अघुत्वादिति—उक्तं हि 'दाधा घ्वदाबि'त्यत्र दाप्दैपौ विनेति । तस्य—पिबादेशस्य—अदन्तत्वादकारान्तत्वात् इकारस्योपधात्वनिवृत्तेरिति भाव: । एवं जिघ्र—तिष्ठादौ ज्ञेयम् । पेयात्—'एर्लिङि' । अपात्—'गातिस्थेति ( २२२३ ) सिज्लोपात् । घ्रायात्—घ्रेयात्—'वान्यस्य—' इत्येत्वविकल्प: । अघ्रासीत्—अघ्रात्—'विभाषा—' ( २३७६ ) इति सिज्लोपे अघ्रात् इति अन्यथा—'यमरम—'(२३७७) इति सगागमे सिच् इटि च अघ्रासीत् इति । स्थादिष्वभ्यासेनेति—तेन इण् कुभ्यां परत्वाभावेऽपि षत्वमित्याह अधितष्ठौ इति । स्थेयात्—('एर्लिङि' ) दाण् इति दारूपत्वात् घुसंज्ञकत्वेन एत्त्व—सिज्लुकौ—देयात् अदात् इति । ह्वृ-कौटिल्ये ( अनिट् )—इति लघूपधगुणे ह्वरति—

२३७८। ऋतश्च संयोगादेर्गुणः ॥७।४।१०॥

दी—। ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि। किदर्थमपीदं परत्वात् णल्यपि भवति। रपरत्वम्। उपधावृद्धिः जह्वार। जह्वरतुः। जह्वरुः। जह्वर्थ। ह्वर्ता। 'ऋद्धनोः स्ये' (२३६६)—ह्वरिष्यति।

The अङ्ग or the base of a root, ending in ऋ and beginning with a conjunct letter, is gunnated when लिट् follows. Though this rule is to enjoin गुण to the अङ्ग only when a कित् affix such as अतुस् etc., follows, yet it is to be taken to direct गुण to the अङ्ग also when the affix णल् follows. For this rule being subsequent to 'अचो ञ्णिति' (254—7. 2. 115) which teaches the वृद्धि substitute in णल् bars the same (and thus enjoins गुण)। The drift is :—Without this rule ह्वृ अतुस् would give जह्व्रतुः (like चक्रतुः with यण्) and not जह्वरतुः for अतुस् being कित् would not have गुण। Hence the author says—किदर्थमपीदम् etc. Moreover' the वृद्धि enjoing rule 'अचो ञ्णिति' (7. 2. 115) being prior to this rule (7. 4. 10), cannot come in, when णल् follows. Thus though 'ऋतश्च—' (7. 4. 10) is mainly intended for कित्—affixes yet being पर or subsequent to 'अचो—' (7. 2, 115), it applies in णल् also. Thus the अङ्ग (ह्वृ) being gunnated will be रपर or followed by a र् by 'उरण् रपरः' (70). Then the penultimate of ह्वर् will have the वृद्धि substitute by 'अत उपधायाः'(२२८२)। The अभ्यास ह्वृ will, by 'उरत्' (२२४४), 'उरण् रपरः' (७०) and 'हलादिः शेषः' (२१७९) have ह (only), which again by 'कुहोश्चुः' (२२४५)

will make room for ज। Thus the form is जह्वार (with अ of णल् attached to it). जह्वरतुः (by गुणः and रपरत्वम्) जह्वरुः (उस्) like जह्वरतुः। जह्वर्थ—want of इट् by the भारद्वाजनियम='ऋतो—' (२२९६). The rest is easy.

मित—'दयतेर्दिगि लिटि' (७।४।९) इत्यतो 'लिटि' इत्यनुवर्त्तते। ऋदित्यनेन तदन्तस्य ग्रहणम्। षष्ठ्यन्तमिदम्। 'संयोगादेः' रिति ऋदन्तस्येति अङ्गस्य (अधिकृतस्य) विशेष'. तदाह—ऋदन्तस्य इत्यादि। इदानीं सूत्रप्रयोजनं विशिनष्टि—कितदर्थमपीदमिति। यद्यपि अतुस् इत्यादीनां कित्त्वेन गुणाप्रवृत्त्या जह्वरतुरित्याद्यभिमतरूपसिद्ध्यर्थमेतद् गुणविषयकं सूत्रं प्रवृत्तं तथापि—णलि परे यथाङ्गस्य गुणो भवतीत्येतदर्थमपीदं सूत्रं विभावनीयम्। तथाहि 'अचो ञ्णिति' (७।२।११५) इति णलि वृद्धिविधायकं सूत्रम्। तदपेक्षया तु इदं सूत्रम् (७।४।१०) परवर्त्ति। तेन परत्वादेतत् णलि वृद्धिं बाधित्वा गुणमेव विदधाति। ततश्च (गुणात् परम्) 'उरण् रपरः' (७०) इत्यनेन अङ्गस्य रपरत्वे 'ह्वर्' इत्येवं रूपे जाते 'अत उपधायाः' (२२८२) इत्यनेन उपधावृद्धौ 'ह्वार्' इति सम्पद्यते इत्यङ्गकार्य्यम्। अभ्यासस्य तु 'उरत्' (२२४४) इत्यत्त्वम् 'उरणिति रपरत्वम्। हलादिः शेषः कुहोश्चु रिति (२२४५) इति हकारस्य जकारादेशेजह्वर् अ (णल्) जह्वार इति भवति। एवं जह्वरतुरित्यत्र गुणे रपरत्वे पूर्व्ववदभ्यासस्य जकारादेशे च रूपं सिध्यति। एवं जह्वरुः। जह्वर्थ इति गुणे भारद्वाजनियमादिण्निषेधे च पूर्व्ववदभ्यासकार्य्ये च सिद्धम्। अन्यत्—स्पष्टम्। क्रादिनियमात्—जह्वरिव इत्यादि।

२३८०। गुणोऽर्त्तिसंयोगाद्योः ॥७।४।२९॥

दी—। अर्त्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद् यकि यादावार्द्धधातुके लिङि च। ह्वर्य्यात्। अह्वार्षीत्। अह्वार्ष्टाम्।

स्तृ ८३२ शब्दोपतापयोः। 'स्वरतिसूति—' (२२७९) इति वेट्। सस्वरिथ—सस्वर्थ। वमयोस्तु—

The substitute गुण is enjoined to an अङ्ग or verbal stem which begins with a conjunct letter and ends in ऋकार and also to the root ऋ (both भ्वादि and जुहोत्यादि), when the aug. यक् and the आर्द्धधातुक लिङ् beginning with a य (i. e. परस्मैपद आशीर्लिङ् यात् etc) follow. Thus ह्वृ+यात् (आशीः)=ह्वर्+यात्=ह्वर्य्यात् (द्वित्व by 'अचो रहाभ्यां द्वे' (५९—८।४।४६). अह्वार्षीत्—अट्+सिच् तिप्—अ ह्वार् (अनिट्) सिच् ईट् त्—अह्वार् स् ईत्—अह्वार् ष् ईत्—(वृद्धि by 'सिचि—वृद्धिः परस्मैपदेषु—(२२९७))। अह्वार्ष्टाम्—तस् being replaced by ताम् of which again the त is changed into ट in contact with ष। अह्वार्षुः etc. स्वृ etc easy.

मित—। गुणः अर्ति संयोगाद्योरिति च्छेदः। अर्तिश्च संयोगादिश्च (द्वन्द्वः) तयोरिति षष्ठीद्विवचनम्। 'रीङृतः' (७।४।२७) इत्यत 'ऋत' इत्यनुवर्त्तते। तच्चाङ्गविशेषणम्। तदन्तविधिः। अर्त्तेः संयोगादेर्ऋदन्तस्य चेति (अङ्गस्येति शेषः)। संयोगादेरित्यप्यङ्ग-विशेषणमेवेति द्रष्टव्यम्। 'रिङ् शयग्लिङ्क्षु' (७।८।२८) इत्यतो यगित्यनुवर्त्त्य सप्तम्यां विपरिणम्याह—'यकि' इति। 'अयङ् यि क्ङिति' इत्यतो 'यि' इति 'क्ङिति' इति चानुवर्त्तते। किञ्च 'अकृत्सार्व्वधातुकयोर्दीर्घः' (७।४।२५) इत्यतो नञ्शब्दस्य प्रत्येकं योगात्—असार्व्वधातुके इति चानुवर्त्तते। तेन चार्द्धधातुके इत्यर्थलाभः। अपिच 'एतेर्लिङि' (७।२।२४) इत्यतो 'लिङि' इत्यप्यनुवर्त्तते। तदेतत् सर्व्वं मत्वा यथायोगं विशेष्यविशेषणभावेन सम्बद्धा व्याचष्टे—सादौ आर्द्धधातुके इत्यादि। परस्मैपदीयाशीर्लिङि इति तु स्पष्टोऽर्थः। अर्त्तेरित्यनेन भ्वादौ पठितस्य—जुहोत्यादौ च पठितस्य—ऋच्छतीयर्त्त्योर्ग्रहणम् (भ्वादौ—ऋच्छतीति; जुहोत्यादौ तु—इयर्त्ति इति रूपं वक्ष्यते)। 'अर्त्तिसंयोगाद्योर' इत्यकारे विधेये गुणग्रहणं चिन्त्यप्रयोजन-

मिति तत्त्वबोधिन्याम्। ह्वरर्थ्यात्—ह्वर्य्यास्ताम् ह्वर्य्यासुः इत्यादि। प्रक्रिया सुगमा। अह्वार्षीत्—लुङि—अट् ह्वृ सिच ईट् त् इति स्थिते सिचि वृद्धिरिति-वृद्धौ—इडागमे च रूपम्। संयोगादेरिति किम्। क्रियात्। यादौ इति किम्? संस्कृषीष्ट। आर्द्धधातुके किम्—इय्यात्। स्वृ शब्दोपतापयोरिति—अयमप्यनिट। अथ कितोर्वमयोः परयोः—'श्रुयुकः—' इतीण्निषेधेऽपि क्रादिनियमाद् इड्भवत्येवेत्याह—

## २३८१। श्र्युकः किति ॥७।२।११॥

टी—। श्रिञ एकाच उगन्ताच्च परयोर्गित्कितोरिट् न स्यात्। परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यात् अनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। सस्वरिव। सस्वरिम। परत्वात् 'ऋद्धनोः स्ये—' (२३६६) इति नित्यमिट। स्वरिष्यति। स्वर्य्यात्। अस्वारीत्। अस्वारिष्टाम्। अस्वार्षीत्। अस्वार्ष्टाम्। स्मृ ९३३ चिन्तायाम्। ह्वृ ९३४ संवरणे। सृ ९३५ गतौ। क्रादित्वान्नेट्। ससर्थ। सस्रुव। रिङ्—स्रियात्। असार्षीत्। असार्ष्टाम्।

The augment इट is not directed ( prefixed ) to the गित् and कित् affixes, ( both ) coming after the root श्रिञ् ( श्रि ) and after monosyllabic ( एकाच ) roots ending in the उक् letters ( उ, ऋ, लृ )। Though the rule 'स्वरतिसूतिसूयतिधूञूदितो वा' ( २२७९—७।२।४४) is subsequent to this : 7. 2. 11 ) and hence though according to the 'विप्रतिषेध परिभाषा' it possesses geater force, yet this 'श्र्युकः—' will bar the same on the strength of the

reverse order of the enjoining and prohibiting of इट् rules of Panini. The meaning is this :—It is proper to enjoin some thing first and then to forbid the same when necessary but not vice-versa. But Panini has dealt with the इट्—probiting rules first and then with the इट् enjoining rules as for example नेड्वशिकृति ( 7. 2. 8 ) ( निषेधकाण्ड ) and 'आर्द्धधातुकस्येड्वलादेः' (७।२।३५) (विधिकाण्ड)। This wilful behaviour on the part of the Sutrakara shows that the विप्रतिषेध rule 'विप्रतिषेधे परं कार्य्यम्'is not to be adhered to in connection with इट to व and म etc. Hence finally on the ground of the handling of the prohibitory rules (प्रतिषेधकाण्ड) of इट् first (पुरस्तात्), rule 'श्रुकः—' wields greater influence than 'स्वरति etc.' (7. 2. 115) i. e. bars the same and forbids इट् (to गित् and कित् affixes ). This being the case i.e. prohibition of इट् being due to व and म, the क्रादिनियम appears and enjoins इट् to व and म ( for स्वृ is not enlisted in 'कृ सृ भृ वृ etc.—2293 ) in a compulsory way. Thus सस्वरिव etc. (स्वृ स्वृ इट् व—स्वर् स्वर् इव—स स्वरिव)। This is not the case,however, when लृट and लृङ् follow ; for here the 'विप्रतिषेध' rule must be had recourse to and thus there will be नित्य इट in स्वरिष्यति and अस्वरिष्यत् etc by the rule 'ऋद्धनोः स्ये' (२२९६—७।२।७०)। स्वर्य्यात्—(आशीर्लिङ्) like ह्वर्य्यातः—This लुङ् form is effected when इट is prefixed to सिच् by 'स्वरति—' (२२७९) and the वृद्धि substitute comes in by 'अतो ल्रान्तस्य' (२२३०)। (Thus—अट् स्वृ इट् सिच् ईट् त्—अ स्वार् इष् ईत्—अस्वारीत्) but when इट is wanting, the form is अस्वार्षीत् etc. where in both case वृद्धि is effected by 'सिचि वृद्धि—'

(२२९७) । Here the सिच् is not dropped inasmuch it is not preceded by इट् (अट् स्, सिच् ईट् त्—असार् ष् ईत् etc. रिङ् in आशीर्लिङ् by 'रिङ् शयक् लिङ्क्षु' (२३६७) ; असार्षीत्—(लुङ्) the root ( सृ ) being अनिट् सिच् does not disappear and the root gets the वृद्धि substitute by 'सिचि वृद्धिः—' ( २२९७ ) ।

मित—। श्रिश्च ( श्रिञ् धातुः ) उक् चेति समाहारद्वन्द्वात्—पञ्चमी । 'एकाच उपदेशेऽनुदात्तात्' ( २२४६—७।२।१० ) इत्यत्र एकाच इत्यनुवर्त्तते । तत्र उक एव विशेषणम् । उक् इति प्रत्याहारः—उ ऋ ऌ इति वर्णत्रयग्राहकः । तेन च तदन्तं लक्ष्यते । तदाह—श्रिञ्, एकाच उगन्ताच्चेति । 'गित्—कितो' रिति । 'किति' इति षष्ठ्यर्थे सप्तमीति वोध्यं किञ्च 'ग्लाजिस्थश्च—' इत्यत्र स्नु प्रत्ययस्य गित्त्वम् एव न कित्त्वं तथात्वे 'घुमास्था'ति ( २४६६ ) ईत्त्वप्रसङ्गात् । अतः किति इत्यनेन गितोऽपि संग्रह इति वोधनार्थमिदम् । इण्नस्यादिति—'नेड्वशि कृति' (७।२।८) इत्यतस्तदनुवृत्तेरिति भावः । परमपि इति—यद्यपि 'स्वरतिसूति—' (२२७९—७।२।४४) इति इड्विकल्पविधायकं शास्त्रं 'श्र्युकः—' ( ७।२।११ ) इत्येतदपेक्षया परम्—परवर्त्ति, तथापि—तं परमपि, अग्रवर्त्ति श्र्युकः इति सूत्रं वाधिष्यते । ननु तादृशवाधने किं मानं तत्राह—पुरस्तादिति । आदौ हि विधिरेव प्रवर्त्तयितव्यः पश्चान्निषेधः । न तु तयोर्व्यत्यासेन निर्द्देशो युक्तः । पाणिनिस्त्वेवमेव कृतवान् । तथाच 'आर्द्ध-धातुकस्येड् वलादेः' (७।२।३५ ) इतीड्विधायकसूत्रे पुरस्तात् ( प्राक् ) वक्तव्ये 'नेड्वशि कृति' ( ७।२।८ ) इतीण्निषेधविधायकसूत्रमेव प्राक् प्रयोजितवान् । नहि तेनाचार्य्यस्य प्रमादो गम्यते । किन्त्वत्रापि प्रयोजनम् 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते' इति स्मरणात् । प्रयोजनञ्च 'परमपि—स्वरत्यादिविकल्पं' वाधित्वा श्र्युक इति निषेधो यथा प्रवर्त्तेत इति । अत आह—पुरस्तादिति । एवञ्चेण्निषेधे प्राप्तेऽपि इड्-भवत्येवेत्याह—क्रादिनियमात्—इति । उक्तं हि क्रादिसूत्रे ('कृसृभृवृ—' (२२९३)) 'प्रकृत्याश्रयः प्रत्ययाश्रयो वा—यावान् इण्निषेधः स लिटि चेत् तर्हि क्रादिभ्य एव नान्येभ्य' इति । अत्र च प्रत्ययाश्रय इण्निषेधः ( गित्कितोरित्यस्यादित्युक्तत्वात् ) ।

स्वृधातुश्च क्रादिश्च: अन्य:। अतोऽत्र भवत्येवेडिति फलितम्। सस्वरिव सस्वरिम (स्वृ स्वृ—इटव—स्वव् स्वव् इव—सस्व इव इत्यादि)। लिटं विहायान्यत्र तु परत्वस्यैव प्राबल्यम् इत्याह—परत्वादिति। ऋद्धनो:—(७।२।७०) इत्यस्य 'स्वरति—' (७।२।४४) इत्यपेक्षया परवर्त्तित्वादित्यर्थः। तेन स्वरत्याद्युक्तम् इड्विकल्पं बाधित्वा ऋद्धनोरित्यनेन नित्यमेवेडिति उदाहरति—स्वरिष्यति इति। 'लृङि अस्वरिष्यत्—इत्यादि। लृट् लृङो: क्रादिप्रसङ्गाभावात्—पुरास्तादित्यादि नावतारितमितिध्येयम्। एकाच:—किम्। जागरितः। जागरित्वा इत्यादि। अस्वारीत्—इति स्वृधातोर्वेट्कत्वादिट्पक्षे गुणे कृते रपरत्वे—अतो ल्रान्तस्य—' (२३३०) इति वृद्धि:। 'इट ईटि' (२२१६) इति सिज्-लोपः। इडभावपक्षे तु अस्वार्षीत् इति—सिचि वृद्धिरिति (२२९७) वृद्धि:। इट: परत्वाभावात्—इट ईटीति सिचो लोपाविरह:। स्मृ चिन्ताया-मिति अनिडयं धातु:। तस्य—इडभावात्—अस्मार्षीत् इत्येव अस्वार्षीदितिवत्। एवं हृ इत्यत्र। क्रादित्वादिति स्पष्टम्। रिङ् इति—'रिङ्—शयक्लिङ्क्षु' (२३६७) इत्यनेनेत्यर्थ:। असार्षीत्—इण्निषेधात्—सिचि वृद्धिरिति वृद्धि:। श्रिञस्तु श्रित:। श्रितवान् इत्यादि। अन्योगितां—भृत:। भृत्वा—इत्याद्युदाहरणानि ज्ञेयानि।

२३८२। सर्त्तिशास्त्यर्त्तिभ्यश्च ॥३।१।५६॥

**टी—। एभ्यश्च्लेरङ् स्यात् कर्त्तरि लुङि। इह लुग्शपा शासिना साहचर्यात् 'सर्त्तप्रर्ती' जौहोत्यादिकावेव गृह्येते। तेन भ्वाद्योर्नाङ्। शीघ्रगतौ तु 'पाघ्राध्मा—' (२३६०) इति शिति धौरादेश:। धावति। ऋ ८३६ गतिप्रापणयो:। ऋच्छति।**

The affix अङ् replaces the affix च्लि coming after सृ, शास्

and ऋ। But here you cannot expect अङ् for शास् is लुप्तशप् or लुगविकरण अदादि hence through the cantact of the same, सृ and ऋ also are taken to be जुहोत्यादि, which roots also are लुप्तशप् by 'जुहोत्यादिभ्यः श्लुः' ( 2486 ). Thus भ्वादि सृ and ऋ will not get अङ् ( the difference in conj. between them is—सरति ( भ्वादि ) ससर्त्ति (जुहो—) and ऋच्छति ( भ्वादि ) इयर्त्ति (जुहो) )। The root सृ ( भ्वादि ) is conjugated as सरति etc. then it means 'slow movement' but when it signifies 'quick movement or running' it will be replaced by 'धौ' in शप् by the rule 'पाघ्रा etc' ( 2360 ). Thus सृ शप् ति—धौ शप्ति—धाव् अति—धावति। ऋ to go and to cause to have—ऋच्छति by 'पाघ्रा—etc.'—

मित—। सर्त्तिश्च ( सृ ) शास्तिश्च ( शास् ) अर्त्तिश्च ( ऋ ) इति द्वन्द्वात्—पञ्चमीबहुवचनम्। 'अस्यतिवक्तिख्यातिभ्योऽङ्' ( ३।१।५२ ) इत्यतोऽङ् इत्यनुवर्त्तते 'णिश्रिद्रुस्रुभ्यः—' ( ३।१।४८ ) इत्यतः कर्त्तरीति, 'च्लि लुङि' इत्यतश्च्लेरिति 'लुङि' इति च तदाह—। 'च्लेरङ्' इत्यादि। एतेन 'अङा' असरदिति भवतीति न भ्रमितव्यम् इत्याह—इहेति। अङ्विधिरयं जौहोत्यादिकसृधातु पक्षे न तत्र भ्वादिगणस्थ पक्षे। एवं ऋधातुपक्षेऽपि ज्ञेयम्। शास् धातुर्हि अदादौ पठ्यते। तस्माच्च गणाच्छपो लुक् भवति—'अदि प्रभृतिभ्यः शपः' इत्यादि वक्ष्यमाणत्वात्। तेनायं धातुः ( शास् ) लुप्तशब भवति। सर्त्यर्त्ती ( सृ ऋ ) च जौहोत्यादिकावपि स्तः। तस्माच्च गणाच्छपः श्लुर्भवति इति ( २५८९ ) च वक्ष्यते। अतो लुप्तविकरणत्वरूपधर्म्मसाम्यात्—शासिसाहचर्य्यात्—'संसर्गात्' सर्त्यर्त्ती 'सृ ऋ' इत्याद्यन्तस्थधातुद्वयम्—जौहोत्यादिकावेव जुहोत्यादौ—पठिष्यमाणावेव गृह्येते—स्वीक्रियेते अस्माभिरिति शेषः। तेनात्र पठितस्य सर्त्तेः पठिष्यमाणस्य च अर्त्तेरङ न उभयोरेव भ्वादित्वात्। असरत्। आर्षत्। आरत् इति अङि इति रूपाणि द्रष्टव्यानि। शीघ्रगताविति। सृ गतौ इत्यनेन सृ धातोर्गतिसामान्यार्थे रूपं दर्शितम्, यदा तस्य शीघ्रगतिरर्थः तदा—पाघ्रेत्यादिना धौरा-

देशो भवति शवादौ परतः। ऋ धातुरनिट्। पाघ्र्त्यनेन ऋच्छादेशे ऋच्छति इति। अथास्य लिटि गुणं दर्शयति—

२३८३। ऋच्छत्यॄताम् ॥७।४।११॥

**दो—। तौदादिकस्य ऋच्छतेः ऋधातोः ॠतां च गुणः स्याल्लिटि। णलि प्रागवदुपधावृद्धिः। आर। आरतुः। आरुः।**

गुण is directed to the root ऋच्छ् read in तुदादि, to ऋ read in भ्वादि and to those that end in ॠ, when (the tense affix) लिट follows. The penultimate will have वृद्धि as before (see गुणोऽर्त्ति संयोगाद्योः (२३७९)). Thus आर आरतुः etc. ऋ ऋ णल्—अर् अर् अ—आ अर् etc.—अत आदेः (2248) = आर् (by अत उपधायाः (2282)) अ = आर; ऋ ऋ अतुस्—अर् अर् अतुस्—(अहलादिः—) आर् (अत उपधायाः) अतुस्—(२२४८)) आरतुस्—आरतुः। Similarly—आरुः etc.

मित—। ऋच्छति + ऋ + ॠताम् इति समासगतश्छेदः। द्वन्द्वात्—षष्ठी बहुवचनम्। ऋच्छति इत्यनेन तुदादौ—पठिष्यमाणस्य 'ऋच्छ (१२९७) गतीन्द्रियप्रलयमूर्त्तिभावेषु' इत्यस्य ग्रहणम्; तदाह—तौदादिकस्येति। ऋ इति भ्वादेर्ग्रहणम्। ॠताम् इति ॠदन्तान् सर्व्वान् गृह्णाति। 'ऋतश्च संयोगादेर्गुणः (२३७९—७।४।१०) इत्यतो गुण इति 'दयतेर्दिगि लिटि (२३८८—७।४।९) इत्यतो लिटि इति चानुवर्त्तते तदाह—गुण इत्यादि। णलि प्रागवदिति ऋतश्चेत्यत्र (२३७९) उक्तम्—किदर्थमपीदमित्यादि। 'उपधायाः' (२२८२) इत्यनेनेति बोध्यम्। तथाच—ऋ ऋ णल इति स्थिते 'उरत्' (२२४४) 'उरण् रपरः' (७०) इति पूर्व्वखण्डस्य—(अभ्यासस्य) गुणे रपरत्वे च कृते, ऋतश्चेति उरण रपर इत्युत्तरखण्डस्य (अङ्गस्य) च गुणेरपरत्वे च —अर् अर अ इति जाते हलादिशेषे 'अत आदेः' (२२४८) इत्यकारदीर्घे उत्तरखण्डस्य च 'अत उपधायाः' इति वृद्धौ—प्राप्तायाम्—आ आर् अ—आर इति भवति

एवमारतुरित्यत्र पूर्व्वखण्डस्य दीर्घे च—'आ' इत्येवं रूपे जाते अनेन ( २३८३ ) गुणे उत्तर खण्डस्य—'अर्' भावे सम्पद्यमाने—आ अर, अतुम् इति भवति ततो रूपम् । एतत्सूत्राभावे तु यणं वाधित्वा परत्वाद् गुणे अरतुरिति स्यात् । एवमारुरित्यादौ । अथास्य थलि भारद्वाजनियमान्नित्यनिन्निषेधे प्राप्ते आह—

२३८४ । इडत्त्यर्त्तिव्ययतीनाम् ॥७।२।६६॥

टी—'अद्' 'ऋ' 'व्येञ्' एभ्यस्थलो नित्यमिट् स्यात् । आरिथ । अर्त्ता । अरिष्यति । अर्यात् । आर्षीत् । आर्ष्टाम् । गृ ८३७ घृ ८३८ सेचने । गरति । जगार । जगर्थ । जग्रिव । रिङ् । ग्रियात् । अगार्षीत् । ध्वृ ८३८ हुर्च्छने । स्रु ८४० गतौ । सुस्रोथ । सुस्रुव । स्रूयात् । 'णिश्रि—' (२३१२) इति चङ् । लघूपधत्वादन्तरङ्गत्वादुवङ् । असुस्रुवत् । षु ८४१ प्रसवैश्वर्य्ययोः । प्रसवोऽभ्यनुज्ञानम् । सुषोथ—सुषविथ । सुषुविव । सोता ।

The aug. इट् is compulsorily prefixed to थल् coming after the roots अद्, ऋ and व्येञ् ( व्ये )। Thus ऋ ऋ इट् थल्—अर् अर् इथ—आ अर् इथ—आरिथ also in व and म आरिव आरिम (by इट् owing to क्रादिनियम)। अरिष्यति by—ऋद्धनोः स्ये—(२३६६) ; अर्यात्—(आशीर्लिङ्) गुण by—'गुणोऽर्त्ति—' ( २३४० ) ; आर्षीत्—( लुङ् ) by 'आडजादी—' and 'सिचि वृद्धिः (२२९१)। Note that ऋ will not have अङ् cp.—'सर्त्ति—(२३८२)। जगर्थ—want of इट् by भारद्वाजनियम। जग्रिव by—क्रादिनियम। रिङ् i. e. by 'रिङ् शयक्—' ( २३६७ ) ग्रियात् ( आशीर्लिङ् ) ; अगार्षीत् by अट् सिचि वृद्धिः and want of इट्। स्रु गतौ—this is what is stated in 'णिश्रिद्रुस्रुभ्यः'—(२३१२)—अनिट्। सुस्रोथ=स्रु स्रु थल् सुस्रोथ (by हलादि—

'सार्व्व' and ऋतो भार—)। In णल्—सुसाव। In व and म—सुसु्व। सुसु्म by क्रादिनियम (कृसृभृवृ—' (२२१३)) and want of गुण due to the कित्त्व of व and म। सूयात्—दीर्घ by अकृत्सार्व्व— (२२९४)। Because उवङ्—is अन्तरङ्ग owing to its concern with चङ् which lies within (अन्तः) it, will supersede लघूपधगुण, which, though subsequent to उवङ् ('अचिश्नु—(६।४।७७) and 'पुगन्त—('७।३।८६), is concerned with तिप्—which lies without (वहिः)। Thus by the परिभाषा—'पूर्व्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं वलीयः,' उवङ्—only is legitimate here, so अट् सु सुवङ् तिप्—असुसुवङ् अत्—असुसुव् अत्—असुसुवत् (It is also to be noted that चङ् being ङित्—'सार्व्व—' (२१६८) can not apply here). षु (सु)—here प्रसव means to permit and not to give birth to. षु+शप् तिप्—सु अति—सो अति (by सार्व्व—(२१६८)—सव् अति—सवति। सवतु। असवत्। सवेत्। सुषाव (वृद्धिः) सुषुवतुः (उवङ्)। सुषुवः (उवङ्)। सुषोथ—सुषविथ (option of इट् by भारद्वाज—नियम—सुषुविव (उवङ् and इट् by क्रादिनियम)। सोता—लुट्, आशीः—सूयात्—

मित—। इट्+अत्यर्त्ति (अत्ति+अर्त्ति) व्ययतीनाम् इतिच्छेदः। 'आर्द्ध-धातुकस्येड् वलादे'रित्यत इडनुवृत्त्यापि—इड्ग्रहणं स्पष्टार्थमिति नागेशः। अर्त्तीति भौवादिकजौहोत्यादिकयोरुभयोरपि ऋधातोर्ग्रहणम्। अत्ति—इत्यनेन अद—धातुर्गृह्यते; तदाह—अद इति। व्ययतिना च—वेञ् धातुर्ग्राह्यः। थलो नित्य-मिट्—इति—'अचस्तास्वत्—' (७।२।६१) इत्यतस्तदनुवृत्तिरिति भावः। विभाषा सृजि—(७।२।६५) इति तु स्वरितत्वान्नानुवर्त्तते। ऋतो भारद्वाजस्येति निषेधे प्राप्ते वचनम्। ऋ ऋ इट् थ—इति स्थिते पूर्व्ववदभ्यासस्य—'आ' इत्येवं रूपे जाते अङ्गस्य च अर इति जाते आ अर इथ—इति स्थिते आरिथ इति। अरिष्यति—'ऋद्धनोः—' (२३६६) इति इट। अर्य्यात्—'गुणोऽर्त्ति—' (२३८०) इति गुणः।

आर्षीत्—आडागमे सिचि वृद्धौ च रूपम्। अनिट्त्वादिडभावः। जगर्थ—भारद्वाजनियमादिण्निषेधः। जगिव—क्रादिनियमादिट्। गियात्—(आशीः)—'रिङ् शयक—' (२३६७) इति रिङादेशे, रिङ्सामर्थ्याद् दीर्घाभावे च रूपम्। अगार्षीत्—अडागमे सिचि वृद्धौ रूपम्। अनिट्कत्वेन इटः परत्वाभावात् सिज्लोपो न। सुस्त्रोथ—सुस्तूव (क्रृ स्तृ भृ वृ—' इति इण्निषेधः)। स्तूयात्—'अकृत्सार्व्व—' (२२९७) इति दीर्घः। लघूपधगुणादित्यादि। लघूपधगुणः परः—( 'पुगन्त—'७।३।८६ ) उवङ् तु अन्तरङ्गः (अचिश्नु—६।४।७७)। तेन परमपि लघूपधगुणं बाधते 'पूर्व्वपरनित्यान्तरङ्ग' इति न्यायेनास्य—(उवङः) बलीयस्त्वात्। अयं भावः—असुस्तु ष (चङ्) त् इति स्थिते—'रेफादुत्तरस्य 'सार्व्वधातुकार्द्धधातुकयो'रिति गुणस्य चङ्निमित्तकस्य ङित्त्वान्निषेधेऽपि-उवङपेक्षया परत्वात् तिपं निमित्तीकृत्य रेफादुकारस्य लघूपधगुणोऽपि न। स हि (लघूपधगुणः) वहिर्भूततिबपेक्षत्वाद् वहिरङ्गः। उवङ् तु अन्तर्गतचङपेक्षत्वाद् अन्तरङ्गः। अतो लघूपधगुणं बाधित्वा उवङेव भवति। परादन्तरङ्गस्य बलवत्तरत्वादिति। ततश्च असुस्तुवत् इति सिद्धम्। षु इति (षोपदेशः)। प्रसवशब्दस्य प्राणिगर्भमोचनार्थो नेत्याह—प्रसवोऽभ्यनुज्ञानमिति। अभ्यनुज्ञानम् अनुमतिः—'ओँ प्रणयेति—ब्रह्मा प्रसौति' (अनुमनुते) इत्यादौ दर्शनादिति भावः। सुषोथ—सुषविथ (भारद्वाजनियमादिड्विकल्पः)। सुषुविव—क्रादिनियमादिट्। सोता—लुट् गुणः। अथास्य सिचि विशेषमाह—

## २३८५। स्तुसुधूञ्भ्यः परस्मैपदेषु ॥७।२।७२॥

टी—। एभ्यः सिच इट स्यात् परस्मैपदेषु। असावीत्। पूर्व्वोत्तराभ्यां ञिद्भ्यां साहचर्य्यात् सुनोतेरेव ग्रहणमिति पक्षे असौषीत्। श्रु ९४२। श्रवणे।

The augment इट् is prefixed to सिच् coming after स्तु, सु and धू in परस्मैपद। Thus अट् सु इट् सिच् तिप्—अ सौ इ ० ईट् त् (वृद्धि

by—'सिचि वृद्धिः—' ( 2297 ) and सलोप by 'इट ईटि' ( 2266 )—असाव् ईत् by 'एचोऽय्—' = आसावीत्। Some say that this सु is not भ्वादि ('षु प्रसवैश्व—र्य्ययोः' but it is स्वादि, 'षुञ् अभिषवे' 1248—Root No. ) on account of its being interposed between ष्टुञ् and धूञ् which also are ञित्—In that case there will be another form असौषीत् without इट् ( अट् सु सिच् ईट् त्—असौष् ईत् etc. ) : श्रु to hear—

मित—। स्तु इति 'ष्टुञ् स्तुतौ'—अदादिः। सु इति 'षु प्रसवैश्वर्य्ययोः' ( भ्वादि ) मतान्तरे तु 'षुञ्—अभिषवे' स्वादि इति वक्ष्यति'। 'इञ्च्यर्त्तिव्ययतीनाम्' ( ७।२।६६ ) इत्यत इडिति। 'अञ्जेः सिचि' ( ७।२।७१ ) इत्यतः सिचि इति च। तच्च षष्ठ्या विपरिणम्यते। तदाह—एभ्यः—सिच इडिति। परस्मैपदेषु—किम्—अस्तोष्ट—अधोष्ट। असावीत्—अट सु इट् सिच् ईट त् इति स्थिते सिचि वृद्धौ 'इट इटी'ति सिज्लोपे रूपम्। पक्षान्तरमाह—पूर्व्वोत्तराभ्यामिति। पूर्व्वोत्तराभ्याम्—ष्टुञ् धूभ्याम् ञिद्भ्यां ञलोपिभ्याम् साहचर्य्यात्—संसर्गात्—सुनोतेरेव—स्वादौ पठिष्यमाणस्य 'षुञ् अभिषवे' इत्यस्यैव ग्रहणं तेन भ्वादेरिटि अप्राप्ते—असौषीत्— अट सु सिच् ईट त् इति स्थिते वृद्धिः ; इटः परत्वाभावात्—सिज्लोपस्तु न। श्रु श्रवणे इति—

## २३८६। श्रुवः शृ च ॥३।१।७४॥

दी—। श्रुवः 'शृ' इत्यादेशः स्यात् श्नु प्रत्ययश्च (शव्विषये—इति तत्त्वबोधिन्याम्)। शपोऽपवादः। श्नोङित्वाद्धातोर्गुणो न। शृणोति। शृणुतः।

The substitute शृ is posted in place of the root श्रु and the affix ( vikarana ) श्नु ( नु ) is then affixed. This ( श्नु ) over-rules शप् here। The affix or vikarana श्नु—being ङित् (by—'सार्व्वधातुकमपित् (2234) ), the root ( शृ ) is not gunnated owing to the

prohibition—'क्ङिति च' ( 2217 ). But नु is gunnated when पित् affixes follow. Thus शृणोति where तिप् is पित् but तस् being ङित्—we have शृणुत—

मित—। श्रुवः इति 'श्रु'—शब्दस्य षष्ठ्येकवचनम्। अत्र चकारेण—'स्वादिभ्यः श्नुः' ( ३।१।७३ ) इत्यतः श्नु इत्यनुकृष्यते—तदाह श्नुप्रत्ययश्चेति। तत्त्वबोधिन्यां श्नप्रत्ययश्चेत्यनन्तरम्—'शब्विषये' इत्यधिकं दृश्यते तच्च फलितार्थकथनपरतया अधिकमपि सोढ़व्यम्। श्रु धातुं केचित् स्वादौ पठन्ति। तन्न। तथात्वे चकार वैयर्थ्यापत्तेः। स्वादित्वादेव श्नुप्रत्यये सिद्धे प्रभाव दर्शयितुमस्य इहोपन्यासः। शपोऽपवाद इति। अनेन कर्तृ थसार्व्वधातुक एवास्य प्रवृत्तिरिति विभावनीयम्। श्रोर्ङित्त्वादिति—'सार्व्वधातुकमपित्' ( २२३५ ) इत्यनेनेति भावः। धातोः 'शृ' इत्यस्येत्यर्थः। नुप्रत्ययस्य तु पित्सु गुणो—भवत्येवेति दर्शयति—शृणोति इति। शृनुतः—तसः ङित्त्वात् नोर्गुणो न। अथास्य अन्तिविभक्तौ उवङि—प्राप्ते (यण्विध्यर्थम्) आह—

२३८७। हुश्नुवोः सार्व्वधातुके ॥६।४।८७।

दी—। जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चासंयोगपूर्व्वोवर्णस्य यण् स्यादजादौ सार्व्वधातुके। उवङोऽपवादः। शृण्वन्ति। शृणोमि। शृण्वः—शृणुवः। शृण्मः—शृणुमः। शुश्रोथ। शुश्रुव। शृणु। शृणवानि। शृणुयात्। श्रूयात्। अश्रौषीत्। ध्रु ९४३ स्थैर्ये। ध्रवति। अयं कुटादौ—गत्यर्थोऽपि। दु ९४४ द्रु ९४५ गतौ। दुदोथ—दुदविथ। दुदुविव। दुद्रोथ। दुद्रुव। णिश्रि—( २३१२ ) इति चङ्। अदुद्रुवत्। जि ९४६ ज्रि ९४७ अभिभवे। अभिभवो न्यूनीकरणं न्यूनीभवनं च। आद्ये—सकर्मकः। शत्रून् जयति। द्वितीये—त्वकर्मकः। अध्ययनात् पराजयते। अध्येतुं ग्लाय-

तीत्यर्थः। 'विपराभ्यां जेः' (२६८५) इति तङ्। 'पराजेरसोढः' इत्यपादानत्वम्।

The substitute यण् is enjoined in place of the उ of the root हु and in place of that of an अङ्ग or verbal base to which is added the affix श्नु, which is marked with more than one syllable or vowel ( अच् ) and the letter उ in which is not preceded by any conjunct letter at the outset,—provided a Sarvadhatuka affix, beginning with an अच् or vowel follows. This ( यण् ) supersedes उवङ् ( directed by अचिश्नुधातुभ्रुवां य्वोरियङुवङौ ( 271—6.4.77 )).. Thus शृण्वन्ति ( श्रु + श्नु + झि = शृ श्नु अन्ति = शृणु अन्ति = शृण्व् अन्ति = शृण्वन्ति ; 'शृणोमि by नुप्रत्ययस्य पितसु गुणः'—शृणवः—शृणुवः by 'लोपश्चास्यान्यतरस्यां म्वोः ( २३३३ )। शुश्राव—( णल्—वृद्धि of श्रु, for it is not replaced by शृ when आर्द्धधातुक affixes follow ). शुश्रोथ—थल्—prohibition of इट by 'कृ सृ भृ वृ—' ( २२९३ ) and the अङ्ग is gunnated by 'सार्व—(२१६८), शुश्रुव (2nd per. pl. अ—here उवङ् comes in by 'अचिश्नु—' (२७१)। शृणु (लोट् सार्वधातुक hence श्नुप्रत्यय comes in and हि disappears by 'उतश्च प्रत्ययात्—' ( २३३४ ) ; शृणवानि—गुण and अवादेश by 'आडुत्तमस्य—' (२२०४), 'पितसु गुणः and 'एचोऽय्—' (६१) )। शृणुयात् (विधिलिङ्)। श्रूयात् (आशीः)—दीर्घ by—'अकृत्—' (२२९८)। अश्रौषीत्—(लुङ्) ; वृद्धि by 'सिचि—' (२२९७) and the root being अनिट्—सिच् does not elide. दुद्रोथ—दुद्रविथ ( द्रु + थल् ) option of इट by भारद्वाजनियम i. e., by 'अचस्तास्वत्—' (2294) and 'ऋतो—' (2296). दुद्रुविव—इट by क्रादिनियम and the affix व being कित्, the root is not gunnated and thus उवङ् comes. दुद्रोथ prohibition of इट् by

'क्षसृभृवृ—' (2293). Similarly दुद्रुव (here उवङ् comes in by अचिश्नु— (271); अदुद्रुवत् like असुस्रुवत् (under rule 2384). जि ज्रि—अभिभव means to defeat and to be defeated. In the former ense it is transitive as शत्रुन् etc ; and in the latter, it is intransitive as अध्ययनात् etc. 'thinks it unbearable to study.' Here जि is आत्मनेपद । by 'विपराभ्याम्—' (2685) and अध्ययन takes the fifth case-ending by 'पराजेः—' (589).

मित— । हुश्च श्नु श्चेति द्वन्द्वात्—षष्ठीद्विवचनम् । 'अङ्गस्य' (६।४।१) इत्यधिकृतमनुवर्त्तते । 'एरनेकाचोऽसंयोगपूर्व्वस्य (६।४।८२) इत्यतोऽनेकाचः' इति असंयोगपूर्व्वस्य' इति चानुवर्त्तते 'इको यण्' (६।४।८१) इत्यतो 'यण्' इति च । 'अचिश्नुधातु—' (६।४।७७) इत्यतोऽचीति च । तच्च 'सार्व्वधातुके' इत्यस्य विशेषणम् । तेन तदादिविधिः । किञ्च श्नु इत्यनेन च तदन्तं लक्ष्यते । तदेतत् सर्व्वं मत्त्वाह— श्नुप्रत्ययान्तस्य इत्यादि । असंयोगपूर्व्वस्य इति तु उकारस्यैव विशेषणं न तु श्नुप्रत्ययस्य । तेन 'आप्नुवन्ति' इत्यत्र उवङेव न यण् । उवङोऽपवादः परत्वादित्यर्थः । शृण्वन्ति— श्रु--शप् झि इति स्थिते श्नुवः शृचेति आदेशादौ कृते—शृणु अन्ति इति जाते यणादेशे (उकारस्थाने वादेशे इत्यर्थः) शृण्व् अन्ति—शृण्वन्ति इति । जुहोतेस्तु जुह्वति इति वक्ष्यते । एवं सुन्वन्ति इत्यादौ । हुश्नुवोः किम् ? योयुवति । युधातोर्यङ् लुकीदम् । अत्र भाष्यम्—'हुश्नुग्रहणं ज्ञापयति भाषायामपि यङ्लुग् भवतीत्युक्त्वा—'किमेतस्य ज्ञापने प्रयोजनं—वेभिदीति । चेच्छिदीति इत्येत् सिद्धं भवति' इति । असंयोगपूर्व्वस्य किम् ? अक्ष्णुवन्ति । उकारस्य प्रत्ययविशेषणत्वे तु 'अक्ष्णुवन्ति' इत्यत्रैव निषेधः स्यान्नत्वाप्नुवन्तीत्यत्रापीति ज्ञेयम् । शृणोमि—'पित्सु गुण' इत्युक्तत्वाद् गुणः । शृण्वः—शृणुवः— 'लोपश्चास्यान्यतरस्यां म्वोः' (२३३४) इत्युकारस्य—पाक्षिको लोपः । णलि वृद्धौ शुश्राव । शुश्रोथ—थलि रूपम्—'कृ सृ भृ वृ स्तुद्रु स्रु श्रुवो लिटि ।' (२२९१) इति इण्निषेधाद् गुणे (सार्व्व—(२१६८)) रूपम् । शुश्रुव उवङि मध्यमबहुवचने रूपम् । शृणु—'उतश्चप्रत्ययादि'त्यस्य (२३३४) प्राप्तं हिर्लोपे रूपम् । शृणवानि—'आडुत्तमस्य पिच्चेति आटि गुणे अवादेशे च मेर्निरिति निः(२२०४—२२०३सू.सं.); शृणुयात्—विधिलिङ् ।

ध्रूयात्—'अक्कत्—' (२२९८) इत्याशिषि दीर्घः। अध्रौषीत्—लुङ् सिचि वृद्धा-विड्भावे ( अनिट्त्वात् ) इटः परत्वाभावात् 'इटः इटि' ( २२६६ ) इति सिज्-लोपाभावः। ध्रु—स्थैर्ये—स्थिरत्वेऽस्मादेव ध्रुव इति। ध्रवति 'सार्व्व—'(२१६८) इति गुणेऽवादेशे च रूपम्। दुद्रु इति आद्यस्य रूपं दर्शयति थलि—दुद्रोथ दुद्रविथ भारद्वाज-नियमादिड्विकल्पः। उभयत्रापि गुणः। उत्तरत्र अवादेशे विशेषः। दुदुविव—क्रादि-नियमान्नित्यमिट् 'क्राद्यन्यो लिटि सेड् भवेत्,' वप्रत्ययस्य किच्चात् गुणाभावे 'अचिश्नु—' (२७१) इत्युवङ्। अथ क्रादिसूत्रोपात्तस्य—( २२९३ ) द्रवते रूपमाह—थलि—दुद्रोथ—स्पष्टम्। दुद्रुव—क्रादिनियमादिण्निषेधे—प्रत्ययस्य—कित्त्वाद् गुणाभावे पूर्व्व-वदुवङ्। अदुद्रुवत् चङि द्वित्वे रूपम्। अत्र यद् वक्तव्यम् तद् (२३८४) सूत्रस्य—'लघू-पधगुणादि'तिवृत्ति—ग्रन्थव्याख्यानावसरे प्रोक्तम्। न्यूनीकरणमधःकरणम्—एतेन 'कस्य चिदि'ति कर्म्मषष्ठीत्वाक्षेपात्—सकर्म्मकमिति गम्यते, तदाह—आद्ये इति। न्यूनीभवनमधोभवनम्। एतेन कर्त्तृमात्रस्याक्षेपादकर्म्मकत्वमनुमीयते तदाह—द्वितीयेत्विति—अन्यत् स्पष्टम्।

दी—। अथ डीङन्ता ङितः। ष्मिङ् ९४८ ईषद्धसने। स्मयते। सिष्मिये। सिष्मियिढ्वे—सिष्मियिध्वे। गुङ् ९४९ अव्यक्ते शब्दे। गवते। जुगुवे। गाङ् ९५० गतौ। गाते। गाते। गाते। इट—एत्वे कृते वृद्धिः। गै। लङ इटि। अगे। गेत। गेयाताम्। गेरन्। गासीष्ट। 'गाङ्कुटादिभ्यः—' (२४६१) इति सूत्रे इङादेशस्यैव गाङो ग्रहणं न त्वस्य। तेनाङित्वात्—'घुमास्था—' (२४६२) इतीत्वं न। अगास्त। आदादिकोऽयमिति हरदत्तादयः। फले तु न भेदः। कुङ् ९५१ घुङ् ९५२ उङ् ९५३ ङुङ् ९५४ शब्दे। अन्ये तु 'उङ् कुङ् खुङ् गुङ् घुङ् ङुङ्' इत्याहुः। कवते। चुकुवे। घवते। अवते।

ऊवे। 'वार्णादाङ्गं बलीयः' (परि ५६) इत्युवङ्। ततः सवर्णदीर्घः। ओता। ओष्यते। ओषीष्ट। औष्ट। ङवते। जुङुवे। ङोता। च्युङ् ९५५ ज्युङ् ९५६ प्रुङ् ९५७ प्लुङ् ९५८ गतौ। 'क्लुङ्' इत्येके। रुङ् ९५९ गतिरेषणयोः। रेषणं हिंसा। रुरुवे। रवितासे। धृङ् ९६० अवध्वंसने। धरते। दध्रे। मेङ् ९६१ प्रणिदाने। प्रणिदानं—विनिमयः प्रत्यर्पणं च। प्रणिमयते। 'नेर्गद—' (२२८५) इति णत्वम्। तत्र घुप्रकृतिमाङिति पठित्वा ङितो माप्रकृतेरपि ग्रहणस्य इष्टत्वात्। देङ् ९६२ रक्षणे। दयते।

अथ डीङन्ताः etc.—i. e. upto डीङ् (968) विहायसा गतौ—. ङित्—i. e. आत्मनेपदिनः। ष्मिङ् (स्मि) to smile. स्मयते—स्मि शप् तिप् (by धात्वादेः—2264)—स्मे अते (by सार्व—' (2168) and 'टित—'। सिष्मिये—duplication, गुण being barred on account of its कित्त्व। इयङ् by अचिश्नु—comes in and षत्व by 'इण्कोः—आदेश प्रत्यययोः'—(211-12). सिष्मियिढ्वे—सिष्मियिध्वे—option of ढत्व by 'इणः—' (2247)—(स्मि + ध्वे—स्मि स्मि इट् (वलादि—) ध्वे—सिष्मियङ इढ्वे by इयङ्। without ढत्व—सिस्मियिध्वे। गवते—गु शप ते—गो अते—गव् अते। जुगुवे—गु ए—जु गुव् ए (by कुहोश्चु (2245) and अचिश्नु etc.)। गा to go—गा + शप् ते by 'टित आत्मनेपदानां टेरे—गाते (1). गा + शप् + आते = गा अ आते = गा आते by 'अकः सवर्णे दीर्घः' (856. 1. 101) = गाते (2). Here though the rule 'आतो ङितः (2235—/. 2. 81.) was legitimate on account of its being posterior to the former ('अक—'), yet it ('आतो—') does not apply on the ground that the परिभाषा 'वार्णादाङ्गं बलीयः—' is superseded by सवर्णदीर्घ। But in गा शप् झ—

गा—अ अन्ते—गा अन्ते—, the subsequent rule 'आत्मनेपदेष्वनतः' (2251—7. 1. 5). applies and thus अन्ते being replaced by अते (अत्+'टित आत्मनेपदानां टेरे'+ए) we get the same form गाते (3). इट् (first person sing.) being substituted by ए (by 'टित आत्मने—') गा gets the single वृद्धि substitute by 'वृद्धिरेचि' (72—6. 1. 88). Thus गा शप् इट्—गा अ इट्—गाए=गे। In the case of the affix इट् of लङ्—अट् गा शप् इट्—अगा अ इ—अगा इ (लङ् not being टित्—'आद्गुणः' (69+6. 1. 87) applies=अगे— (गेत etc. in विधिलिङ्— ('अतो येयः'—(2212). गासीष्ट—( आशीः सीयुट् सुट् त )। In the rule 'गाङ्कुटा—' (2561) the substitute 'गाङ्' of इङ् (1946) अध्ययने' अदादि comp 'गाङ् लिटि' (2459). is meant and this 'गाङ् to go' is (भ्वादि)। Thus it being other than the गाङ् substitute is not ङित्—by 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' (2461) and not being ङित्—it does not get ईत्व (ई) by—घुमास्थागापाजहातिसां हलि (2562). Thus अट् गा सिच् त—अगास्त। Haradatta and others take this to belong to the अदादि (class and not to भ्वादि class as we have done. There is no distinction, however, as to the consequence. In the लिट—ए form of उङ्, the process is—उ ए उ=उ उउवङ् ए—by the परिभाषा 'वार्णादाङ्गं बलीयः'—An operation which is taught in the अङ्गाधिकार—possesses greater force than an operation which concerns the combination of letter i. e. which is taught in the Sandhi-rules.' Thus उवङ् comes first and then the 'वार्ण' (operation or सवर्ण दीर्घ by 'अकः—' (85) giving उ उवे—ऊवे।

[ Note that without this परिभाषा, the process would have been diametrically opposite i. e. सवर्णदीर्घ would come to operate

first and then the अङ्ग operation and the result would have become उवे (उ उ ए = ऊ ए = उव् ए and not ऊवे ( as shown above). Note also, by the way, that in some cases, though not in all, the authoritative explanation alone is our refuge ( व्याख्यानमेव शरणम् ) and hence there runs the परिभाषा 'अकृतव्यूहाः पाणिनीयाः'—The followers of Panini do not insist on the taking effect of a rule, when its cause or causes disappear' ( Kielhorn ). This is why in the former, case गा अ ( शप् ) आते, the सवर्णदीर्घ applies first and the अङ्ग परिभाषा later where as in this case ( ऊवे ) the अङ्ग परिभाषा or उवङ् takes effect first and the वर्ण later. ] ओषीष्ट—( आशीर्लिङ ) ; औष्ट—लुङ्—आट् ओसिच् त वृद्धिः) ; ङवते—ङुङ् (ङु) + शप् + ते = ङो अ ते = ङव् अते etc. जुङुवे लिट्—ङ in the अभ्यास is replaced by ज by 'कुहोश्चुः' (2245) । मेङ्—प्रणिदान means to exchange and also to give back, restore to—प्रणिमयते—। How to defend the णत्व of नि here, the rule 'नेर्गदनदपतपदघुमा—' (2285) read मा and not मेङ् ? In answer to this he (Bhattoji) says that णत्व—how ever in the above mentioned (2285) rule, the reading should be 'वाघुप्रकृतिमाङ्' in place of 'घुमा' so that the ( लाक्षणिक or secondary ) ङ-eliding माप्रकृति ( or मेङ् ) also will be included as the ङित् दा प्रकृति ( or देङ् ) is taken within the घुसंज्ञा । Thus the णत्व is legitimate. देङ to protect—दयते ।

मित—। अथ डीङन्ता इति—डीङ् ( ९६८ ) विहायसा गतावित्यन्ता इत्यर्थः । ङित इति—आत्मनेपदिन इत्यर्थः 'अनुदात्तङित आत्मनेपदम्' (२१५७) इति सूत्रात् । सिष्मिये—षोपदेशत्वात् षत्वम् ( आदेश—' २१२ इत्यनेन ) । सिष्मियिढ्वे—सिष्मियिध्वे—इणः षीध्वंलुङ्लिटां धोऽङ्गात् ( २२८९ ) इति मूर्धन्यादेशेन ढत्वविकल्पः ।

इङ्गुणायादेशाः। पाते गाते गाते—इति—तातांझेषु क्रमेण—रूपाणि—'टित आत्मने- पदानां टेरे' इति सर्व्वत्र एत्वम्। एवञ्च प्रथमं स्पष्टम। द्वितीये तु गा शप्—आते=गा अ आते इत्येवं रूपे स्थिते—'वार्णादाङ्ग' बलीयः' इति परिभाषात नाश्रीयते तस्य स्थान्यं काले एव प्रवृत्तेः। एवं च परमपि 'आतो—ङितः' (२२३६—७।२।८१) इति सूत्रं बाधित्वा—'अकः सवर्णे—' (८५—६।१।१०१) इति दीर्घे कृते गा आते इति भवति ततोऽप्यनेनैव गाते इति। वार्णपरिभाषाश्रयणं तु 'आत—' इत्यस्य प्राक् प्रवृत्त्या गेते इति स्यात्। तृतीये तु—गा अ झ इति स्थिते 'आत्मनेपदेष्वनतः (२२५८—७।१।५) इत्यदादेशे एत्वे सवर्णदीर्घे च गाते इति सर्व्वत्र रूपं तुल्यम्। गासे गाथे गाध्वे। गे—(गा अ इट्—गा अ ए—गा ए—वृद्धिरेचि—७२)। गावहे गामहे। लोटि—गाताम् गाताम् गाताम्। गास्व गाथाम् गाध्वम्। गै गावहै गामहै। लङि—अगात् अगाताम अगात। अगाथाः अगाथाम् अगाध्वम्। अगे (अट् गा शप् इट्—अगा अ इ—अगा—इ—'आद् गुणः' इत्येत्वम्)। विधिलिङि—गेत गयाताम गेरन् इत्यादि स्पष्टम्। गासीष्ट गासीयास्तामित्याद्याशीर्लिङि। अथ गाङ् गतौ इत्यस्य ङित्त्वात् 'गाङ्कुटादिसूत्र—' (२४६१)—स्थगाङो ग्रहणं नेत्याह—गाङ्कुटादीति। तत्र 'गाङ् लिटि' (२४५९) इत्यनेन इङ् (१०४६) अध्ययने इत्यत्रादिष्टस्य—गाङो ग्रहणं न त्वस्य भौवादिकस्य। अतएव गाङ् कुटादिव्यतिरिक्तत्वात् ङिन्न भवति। अङित्त्वाच्च घुमास्थेति—(२४६२) ईत्वमपि न। तेन अगास्त इत्यादीन्येव लुङि रूपाणि न लगीष्ट इत्यादीनि। आदादिक अदादौ पठितः अयम् गाङ् गतौ इति धातुः इति हरदत्तादयो मन्यन्ते। फलन्त्विति—तथाहि गा शप् ते इति स्थिते 'अदिप्रभृतिभ्यः शपः' इति शब् लुकि गाते इति रूपम्। आते इत्यादावपि समानमेव रूपम्। अथ 'उङ्' इत्यस्य रूपं दर्शयति—अवते इत्यादि, ओ शप् ते—ओ अते—अव् अते—अवते सार्व्वेति (२१६८) गुणत्वेऽवादेशः। लिटि विशेषमाह वर्णादाङ्ग' बलीयः इति 'संहिता कार्य्यात्—अङ्गकार्य्यं बलवत्तरम्' इति तदर्थः। तेन उ उ ए इति स्थिते उवङि प्राप्ते उ उव् ए इति जाते अकः—इति सवर्ण दीर्घे ऊवे। अन्यथा सवर्ण दीर्घे प्राग् विहिते ऊ ए इति स्थिते उवङि—उव् ए—उवे इति स्यादिति

भावः। ओषीष्ट—परतः मास्ते—आशिषि रूपम्। औष्ट—लुङि आटश्चेति वृद्धौ इडभावे च रूपम्। मेङ् प्रणिदाने इति। विनिमयः परिवर्त्तनेनादानम्। ननु 'नेर्गदन-दपत पद घुमास्यतिहन्ति—' (२२८५) इति सूत्रे माधातोरुत्तरस्यैव ने प्रादुपसर्गव-शात् णत्वं विधीयते 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति न्यायात्—मेङश्च लाक्षणिक-त्वात्। तथाच तस्य न स्यादित्यव्याप्तिः। न च 'गा-मा-दा-ग्रहणेष्वविशेष' इत्यभ्युपगम्य अविशेषात् (सामान्येन ग्रहणात्) मेङोऽपि—स्यादिति वाच्यम्। तथात्वे हि स्वादिक्रा-द्योर्डुमिङ्मीञोरात्वे कृते 'प्रणिमाता प्रणिमास्यति' इत्यादिष्वपि नेर्णत्वं स्यादित्यतिव्याप्ति-रिति चेत्। सत्यम्। 'घुसंज्ञासूत्रे (दधा घ्वदाप्) प्रणिदयते प्रणिधयति इत्यादौ नस्यणत्व-सिद्धये—भाष्यकारैरित्थं' सिद्धान्तितम्। नेर्गदनद—इति णत्वविधौ—'घुमा—' इत्यस्य स्थाने 'घुप्रकृतिमाङ्' इति पठनीयम्। घुश्चप्रकृतिश्चमाङ् चेति द्वन्द्वः। प्रकृतिः कस्येत्या-काङ्क्षयां पूर्व्वोत्तरयोः (घुमाङोरेव)। तेन न क्वाप्यव्याप्तिः। नापि मा माने इत्यत्र मिनातिमिनोत्योश्च (मीञ्डुमिञोश्च) अतिव्याप्तिः। 'माङ्' इति ङकारानुबन्धकस्यैव पठितत्वादिति (तत्त्वबोधिनी)। अत्र भाष्यवचनञ्च— '...... अवश्यं तत्र (घुइत्यत्र) मार्थं प्रकृतिग्रहणं कर्त्तव्यम्। प्रणिमयते प्रण्यमयत इत्येवमर्थम्। तत् पुरस्तात्—अपकृष्यते घुप्रकृतौ माप्रकृतौ चेति। यदि प्रकृतिग्रहणं क्रियते प्रनिमिनोति प्रनि-मिनाति। अत्रापि प्राप्नोति। अथ—क्रियमाणेऽपि प्रकृतिग्रहणे इह कस्मान्नभवति। प्रनिमाता प्रनिमातुं प्रनिमातव्यम् इति। आकारान्तस्य—ङितो ग्रहणं विज्ञायते। यथैव तर्हि अक्रियमाणे प्रकृतिग्रहणे—आकारान्तस्य ङितो ग्रहणं विज्ञायते एवं क्रियमाणेऽपि प्रकृतिग्रहणे—ङितो ग्रहणं विज्ञास्यते। विकृतार्थेनापि (प्रणिमाता प्रनिमातुमित्यद्यर्थेन) चापि नार्थः। दोष एवैतस्याः परिभाषायाः 'लक्षणपदोक्तयोः प्रतिपदोक्तस्यैवेति गा-मा-दा-ग्रहणेष्वविशेष इति। एतदेवाभिप्रेत्याह—तत्रेति णत्व-विधावित्यर्थः। देङिति—

## २३८८। दयतेर्दिगि लिटि ॥७।४।९॥

दी—। 'दिग्यादेशेन द्वित्वबाधनमिष्यते' इति वृत्तिः। दिगेऽ।

The substitute 'दिगि' replaces the root देङ् in लिट। By this, दिगि will not be duplicated—cp.—the vrittikara i.e. the Kasika vritti. 'It is intended that the duplication will be barred by the substitute दिगि'। Thus देङ्+ए=दिगि+ए=दिग्ये (इणो यण्चि (४७)'।

मित—। दयतेर्देङ् धातोः (स्थाने) दिगि (इत्यादेशः) स्यात् लिटि—इति सूत्रार्थः। एवञ्च देङ्+लिट ए इति स्थिते दिग्यादेशेन (दिगीति लुप्तप्रथमाकमिति ज्ञेयम्—अनेकाल्त्वात् सर्व्वादेशे) दिगि ए इति जाते 'लिटि धातोरनभ्यासस्य' (२१७७—६।१।८) इति द्वित्वे प्राप्ते आह—'दिग्यादेशेन' इति। स्पष्टम्। वृत्तिरिति भाष्यस्याप्युपलक्षणम्—'दिग्यादेशः क्रियताम् द्विर्वचनमिति। परत्वाद् दिग्यादेशेन भवितव्यम्। तत्र साभ्यासस्येति वक्तव्यम्। एवं तर्हि (साभ्यासस्य इति वचनेनेत्यर्थः) दिग्यादेशो द्विर्वचनं बाधिष्यते' इति तत्रस्थभाष्यवचनात्। न चैवं 'प्यायः पी' 'चक्षिङः ख्याञ्' इति पी ख्याञ्भ्यामपि द्वित्वबाधनं स्यादिति वाच्यम्। तत्र परसप्तमीत्वाभावादिति एतत् सूत्रस्थभाष्यकैयटयोः स्पष्टम्। एवं बभूव इत्यत्रापि विषयसप्तम्याश्रयणात् द्वित्वासिद्धिरित्यलम्। अथ दयते लुङि विशेषमाह—

## २३८९। स्थाघ्वोरिच्च ॥१।२।१७॥

**दो—। अनयोरिदादेशः स्यात् सिच्च कित् स्यात् तङि। अदित। अदिथाः। अदिषि। श्यैङ् ९६३ गतौ। श्यायते। शश्ये। पैङ् ९६४ वृद्धौ। प्यायते। पप्ये। प्याता। त्रैङ् ९६५ पालने। त्रायते। तत्रे। पूङ् ९६६ पवने। पवते। पुपूवे। पविता। मूङ् ९६७ बन्धने। मवते। डीङ् ९६८ विहायसा गतौ। डयते। डिड्ये। डयिता। तॄ ९६९ प्लवनतरणयोः।**

The इत् or इ is the final substitute of the roots स्था and the six दा धा—technically known as 'घ' and the affix सिच्, after them is कित्—(in आत्मनेपद)। Thus अट् देङ् सिच् त+अ दा स् त ( आदेच:—(२३७०) )—अ दि त=अदित (स् लोप—by ह्रस्वादङ्गात् (२३६९)). similarly अदिथाः etc. श्यायते—श्यैङ्+शप् ते (by 'टित:—') श्याय अ ते। शश्ये—श्यैङ्+ए=श्या ए—(by—आ देच)—श्या श्या ए—श श्या ए ( हलादि: शेष: )—शश्य् ए (by 'आतो लोप इटि च (२३७२) ) ;—प्यैङ् and त्रैङ् are like श्यैङ्। पूङ् topurify पवते=गुण and अवादेश। पुपुव by अभ्यासह्रस्व and उवङ्। डीङ् to go in the sky डिड्ये—by अभ्यासह्रस्व and यण्। तॄ to swim and cross—

मित—। स्था च घुश्च तयोरिति स्थान षष्ठी। तेन तयो: स्थाने इत्यर्थलाभ:। 'अलोऽन्त्यस्य—' इति अन्त्यस्य आकारस्यैव इत् ( इ ) इत्यादेश:। चकारार्थमाह—सिच्चेति 'असंयोगाल्लिट कित्' (१।२।५) 'हन: सिच्' (१।२।१४) इत्यत: कित्—सिचोरनुवर्तनादितिभाव:। परस्मैपदेषु—नेदं प्रवर्तते—अस्थात्। अदात्। अधात्। आत्मनेपदेषु अदित—( अट् दा सिच् त—अदिस् त—अदि० त 'ह्रस्वादङ्गादि'ति सिचो लोप:। एवम्—अधित। अस्थित। अस्थिषाताम् इत्यादि। श्यैङिति—शश्ये—'आदेच:—(२३७०) इत्यात्वे कृते अभ्यासह्रस्वे, 'आतो लोप इटि च' (२३७२) इत्युत्तरखण्डस्य आलोपे च रूपम्। त्रैङ् श्यैङ्वत्। पुपूवे इति पूपू ए इति स्थिते पूर्वखण्डस्य ह्रस्वे उत्तरस्य उवङादेशे पुपुव् ए इति जाते रूपम्। पविता लुट् इट्। मूङ्—पूङ्वत्। डीङ्—डिड्ये अभ्यासह्रस्वे यणादेशे च रूपम्। तॄ इति—

२३८०। ऋत इद्धातो: ॥७।१।१००॥

टी—। ॠदन्तस्य धातोरङ्गस्य इत् स्यात्। "इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन।" ( वार्त्तिक ४३७३ )। तरति।

'ऋच्छत्यृताम्' ( २३८३ ) इति गुणः। 'तॄफल—' ( २३०१ ) इत्येत्वम्। तेरतुः। तेरुः।

The इत् or इ is the final substitute of the अङ्ग or base of a root that ends in long ॠ i.e. this ॠ is replaced by इ, then by 'उरण् रपरः' (७०) the forms are किरति ( कॄ विक्षेपे ) गिरति ( गॄ निगरणे ) etc. But in the case of तॄ, this इत्व, though अन्तरङ्ग, will be barred by the subsequent rule सार्व्वधातुकार्द्धधातुकयोः ( ७।३।८४ ) accroding to the Vartika—इत्त्वोत्त्वाभ्याम् etc. 'After having barred the इत्व ( ऋतइद्धातोः—७।१।१०० ) and उत्व ( उदोष्ठ्यपूर्व्वस्य ( ७।१।१०२ ), the गुण ( सार्व्वधातुकार्द्ध—७।३।८४ ) and वृद्धि ( 'अचो ञ्णिति' ७।२।११५ ) will come in ( to operate in their places in conformity with the विप्रतिषेध rule ( 'विप्रतिषेधे परं कार्य्यम्' )। Thus तरति—ततार ( पिपर्त्ति—पपार ) etc. In तेरतुः, the process is तॄ + अतुस् = तर् तर् अतुस् by ऋच्छत्यॄताम् ( २३८३ ) = 0 तेर् अतुस् by 'तॄफल —' ( २३०१ )। Similarly तेरुः, तेरिथ, तेरथुः etc.

मित—। ॠदिति तदन्तस्य ग्राहकम्। 'अङ्गस्य' ( ६।४।१ ) इति सप्तमाध्याय—परिसमाप्तिपर्य्यन्तमधिकृतम्। तदाह—ॠदन्तस्येत्यादि। ननु इत्वे कृते किरति गिरतिवदत्रापि 'तिरति' इति स्यात्—तथा—'पिपर्त्ति' इत्यत्र 'उदोष्ठ्यपूर्व्वस्य' (२४९४ —७।१।१०२) इति उत्त्वं स्यात् तयोरन्तरङ्गत्वादिति चेत्। न। तन्निषेधपरवार्त्तिक—सद्भावात् इति वार्त्तिकमुपन्यस्यति—इत्वोत्वाभ्यामिति—इत्वञ्च उत्वञ्च ( द्वन्द्वः ) ताभ्याम् —ल्यब्लोपे पञ्चमी। इत्वोत्वे बाधित्वा इत्यर्थः। गुणवृद्धी कर्त्तृपदे। विप्रतिषेधेन हेतौ करणे वा तृतीया। तेनायमर्थः—'विप्रतिषेधे परं कार्य्यम्' इति सूत्रं निमित्तीकृत्य अन्तरङ्गमपि इत्वम् उत्वञ्च बाधित्वा गुणः ( 'सार्व्व—' ७।३।८४ ) वृद्धिश्च ( अचोञ्णिति—७।२।११५ ) भवतः। अतः तरति, ततार, पिपर्त्ति, पपार इत्यादि

सिध्यति । एतेन 'पूर्व्वपरनित्यान्तरङ्गापवादानामिति परिभाषात्र नाश्रितव्ये'ति विभावनीयम् । अथ तेरतुरित्यादिः प्रक्रियां दर्शयति—ऋच्छे'ति । अभ्यासलोपश्चे'त्यपि द्रष्टव्यम् । एवं तेरिथ, तेरथुः, तेर । ततार—ततर, तेरिव, तेरिम ।

२३८९ । वृतो वा ॥७।२।३८॥

दी—। वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि । तरिता—तरीता । 'अलिटि' इति किम् ? तेरिथ । 'हलि च' (३५४) इति दीर्घः । तीर्य्यात् ।

The augment इट्, coming after वृङ्, वृञ् and roots ending in long ॠ, becomes long optionally—except when लिट् follows. Thus in लुट्—तरिता—तरीता ( तॄ इट् ता—तर् इ ता गुण—by सार्व्वधातु—(२१६४) )। Why say अलिटि—not in लिट्—? witness तेरिथ ( without the long altern tive )। In आशीः—the form being तॄ यात्—तिर् यात् ( 'ऋत इत्—' ( २३९० ). 'उरण् रपरः' ( ७० ), here गुण does not apply ; for यासुट् is कित् by 'किदाशिषि') । But the rule 'हलि च'(३५४) applies giving तीर्य्यात्—similarly, तीर्णं, कीर्णं, गीर्णं etc.

मित—। वृ च ॠत् चेति समाहारद्वन्द्वेन वॄत् इति, तस्मात्—इति पञ्चम्यन्तम् । वृ इति वृङ्वृञोर्ग्रहणम् ॠत इति च तदन्तस्य । तदाह—वृङ्वृञ्भ्यामॄदन्ताच्चे'ति । 'आर्द्धधातुकस्येड्वलादेः' (७।२।३५) इत्यत इटमनुवर्त्त्य षष्ठ्या विपरिणम्याह—इटः इति । 'ग्रहोऽलिटि दीर्घः' (७।२।३७) इत्यतोऽलिटीति दीर्घ इति चानुवर्त्तते तदाह—दीर्घ इत्यादि । तरितेत्यादि गुणे रपरत्वे दीर्घविकल्पः । अलिटि इति प्रसज्यप्रतिषेध—तेन लिटि न स्यादित्यर्थः । अतो लिटि उदाहरति तेरिथ इति । तीर्य्यात्—आशिषि यासुटः कित्वाद् गुणाभावे'ऋत' इति इत्वं रपरत्वं हलि चेति (३५४) दीर्घश्च । एवं कीर्णगीर्णशीर्णाः । तथास्य सिचि इटो दीर्घो नेत्याह—

२३८२। सिचि च परस्मैपदेषु ॥७।२।४०॥

दी—। अत्र वृत इटो दीर्घो न। अतारिष्टाम्।

अथाष्टावनुदात्तेतः। गुप ९७० गोपने। तिज ९७१ निशाने। मान ९७२ पूजायाम्। बध ९७३ बन्धने।

The augment इट् does not get the long substitute when it comes after वृङ्, वृञ् and ॠकारान्त roots, provided सिच्—follows in the परस्मैपद। Thus अतारिष्टाम् (अट् तॄ इट् सिच् ताम् (तस्) —अतार् ('सिचि वृद्धिः—' २२९७) इष् ताम् etc). वृञ्—अवारिष्टाम्। The former (वृङ्) is आत्मनेपदी hence it has got no such form similarly अतारिषुः etc. The singular form is अतारीत् (सिच् लोप by 'इट इटि' २२६६)।

अथ etc.—Now we take up the eight अनुदात्तेत् or आत्मनेपदी roots (beginnng with गुप् and ending in हद(९७७)). तिज—to sharpen etc.

मित—। 'आर्द्धधातुकस्येट्—' (७।२।३५), 'ग्रहोऽलिटि दीर्घः' (७।२।३७) 'वॄतो वा' (७।२।३८), 'न लिङि' (७।२।३९), 'सिचि च परस्मैपदेषु' (७।२।४०), इत्यष्टाध्यायीसूत्रक्रमः। तदाह—अत्रेति। परस्मैपदपरे सिचि इत्यर्थः। वृतः—वृङ्-वृञभ्यामृदन्ताच्च परवर्त्तिन इटो दीर्घादेशो न। आत्मनेपदित्वाद् वृङ उदाहरणं नास्ति। इतरयोस्तु अतारिष्टाम् अवारिष्टाम्—सिचि वृद्धौदीर्घाप्राप्तौ च रूपम्। एवमतारिषुः अवारिषुः इत्यादौ। सिचि तिपि तु अतारीत्—'इट ईटि' (२२६६) इति सिज् लोपे वृद्धौ रूपम्।

अष्टाविति। गुप इत्यारभ्य हद पुरीषोत्सर्गे (९७७) इत्यन्ता इत्यर्थः। निशानं तीक्ष्णीकरणम् इत्यादि।

२३८३। गुप्तिज्किद्भ्यः सन् ॥३।१।५॥

२२६४ । मान्वधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥३।१।६॥

दी—। सूत्रद्वयोक्तेभ्यः सन् स्यात् । मानादीनामभ्यासस्येकारस्य दीर्घश्च । 'गुपेर्निन्दायाम्' (वार्त्तिक १६८७)। 'तिजेः क्षमायाम्' (वा—१६८८)। 'कितेर्व्याधिप्रतीकारे' (वा—१६८९) 'निग्रहे' 'अपनयने' 'नाशने' 'संशये' च। 'मानेर्जिज्ञासायाम्' (वा—१६९२) 'बधेश्चित्तविकारे' (वा—१६९३)। 'दानेरार्जवे' (वा—१६९४)। 'शाने र्निशाने' (वा—१६९५)। 'सनाद्यन्ताः—' (२३०४) इति धातुत्वम् ।

The affix सन् is added to roots (गुप्, तिज् कित्, मान्, बध्, दान् and शान्) mentioned in (these) two rules. And the इकार occuring in the अभ्यास (duplicate) of मान् etc. (वध्, दान्, शान्), becomes दीर्घ or long. (But these roots will not take सन् in the sense attached to them by Panini but in particular senses as expressed by the vartikakara. Thus गुप् takes सन् in the sense of censure ; तिज् in the sense of patience or enduring ; कित् in the sense of healing a disease, punishing, removing, destroying and in the sense of apprehension ; मान् in the sense of wishing to know i.e. deciding ; वध् in the sense of affecting the mind ; दान् in the sense of straightforwardness and शान् takes सन् in the sense of whetting. After सन् has been added (to them),they will be considered as secondary roots by 'सनाद्यन्ता धातवः' (2304).

मित—। मानवधदान्शान्भ्यः + दीर्घः + च + आभ्यासस्य इतिच्छेदः । सूत्रद्वयो-

तीभ्य इति—गुप्, तिज्, कित् इत्येभ्यः मान्, वध्, दान्, शान् इत्येतेभ्यश्च इत्यर्थः। तत आभ्यासस्य इतिच्छेदः। अभ्यासस्य विकारः आभ्यास ( अण्प्रत्ययः ) स च 'सन्यतः' ( २३१७) इत्यत्र विहितस्य इत्वस्यैव ग्राहकः न तु 'ह्रस्वः' ( २१८० ) इति ह्रस्वस्य इति 'गुणो यङ्लुकोः' ( ७।४।८२ ) इति सूत्रे भाष्ये स्पष्टम्। तदाह मानादीनामिति। अयमर्थः—गुपादिभ्यो मानादिभ्यश्च सन् स्यात्। विशेषस्त्वयं यत्—मानादीनामेव अभ्यासावयवस्य इकारस्य दीर्घ इति गुपादेस्तादृशादेशाभावात्। सं स्वतेभ्यः सूत्रकार—निर्दिष्टार्थेषु न भवति किन्तु वार्त्तिकाद्विहितार्थेष्वेवेति मार्गिवासनकसुपन्यस्य दर्शयति गुपे—र्निन्दायाम् इत्यादि शानेर्निशाने इत्यन्तम्। क्षमा शक्तौसत्यामप्यहिंसनम्। अपनयनं दूरीकरणम्। संशयो विचिकित्सा ( विचिकित्सातु संशय इति कोषात् )। जिज्ञासा विचारः 'मानेर्विचारे' इति वृत्तिग्रन्थात्। चित्तविकारो घृणादिः। आर्जवं कापट्यविरहः। निशानं तीक्ष्णीकरणम्। सनाद्यन्ता इति धातुत्वमिति—तत एभ्यः अप्तिवादयः स्युरिति भावः।

## २३९५। सन्यङोः ॥६।१।९॥

**टी—। सन्नन्तस्य—यङन्तस्य च प्रथमैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य। अभ्यासकार्य्यम्। गुपिप्रभृतयः किद्भिन्ना निन्दाद्यर्थका एवानुदात्तेतः। दान्शानौ तु स्वरितेतौ। एते नित्यं सन्नन्ताः। अर्थान्तरेषु त्वननुबन्धकाश्चुरादयः। अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्तङ्। धातोरित्यविहितत्वात् सनोऽत्र नार्द्धधातुकत्वम्। तेनेड्गुणौ न। जुगुप्सते। जुगुप्साञ्चक्रे। तितिक्षते। मीमांसते। भष्भावः। चत्वम्। बीभत्सते। रभ ९७४ राभस्ये। आरभते। आरेभे। रब्धा। रप्स्यते। डु लभष् ९७५ प्राप्तौ। लभते। ष्वञ्ज ९७६ परिष्वङ्गे।**

The first syllable of any root and the second syllable of any

अजादि ( beginning with an अच् or vowel ) root are duplicated after the roots ( both हलादि and अजादि ) have been affixed with सन् and यङ् । These desiderative and frequentative roots will then have the operations due to duplication viz—हलादिशेष etc. The roots गुपि etc. except कित् i. e. गुप्, तिज्, मान् and वध् are अनुदात्तेत् ( आत्मनेपद ) in the senses of censure, endurance or forbearance etc only. The rest two दान् and शान् are स्वरितेत्—(i. e. they are आत्मनेपद —only when the result of the action accrues to the agent). These seven roots are always used as desideratives. In the senses other than censure etc i. e., in the senses of concealing etc, they have not the अनुदात्त अनुबन्ध and belong to the चुरादि class (and not to the भ्वादि )। But when they are taken to belong to the चुरादि class, they wtll take both the आत्मनेपद or परस्मैपद termination according as the fruition rests on the agent (कर्तृगे क्रियाफले) or not (अकर्तृगे क्रियाफले) by the rule 'णिचश्च' (2554—1.3.74). Thus the Panini's instiuction in the धातुपाठ, that these roots are अनुदात्तेत: or आत्मनेपदिन:,when used singly,is of little consequence, for they are never used singly. Hence the अनुदात्तानुबन्ध having no scope there i. e. in the cases of the roots' being singly used, they (roots गुप् etc) will have तङ्,—(only) after they have been affixed with सन् । Here (in गुप्तिज्किद्भ्य: सन् ) the affix सन् is not an आर्द्धधातुक for there is no mention of the term 'धातो:' (as in 'धातो: कर्मण:—' (2608), 'धातोरेकाचो—' (2629), etc. ) Hence neither इट् will be prefixed to सन् nor will गुण be enjoined

to a root, followed by this सन्। Thus जुगुप्सते—( गुप् सन् शप् ते—गुप् गुप्—स अते—गुगुप् स अते—जुगुप्स अते ( 'कुहोश्चुः—2245 )—जुगुप्सते—( 'अतोगुणे' (191)। जुगुप्साञ्चक्रे by 'कास्प्रत्ययादाम्—' (2309) and अतो लोपः ( 2308 ). तितिक्षते—तिज् तिज सन् शप् ते=तितिज् अ ते then by 'खरि च' (121) तितिक् स अते ( इण्कोः—(211) and आदेशप्रत्यययोः—212)—तितिक्ष अते—तितिक्षते (by अतो गुणे—191). मीमांसते—मा मान् स अते—म मान् स अते ('ह्रस्वः' 2180)—मिमान् स अते—by 'सन्यतः' —2317 )—मीमान् स अते ( 'मान्बधदान्शान्भ्यो—2394 )—मीमांसते ( 'नश्चापदान्तस्य झलि' 123 and 'अतो गुणे' 191। भष्भवः and चर्त्व are applicable in बीभत्सते—बबध् स अते—बीबध् स अते—बीभध्सते ( 'एकाचो बशो भष् झषन्तस्य स्ध्वोः'-329)—बीभत्सते ( खरि च·121)।

मित—। सन् च यङ् चेति (द्वन्द्वः) तयोरित्यवयवषष्ठी। 'येन विधिस्तदन्तस्ये'ति सन्नन्तस्य यङन्तस्य चेत्यर्थलाभः। 'एकाचो द्वे प्रथमस्य—' (६।१।१) 'अजादेर्द्वितीयस्य' (६।१।२) इति सूत्रद्वयमनुवर्त्तते तदाह—सन्नन्तस्य इत्यादि। सन्यङोरित्यत्र परसप्तमीमाश्रित्य 'सनि यङि च परे' इति व्याख्याने तु प्रतिपूर्व्वादिनः सनि प्रतीषिषति इति सन्प्रत्ययसहितस्य द्वित्वं न स्यात्, तथा अटधातोर्यङि—यङ्प्रत्ययसहितस्य अटतेर्द्वित्वाभावात्—अटाट्यते इति न सिद्ध्येत्—। तेनावयवषष्ठीमवलम्ब्य तदन्तविधिना व्याख्यानमेव साधीयः। परसप्तम्या व्याख्याने प्रकृतिभागस्यैव द्वित्वप्रसक्तेरिति ज्ञेयम्। अथ गुपादिषु—के केष्वर्थेषु अनुदात्तेतः स्वरितेतो वा भवन्ति इति विवेकप्रदर्शनपरःसन् तेषां नित्यानित्यसन्नन्तत्वं—व्यवस्थापयति—गुपिप्रभृतय इति। किद्भिन्ना गुप्तिज्मान्बधाश्चत्वार इत्यर्थः। एते 'गुपेर्निन्दायां,' 'तिजेः क्षमायाम्' इत्यादिषु—वार्त्तिकक्रद्विहितेष्वेवार्थेषु—अनुदात्तेतः आत्मनेपदिनः सन्तः सन्प्रत्ययं लभन्ते। किद्धातुः परस्मैपदिषु पठिष्यमाणत्वाद् यद्ययं अनुदात्तेद्भवति तदा [illegible]कारार्थपञ्चकेषु एव सन्भाग् भवति। दान्शानौ लिति—। एतौ दान् [illegible]ने इति स्वरितेतसु पठितौ इह त्वार्जवनिशानयोरेवार्थयोः सन्भाजौ

भवतः । एते इति गुप् तिजादयः सप्त इत्यर्थः । नित्यं सन्नन्ता इति । निन्दाद्यर्थेषु इति योज्यम् । अर्थान्तरेष्विति— । धातुपाठोपात्तेषु—गोपनाद्यर्थेषु इत्यर्थः । 'अननुबन्धकाः' अनुदात्तेत्त्वलक्षणानुबन्धरहिताः सन्तः चुरादौ पठ्यन्ते नतु भ्वादौ । तत्र च (चुरादौ) चानुदात्तानुबन्धकरणेऽपि 'णिचश्चेति' कर्त्तृगे फले तङ् स्यादेव । ननु तर्हि केवले (णिज्विरहिते) गुपादेः अनुदात्तानुबन्धकरणं व्यर्थम् केवलस्य धातोः प्रयोगाभावात् तत्राह—अनुबन्धस्य इति । यतः केवलस्य गुपादेरात्मनेपदित्वेन प्रयोगाभावात् तत्रानुबन्धकरणं व्यर्थं ततः सन्नन्तस्यैव तस्य (गुपादेः) आत्मनेपदित्वेन प्रयोगः । अयं स्पष्टार्थः—गुपादेः केवलस्य 'अथाष्टावनुदात्तेतः' इत्युक्त्वा आत्मनेपदं विधीयते । अथच एतेषां केवलत्वेन (णिजादिसहायरहितत्वेन) प्रयोगो न दृश्यते । तेन अनुदात्तेत्त्वलक्षणमनुबन्धकरणं व्यर्थम् । न च णिजर्थं तत्विधानमिति वाच्यम् । तत्र कृतेऽप्यकृतेऽपि वा तङि—णिचश्चेति कर्तृगे फले तङ् भवत्येव । अतः परिशेषात् सन्येव तङ् यतः सन्निवौ विहायैव न प्रयुज्यते । तत्रापि (सन्यपि) निन्दाद्यर्थेष्वेव तङ् न गोपनाद्यर्थेषु इति । धातोरितीति—तथाच—'धातोः कर्म्मणः समानकर्तृकादिच्छायां वा; 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इत्यनयोः 'धातो'रिति सन् यङौ विधीयेते तेन तत्र सनयङोरार्द्धधातुकत्वं भवति । अत्र तु ('गुप्तिज्किद्भ्यः सन्' इत्यादिषु) तादृशविधानविरहः । अतोऽत्र सनन्तो नार्द्धधातुकत्वं किन्तु सार्व्वधातुकत्वमेव । यतश्चार्द्धधातुकत्वं नास्ति अत इड्गुणावपि न भवतः । जुगुप्सते—गुप् सन् शप् ते—गुप् स अते—गुप् गुप् स अते—गुगुप् स अते—जुगुप् स अते ('कुहोश्चुः'—(२२४५)—जुगुप्सते ('अतो गुणे' (१९१))। जुगुप्सां चक्रे—कास्प्रत्ययादाम्-मित्याम् । अतो लोप इत्यल्लोपः । आम्प्रत्ययवदित्यनुप्रयुक्तस्य कृञोऽप्यात्मनेपदम् । तितिक्षते—तितिज्सते—तितिग्सते चोःकुरिति कुत्वेन गः । तस्य खरि चेति चर्त्वेन कः । ततः सनः प्रत्ययावयवत्वात् इण्कोः आदेशप्रत्यययोरिति षत्वम् । मीमांसते —मामान् सते—ममान्सते—ह्रस्व इति ह्रस्वः, मिमान्सते सन्यत (२३१७) इति इत्वम्, मीमान्सते मानबधेति दीर्घः—मीमांसते 'नश्चापदान्तस्य झलि (१२३) इत्यनुस्वारः । भष्भाव इति—'एकाचो बशोभष्—'(८।२ ३७) इति बधो बकारस्य भकारः ।

चर्त्वमिति 'खरि च' (८।४।५५) इति वधो धकारस्य—तकारः। ततः भत्सेति भवति। 'पूर्वत्रासिद्धम्' (८।२।१) इति भषत्वचर्त्वयोर्द्वित्वं प्रति (एकाचो द्वे—६।१।१) असिद्धत्वाद् द्वित्वादिकं प्राक् सम्पाद्य ततो भषत्वचर्त्वे इति भावः। एवं बवध. सती इति स्थिते इत्वदीर्घत्वभष्चर्त्वेषु कृतेषु वीभत्सते इति। इति गुपादयश्चत्वारो गताः। कितिप्रभृतयस्त्रयस्तु तत्र तत्र धातुपाठक्रमेणोदाहरिष्यन्ते ('न दृशः' (२४०७) इत्यत्र द्रष्टव्यम्)। रभ इति राभस्यं औत्सुक्यभावः उपक्रमो वा। प्रायेणाङ्पूर्व्व इति दर्शयति—आरभते इति; आरेभे—एत्वाभ्यासलोपौ। रब्धा—लुटि तासि रूपम्। झषः तकारस्य धकारः—ततो झलां जशीति भकारस्य बकारः। रप्स्यते—रभ्स्यते इतित स्थिते खरिचेति चर्त्वेन भस्य पत्वम्। डुलभष् ड्वित् करणं 'ड्वितः क्त्रिः' इत्यर्थम्। षित्—करणन्तु 'षिद्भिदादिभ्योऽङ्—' इति 'लभा' इत्यर्थम्। लभते इति। लिट लङोस्तु—लेभे अलब्ध इत्यादि। लृट्—लप्स्यते। ष्वञ्ज इति षोपदेशः अनिट् च।

२३८६। दंशसञ्जस्वञ्जां शपि ॥६।४।२५॥

२३८७। रञ्जेश्च ॥६।४।२६॥

दी—। एषां शपि नलोपः। स्वजते। परिष्वजते। 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा' इति व्याकरणान्तरम्। 'देभतुः' 'सस्वजे' इति भाष्योदाहरणादेकदेशानुमत्या—इहाप्याश्रीयते। 'सदेः परस्य लिटि—' (२३६१) इति सूत्रे 'स्वञ्जेरुपसंख्यानम्' (वा ४८६८)। अतोऽभ्यासात् परस्य—षत्वं न। परिषस्वजे—परिषस्वञ्जे। सस्वजिषे—सस्वञ्जिषे। स्वङ्क्ता। स्वङ्क्ष्यते। स्वजेत। स्वङ्क्षीष्ट। अस्वङ्क्त। प्रत्यष्वङ्क्त। 'प्राक्सितात्—' (२२७६) इति षत्वम्। परि-

निविभ्यस्तु 'सिवादीनां वा—' ( २३५८ ) इति विकल्पः । एतदर्थमेव 'उपसर्गात् सुनोति—' (२२७०) इत्येव सिद्धे स्तुस्वञ्जोः 'परिनिवि—' ( २२७५ ) इत्यत्र पुनरुपादानम् । पर्य्यषङ्क्त—पर्य्यसङ्क्त । हद ८७७ पुरीषोत्सर्गे, हदते । जहदे । हत्ता । हत्स्यते । हदेत । हत्सीष्ट । अहत्त ।

The न of दन्श्, सञ्ज, स्वञ्ज् and रन्ज् disappears when शप् follows. Thus दशति सजति स्वजते etc. In another grammar it is found that the लिट् of श्रन्थ्, ग्रन्थ्, दम्भ् and स्वञ्ज् becomes कित् optionally. Here we have recourse to this (above) statement, though it is un-paninian, on the strength of the partial sanction (एकदेशानुमत्या) of the भाष्य where, of the 'श्रन्थिग्रन्थि etc.' the two only, namely, दम्भि and स्वञ्जि are taken as कित्—and conjugated accordingly as 'देभतुः' (in the rule—'अत एकहल्मध्ये—(228·)) and सस्वजे (in the rule 'सदेः परस्य लिटि' (2361)). There runs the vartika 'स्वञ्जेः—etc'—'the root स्वञ्ज also should be enlisted within the rule 'सदेः परस्य etc.' (2361). Thus the verabl base coming after the reduplicate or अभ्यास will not get षत्व and accordingly we have परिषस्वजे etc—the षत्व of the अभ्यास is owing to the उपसर्ग परि—by 'परिनिविभ्यः सेवसित etc.' (2276). There (in परिषस्वजे ) the न-कार elides by 'अनिदितां (415) for स्वञ्ज is optionally कित् thus the other from is परिषस्वञ्जे with the नकार ; similarly सस्वजिषे सस्वञ्जिषे ( लिट्—से इट् ) ; स्वङ्क्ता ( लुट् ) here there is no elision of न for लुट् is not कित् (and the root is अनिट् ) । स्वञ्ज् ता स्वन्ग्ता ( 'चोःकुः' 378) here जकार being replaced by गकार—ञकार is replaced by

the original नकार—। Then this नकार will make room for अनुस्वार by नश्चापदान्तस्य झलि and ग will be substituted by क्, by the rule 'खरि च' (121) giving स्वंक् ता then, finally, by "अनुस्वारस्य ययि परसवर्णः" we have स्वङ्क्ता। Similarly स्वङ्क्ष्यते—(स्वङ्क्स्यते)। स्वङ्क्षीष्ट (स्वङ्क्षीष्ट with सीयुट् सुट् षत्व etc.)। अस्वङ्क्त—लुङ—अट् स्वञ्ज् सिच् त—अस्वन्ग् स् त—अस्वंक् ०त (स elides by 'झलो झलि' and अनुस्वार and क as before). प्रत्यष्वङ्क्त (प्रति अट् स्वङ्क्त) here षत्व is provided for by 'प्राक्सितादड्व्यवायेऽपि' (2276)। But when स्वञ्ज comes after परि, नि and वि it will have optional षत्व by 'सिवादीनां वाड्व्यवायेऽपि' (2359). It is only to direct optional षत्व to स्वञ्ज (when it comes after परि etc.) that it is again mentioned in the rule 'परिनिविभ्यः—etc' (2275), although it was included in उपसर्गात् सुनोति—etc' (2270). Thus पर्यस्वङ्क्त (परिअट्स्वङ्क्त—लुङ्) etc. हद to dischargeexcrement. It is अनिट्। जहदे—by असंयोगाल्लिट् कित् (2242). हत्ता (लुट्)—हद ता—it is replaced by त by 'खरिच' (121). Similarly हत्स्यते—हत्सीष्ट (आशीर्लिङ्) and अहत्त (लुङ्)। Here end the eight अनुदात्तेत् roots.

मित—। एषां 'शसच्चस्वञ्जरञ्जामित्यर्थः। नलोपः इति। श्रान्नलोपः (२५४४—६।४।२३) इत्यतस्तदनुवृत्तेरिति भावः। परिष्वजते—परिनिविभ्य इति षत्वम्। अथ स्वञ्जेरसंयोगादित्यस्याप्राप्त्या अकित्त्वेऽपि व्याकरणान्तराश्रयणात्—भाष्यैकादेशानुमत्या च कित्त्वविकल्प इत्याह—श्रन्थिग्रन्थीति। ननु अपानिनीयंकथमिह पानिनीये समुपन्यस्तं तत्राह—भाष्योदाहरणादेकदेशानुमत्येति। यद्यपि 'श्रन्थि-ग्रन्थी' भाष्ये न दृश्येते तथापि दम्भिस्वञ्जी तु दृश्येते एव। इयमेव एकादेशानुमतिर्नाम। श्रन्थिग्रन्थ्यादेरेकदेशस्य एकांशस्य अनुमतत्वात् कित्त्वस्वीकारादित्यर्थः। तत्र दम्भि (दम्भ्) इति 'अत एकहल्मध्ये' (२३६०) इति सूत्रभाष्ये उदाहृतम्। सस्वजे इति

तु सदेः परस्य लिटि इति सूत्रभाष्ये किस्त्वादेकत्र ( देभतुरित्यत्र ) नलोपैत्वाभ्यासलोपाः । अन्यत्र न लोपमात्रम् । वैकल्पिकत्वात् सस्वञ्ज इत्यपि । सस्वञ्जाते—सस्वजाते । सस्वञ्जिरे—सस्वञ्जिरे । इत्यादिरूपक्रमो लिटि इत्येव अन्यत्र तु स्वङ्क्ता इत्यादि नलोपाभावेन रूपम् । स्वञ्जरुपसंख्यानमिति । सदेरित्यत्रास्य संख्यानं परिगणमन्तर्भावः कर्त्तव्य इति यावत् । तेनेति । अभ्यासात् परस्य नत्वाभावात्— परिषस्वजे—परिषस्वञ्जे इति पर्य्युपसर्गवशादभ्यासस्य षत्वम् । किस्त्वविकल्पात् नलोपविकल्पः 'अनिदिताम्' (४१५) इत्यनेनेति बोध्यम् । एवं सस्वजिषे—सस्वञ्जिषे इत्यत्र । स्वङ्क्ता इति स्वञ्ज् लुट् ता इति स्थिते जकारस्य चोः कुरिति कुत्वेन गत्वं तस्य च श्रुत्वनिवृत्तेर्ञ-कारस्य श्रुत्वनिवृत्त्या पुनर्नत्वे कृते स्वन्ग्ता इति जाते खरि चेति—गस्य चत्वे न श्चापदान्तस्य झलि इति नस्यानुस्वारे च कृते स्वंक्ता इति सम्पद्यमाने अनुस्वारस्य ययीति परसवर्णे स्वङ्क्ता इति भवति । एवं स्वङ्क्ष्यते इत्यादिषु प्रक्रिया ऊह्या । स्वजेत=विधिलिङ् । स्वङ्क्षीष्ट—आशीर्लिङ् । ( लुङ् ) प्रत्यष्वङ्क्त ( प्रति—अट्—षाङ्क्त ) प्राक्सितादड्व्यवायेऽपीति षत्वम् । परिनिविभ्यस्त्विति—अत्र षत्वविकल्प इति दर्शयते सिवादीनां वाड्व्यवायेऽपीत्यनेन । तत्र षत्वविकल्पे युक्तिमपि प्रस्तौति एतदर्थमेवेति । षत्व—विकल्पार्थमित्यर्थः । इत्येव सिद्धे इति—अनेनैव षत्वे सिद्धे इत्यर्थः—उपसर्गादित्यनेन सर्व्वोपसर्गग्रहणात्पर्य्यादेरन्तर्भावादिति-भावः । 'स्तु स्वञ्जोः'—स्तुधातोस्वञ्जधातोश्चेत्यर्थः । पुनरुपादानं पुनर्ग्रहणम् । अथोदाहृतविकल्पं दर्शयति—पर्य्यषङ्क्त ( परिअषङ्क्त ) इत्यादि । हृदेति—अयमप्यनिट् । जहृदे—असंयोगाल्लिट् किदिति किस्त्वाद् गुणाभावः । हृत्ता ( लुट—हृद् ता इतिस्थिते हृत् ता खरि चेति चर्त्वम् ) एवम् हृत्स्यते इत्यादिषु । इत्यष्टावनु-दात्तेतो गताः ।

टी— । अथ परस्मैपदिनः । ञि ष्विदा ८७८ अव्यक्ते शब्दे । स्कन्दिर् ८७९ गतिशोषणयोः । चस्कन्दिथ—चस्कन्त्थ । स्कन्ता । स्कन्त्स्यति । नलोपः स्कद्यात् ।

इरित्वादङ् वा। अस्कदत्—अस्कान्त्सीत्। अस्कान्ताम्। अस्कान्त्सुः।

Now we take up sixteen परस्मैपदी roots beginning with ञिष्विदा ( 978 ) 'to make inarticulate sound' up to कित ( 993 ) 'to dwell and to remove ailments'. ञिष्विदा—( ष्विद् )—ञि for 'ञीतःक्तः' —क्ष्विन्नः and आ for prohibition of इट् 'आदितश्च'। By लघूपधगुण क्ष्वेदति ( षत्व by इण्कोः आदेशप्रत्यययोः ( 211—12 ) ) सिष्विददुः ( prohibition of गुण on account of the कित्त्व of अतुस् ) सिष्विदुः etc. स्कन्दिर् ( स्कन्द् ) इर् is to make it have अङ् optionally by 'इरितो वा' (2269). It means to move and to drain. It is also अनिट्। स्कन्दति। चस्कन्द etc.—चस्कन्दिथ—चस्कन्त्थ option of इट् by भारद्वाजनियम ; स्कन्द स्कन्द इट्थ क स्कन्द इथ ( शर्पूर्वाः खयः ) चस्कन्द् इथ ( कुहोश्चुः )। In the इडभाव-पक्ष—चस्कन्द् थ—चस्कन्त् थ by खरि च ( १२१ )। Similarly स्कन्ता स्कन्त्स्यति। न लोपः i.e. in स्कद्यात्—( आशीः ) by 'किदाशिषि' and 'अनिदितां—' (415). अस्कदत्—अस्कान्त्सीत् (अङ् and सिच्). The former drops न by 'अनिदिताम्' because अङ् is ङित् and the latter gets वृद्धि by 'वदव्रजहलन्तस्याचः' ( 2267 ) and takes सिच् ईट्त् ( but not इट् ) अस्कान्त्ताम्—अटस्कन्द् सिचतस्—अस्कान्द् स् ताम्—अस्कान्द् o ताम्—अस्कान्त् ताम् (by खरि च), अस्कान्त्सुः by 'सिजभ्यस्तविदिभ्यश्च' झि is replaced by जुस्—The rest is as above.

सित—। परस्मैपदिन इति। कित (९९३) निवासे रोगापनयने चेत्यन्ता इत्यर्थः। ञि ष्विदा—ष्विद षोपदेशत्वात्—सिष्वेद—ञित्करणं निष्ठानत्वार्थं—क्ष्विन्नः क्ष्विन्नवान्। आदित्करणम् आदितश्चेति—इड् विकल्पार्थम्। लघूपधत्वात् क्ष्वेदति, क्ष्वेदतु, अक्ष्वेदत्, क्ष्विद्यात्, अक्ष्वेदीत्, क्ष्वेदिता, क्ष्वेदिष्यति, अक्ष्वेदिष्यत्। स्कन्दिर्—इरितो-वेत्यर्थमिरित्करणम्। स्कन्दति—संयोगवर्णान्तत्वेन लघूपधत्वाभावाद् गुणो न। चस्कन्द

अजन्तत्वाभावात् 'अचो ञ्णिति' इति अदुपधत्वाभावात् अत उपधायाः इति वृद्धिर्न चस्कन्दिथ—चस्कन्थ भारद्वाजनियमादिड्विकल्पः—स्कान्द् स्कन्द इथ्—कास्कान्द् इथ (शर्पूर्व्वाः खयः) च स्कन्दिथ। इडभावे तु चस्कन्द् थ—दस्य खरिचेति चर्त्वेन तत्वम्। स्कन्ता—स्कन्त्स्यति—पूर्व्ववत् चर्त्वेन तत्वम्। स्कद्यात्—आशीर्लिङि—यासुटः—कित्वात् अनिदितामिति न लोपः। अङि—अस्कदत्—नलोपः अनिदितामित्यनेनैव। अस्कान्त्सीत्—अङभावे सिच्। वदव्रजेति (२२६७) हलन्तलक्षणा-वृद्धिः। न चाव सिचःएकहलव्यवहितत्वेन स्कन्दरूपस्याङ्गस्य कथं वृद्धिरिति वाच्यम्। रञ्जेः अराङ्चौदित्यत्र वृद्धिसिद्धये अनेकाल्व्यवधानेऽपि हलन्तलक्षणावृद्धेः प्रवृत्तिर्भवत्येवेति भाष्ये—प्रपञ्चितत्वात्। इडभावेतत्परत्वाभावादिट ईटि (२२६६) इति सिज्लोपो न। अन्यत पूर्व्ववत्।

## २३८८। वेः स्कन्देरनिष्ठायाम् ॥८।३।७३॥

टी—। षत्वं वा स्यात्। क्त्ये वेदम्—'अनिष्ठायाम्' इति पर्य्युदासात्। विष्कन्ता—विस्कन्ता। निष्टायां तु। विस्कन्नः।

The स of स्कन्द् coming after the उपसर्ग वि, becomes cerebral optionaly—except when a निष्ठा (क्त, क्तवतु) प्रत्यय follows. The पर्य्युदासविधि in 'अनिष्टायाम्' (निष्टाभिन्नप्रत्यये परे—when any affix other than a निष्ठा follows) implies that this option takes effect—only when a कृत् affix follows but not when a तिङ् affix follows. Thus विष्कन्ता—विस्कान्ता (वि—स्कन्द्+तृच्) but विस्कन्दति and not also विष्कन्दति। The idea is—If you are asked to bring an अब्राह्मण—you bring any man other a Brahmin but you don't bring a stone or straw.. In the same way अनिष्टा connotes any कृत् affix but not a निष्ठा—but not a तिङ् affix also (which is not a निष्ठा). Thus तिङ् forms like विस्कन्दति etc will not have the

option. But Nagesha holds that भाष्य does not sanction' this ( क्तवेदम् etc. ). Cp. his remark—'परे त्वत—न भाष्यानुग्रह etc' where परे means others i. e. not ourselves. In निष्ठा the form is विस्कन्न without षत्व ।

मित—। वेरिति व्युपसर्गस्य पञ्चम्यन्तम्। स्कन्देरिति अवयवषष्ठी। अपदान्तस्य मूर्धन्यः' (८।३।५५) इत्यधिकारसूत्रम्—। 'सिवदीनां वा अड्व्यवायेऽपि' ( ८।३।७१ ) इत्यतो वेति चानुवर्त्तते। अनिष्ठायामिति पर्य्युदासात्—निष्ठाभिन्न क्तप्रत्यये परत इत्यर्थः। तेनायं सूत्रार्थः—वेः परस्य स्कन्देः पस्य—मूधन्योन स्यान्निष्ठाभिन्ने ( क्त ) प्रत्यये परतः। क्तवेदमिति—अयं भावः। अब्राह्मणमानय इत्युक्ते न हि लोष्टपाषाणादिकमानीयते किन्तु ब्राह्मणेतरः कश्चिद् मनुष्य एव, वचनस्य सजातीयापेक्षत्वात्—। तद्वदत्रापि अनिष्ठायामित्यनेन नञा—निष्ठाभिन्न एव क्तप्रत्यय आक्षिप्यते न तु क्तभिन्न इति। तेन तिङन्तप्रत्ययानां ग्रहण न भवति। अतएव विस्कन्दति इत्यादौ—षत्वविकल्पो न। नागेशस्तु नेदमभ्युपगच्छति—तथाच तद्वचनम्—'परेत्वत न भाष्यानुग्रहः। अतएव अनुविपरिभ्य इति सूत्रे इव अत भगवता—पर्य्युदासप्रतिषेधयोः फलभेदविचारो न कृतः। तस्माद् विपूर्व्वस्यास्य तिङि अप्रयोगो वा प्रयोगो वेत्याहुः' इति। विष्कन्ता इति तृचिरूपद्वयं न तु तासि। निष्ठायान्विति—षत्वाभावः इत्यर्थः।

२३९८। परेश्व।८।३।७४॥

टी—। अस्मात् परस्य स्कन्देः सस्य षो वा। योगविभागात्—'अनिष्ठायाम्' इति न संवध्यते। परिष्कन्दति—परिस्कन्दति। परिष्कस्रः—परिस्कन्नः। षत्वपक्षे णत्वम्। न च पदद्वयाश्रयतया वहिरङ्गत्वात् षत्वस्यासिद्धत्वम्। 'धातूपसर्गयोः कार्य्यमन्तरङ्गम्' इत्यभ्युपगमात्। 'पूर्व्वं धातुरुपसर्गेण युज्यते ततः साधनेन' इति भाष्यम्। 'पूर्व्वं साधनेन—' इति मतान्तरे तु न णत्वम्।

यभ ८८० मैथुने । येभिथ—ययब्ध । यब्धा । यप्सति । अयाप्सीत् । णम ८८१ प्रह्वत्वे शब्दे च । नेमिथ—ननन्थ । नन्ता । अनंसीत् । अनंसिष्टाम् । गम्लृ ८८२ सृप्लृ ८८३ गतौ ।

The स of स्कन्द्, coming after the उपसर्ग—परि also, becomes cerebral optionally. The term 'अनिष्टायाम्' (in the former rule) is not connected with this rule owing to the force of योगविभाग or breaking up of the योग or rule. In other words, पाणिनि could have said—'विपरिभ्यां स्कन्देरनिष्टायाम्' ; but he has broken it into two ( 'वेः स्कन्देः—' and 'परेश्च' ) only with a view to dispensing with the term अनिष्टायाम् in the case of परि । Thus परिष्कन्दति परिस्कन्दति and परिष्कन्न—परिस्कन्न ( optional षत्व in तिङ् as well as in निष्ठा ) । In the case of षत्व there will occur णत्व ( in परि—स्कन्द + क्तः—परिस्कद् नः—परिष्कण्नः—परिष्कन्नः ) । Here you cannot argue that the षत्व ( of स्कन्द owing to परि ) is असिद्ध or in valid on the ground that it ( षत्व ) is वहिरङ्ग (external ) on account of its being effected by having recourse to two separate पदs. The drift is this—परि and स्कन्द are two separate पदs or words. And षत्व is effected owing to परि. Thus it ( षत्व ) is वहिरङ्ग (an external matter—the cause (अङ्ग ) of which lies outside ( वहिः ) ). Again this ष is the cause or निमित्त or अङ्ग of णत्व by the rule 'षात् पदान्तात्' (3310). And this णत्व is अन्तरङ्ग or internal ( the cause or caues (अङ्ग) of which lie within ( अन्तः ) ). Thus by the परिभाषा—'असिद्ध' वहिरङ्गमन्तरङ्गे—' That which is वहिरङ्ग is (regarded as) not having taken effect (or as not existing, when

that which is अन्तरङ्ग is (to take effect). Heɹe णत्व is to take effect; thus षत्व becomes असिद्ध। But here the षत्व also is अन्तरङ्ग on the strength of the admittance (अभ्युपगम) 'the operation affecting the root and its उपसर्ग is अन्तरङ्ग'। According to भाष्यकार also it is अन्तरङ्ग—who says—'The root is first connected with the उपसर्ग and then with the प्रत्यय or affix ( साधनेन )। According to others, however, who hold that the root is, first of fall, joined with the affix (and then with the उपसर्ग ) there will not arise the case of णत्व in परिष्कन्न। Both these opinions are to be met with in the भाष्य। यभ् to keep sexual intercourse. यभिथ—येयब्ध option of इट् by 'उपदेशेऽत्वतः' (2295) and ऋतोभारद्वाजस्य (2296). भारद्वाज नियम being superior to all restrictions. We have एत्व and अभ्यासलोप in येभिथ although the affix थल् is पित् and not कित् (otherwise it would have been ययभिथ ). ययब्ध—ययभ् थल्—ययभ् थ by 'झषस्तथोर्धोऽधः'—यव् ध by 'झलां जश् झशि'. Similarly यब्धा (लुट् ) यप्स्यते—यभ्+स्यते—यप्स्यते to 'खरि च ( 121 ). अयाप्सीत्—अट् याभ् सिच् ईट् त् (वृद्धि by 'वदव्रजहलन्तस्याचः (2267))—अयाप्स् ईत् by 'खरि च'। णम् (नम्)—It is णोपदेश and अनिट्; it means to be modest to make sound. नमति ननाम etc. नेमिथ—ननन्थ like यभिथ etc, अनंसीत्—prohibition of इट् by 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' (2299). Then come the augments सक् and इट् by the rule 'यमरमनमातां सक् च' (2377). Thus अट् न म् सिच् इट् त्—अनम्सक् इट्सिच् ईट्त्—अनं स् इ० ईत्—by इटः ईटि (2267)—अनं स् ईत्। अनंसिष्टाम्—अनम् सक् इट् सिच् तस—अनं स् इस् ताम्। In लिट् वस्, the forms are नेमिव—नेमिम by क्रादि नियम and एत्वाभ्यासलोपः। In आशीर्लिङ्—नम्यात्—लुङ्; अनंस्यत् etc, गम्लृ सृप्लृ—to go ( गम् सृप्=लृदित्—to have अङ्—these are अनिट् also )—

मित—। परेरिति । वेरितिवत्—पञ्चम्यन्तम्। 'अनिष्टायामिति'वर्ज्जं परसूत्र-मत्रानुवर्त्तते। तदाह—अस्मात् परस्य इत्यादि। ननु 'विपरिभ्यां स्कन्देरनिष्टाया-मित्येव सूत्र्यतां किमेवं पृथक् सूत्रितेन। तत्राह—योगविभागादिति। योगविभागः किमर्थम्? इष्टसिद्ध्यर्थम्। किञ्चेष्टम्? परिपूर्व्वात्—स्कन्दतेर्निष्ठायां षत्वनिषेधो मा-भूदित्येवं रूपम्। परिस्कन्नः—परिष्कण्णः। किञ्च अनिष्टायामित्यनुक्तेः सर्व्वस्मिन्नपि—प्रत्यये परतोविकल्पं सिद्ध्यति परिष्कन्दति परिस्कन्दति। षत्वपक्षेणत्वम् इति स्थिते—अनेन षत्वे परिष्कन्द् तः इति जाते—क्तप्रत्ययस्य कित्त्वेन अनिदितामिति (४१५) नलोपे—क्ते परिष् कद्‌तः इति प्राप्ते 'रदाभ्यां निष्टातो नः पूर्व्वस्य च दः' (३०१६—८ ३ ५२) इति दकारात् परस्य—निष्ठातस्य नत्वे धातोर्दकारस्य च तथात्वे—परिष् कन्नः इति भवति। ततः 'ष्वत्-पदान्तात्' (२३१० ८।४।३५) इति दकार-स्थानिकस्य प्रथमनकारस्य णत्वम्। ततसंसर्गात् ष्टुनाष्टुरिति तकारस्थानिकस्य—द्वितीयनकास्य ष्टुत्वेन णत्वमिति। अत्र षकारो णत्वनिमित्तम् (अङ्गम्)। णत्वञ्च निमित्ती (अङ्गी)। तेन निमित्तनिमित्तिनोरङ्गाङ्गिनोरेक पदस्थतया णत्वम् अन्तरङ्गं भवति। अन्तर्मध्ये—(वहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये)—अन्तर्भूतानि अङ्गानि निमित्तानि यस्य तदन्तरङ्गम्। षत्वं तु पर्य्युपसर्गरूप विभिन्न—पदाश्रयतया वहिरङ्गं भवति। वहिर्भूतानि—(अन्तरङ्गशास्त्रीयनिमित्तसमुदाया-दित्यर्थः) अङ्गानि निमित्तानि यस्य तद्वहिरङ्गम्। एवञ्च णत्वे कर्त्तव्ये षत्वम् असिद्धं भवति 'असिद्धं वहिरङ्गमन्तरङ्गे' इति न्यायात्। एतदेवाह न चेति। तत्र समाधानमाह—धातूपसर्गयोरिति। इत्यभ्युपगमादिति अभ्युपगमः स्वीकारः। तथाचैवं षत्वस्य—वहिरङ्गत्वं निवर्त्तते इति भावः। पुनर्भाष्यसंमत्या तद् दृढ़ीकरोति—पूर्व्वमिति स्पष्टम्। साधनेनेति—यद्यपि साधनशब्दो मुख्यतः कारकवाच्येव तथाप्यत्र प्रत्ययार्थे निरूढ़ः साधनेन प्रत्ययेन तिङादिना। मतान्तरे तु णत्वं नेत्याह तत्र षत्वस्य असिद्धत्वादित्याह—पूर्व्वं साधनेनेति। पश्चादुपसर्गेन इति वाक्यशेषः। मतद्वयमपि भाष्यारूढ़म्। यभ् इति अयमप्यनिट्। यभति—ययाभ इत्यादि। येभिथ—ययब्ध इति। अत्र भारद्वाज नियमादिड्विकल्पः। भारद्वाजनियमस्य नियमान्ता-

पेक्षया प्रबलत्वात्। थल: पित्वेन अकित्त्वे अपि थलि च सेटीति ( २२६१ ) इतीट्पक्षे एत्त्वाभ्यासलोपौ—अन्यथा तु ययभिथ इति स्यात्। ययस्थ—ययभ् थल इति स्थिते झषस्तथो—रिति थस्य धत्वम्। ततो झलां जशिति भस्य बत्वमिति। एवं यब्धा ( लुट् ) यप्स्यति—खरि चेति भस्य चर्त्वेन पत्वम्। अयाप्सीत्—वदव्रजे ति हलन्तलक्षणा वृद्धि:। पूर्ववत् पत्वम्। इट परत्वाभावात् सिच इट इटीति (२२६६) सिज्लोपो न। णम प्रह्वत्वे शब्दे च—प्रह्वत्वं विनयावनतत्वम्। णोपदेशश्चानिट् च। नमति—ननाम इत्यादि। भारद्वाजनियमात् थलि पूर्ववदिट्पक्षे—एत्वाभ्यासलोपौ इडभावे तु अनुस्वारस्य ययीति परसवर्णेन नन्थ इति। एवं नन्ता। अनंसीत् इति—अट्नम् सिच् तिप् इति स्थिते 'यमरमनमातां सक्चेति' ( २३७७ ) सगागमे इटि च प्राप्ते—अ—नम्सक् इट् सिच इट् त् इति जाते अनं स् इ० इ—अन स् ईत् 'ह्यन्तक्षणश्वसजागृणिश्व्येदिताम्' (२२९९) इति वृद्धिनिषेधः। एवम् अनंसिष्टाम् इति तसस्तामादेशे अपृक्तत्वाभावादीडभावे रूपम्। एवम्—अनंसिषुरित्यादि। गम्लृ सृप्लृ इति लृदितावनिटौ च भवत:।

२४००। इषु-गमियमां छ: ॥७।२।७७॥

दो—। एषां छ: स्याच्छिति परे। गच्छति। जगाम। जग्मतु:। जग्मु:। जगमिथ—जगन्थ। गन्ता।

The final ( ष् and म् ) of इष्, गम् and यम् is replaced by छ—when a श—eliding affix ( शप् etc. ) follows. Thus गम् + शप् तिप्—गच्छ् अति—गच्छति—(तुगागम by 'छे च' (46) ). Similarly इच्छति। यच्छति। जगाम = गम्—गम् णल्—ग गाम् अ—जगाम ( ज replaces ग by, 'कुहोश्चु and वृद्धि comes in by 'अत उपधाया:' ( 2282 ) ). जग्मतु:—जगम् अतुस्—here the penultimate अ of गम्, disappears by 'गमहनजनखनघसां लोप: क्ङित्यनङि (2353)—giving जग्म् अतुस्—जग्मतु:। Simi-

larly जग्मुः। जगमिथ—जगन्थ—option of इट् by भारद्वाजनियम। जगाम—जगम—जग्मिव—जग्मिम—इट by, क्रादिनियम। गन्ता ( लुट् )।

मित—। 'ष्ठिवुक्लमुचमां शिति' ( ७।३।७५ ) इत्यत: शिति इत्यनुवर्त्तते। इषुगमियमामिति षष्ठीबहुवचनं तेन 'अलोऽन्त्यस्य' इति परिभाषया छकारो मकारमात्रस्य स्थाने आदिश्यते। तत: गछ् शप् तिप् इति जाते 'छे च' ( १४६ ) इति तुगागमे—गच्छति इति भवति। एवम् इच्छतियच्छती। शिति किम्? जगाम—अत्र शित्त्वाभावाच्छो न। 'अत उपधाया:' (२२८२) इति उपधावृद्धि:। 'कुहोश्चुरिति' गकारस्य जकार:। जग्मतुरित्यत्र 'गमहनेति ( २३६३ )' अतुस: क्ङित्त्वेन उपधालोपे—गुणाभावे च रूपम्। एवं जग्मुरित्यत्र। जगमिथ—जगन्थ—भारद्वाज—नियमादिड विकल्प:। आदेशादित्वादेत्वाभ्यासलोपविरह:। जग्मथु:—जग्म। जगाम—जगम। जग्मिव जग्मिम—वमयो: क्रादिनियमान्नित्यमिट्। गन्ता ( लुट् ):—अथ लृटि इडर्थमाह——

## २४०१। गमेरिट्परस्मैपदेषु ॥७।२।५८॥

**टी—। गमे: परस्य सकारादेरिट् स्यात्। गमिष्यति। लृदित्वादङ्। 'अनङि' इति पर्य्युदासात् नोपधालोप:। अगमत्। सर्पति। ससर्प।**

The augment इट् is directed to an affix beginning with a स and coming after the root गम् in परस्मैपद। Thus—गमिष्यति—अगमिष्यत्—जिगमिषति etc. गम् being लृदित् ( लृ—eliding ) will take the affix अङ् in the place of च्लि by 'पुषादि—' ( २३४३ ) and the term 'अनङि' in the rule 'गमहनजनखनघसां लोप: क्ङित्यनङि' ( 2363 ) being a पर्य्युदास injunction i. e. having meant 'when an affix other than अङ् follows', the उपधा or the penultimate of गम् will not elide. Thus—अगमत्। सर्पति—ससर्प etc. by लघूपधगुण।

मित—। गमेरिति पञ्चम्यन्तम्। तदाह—गमेः परस्येति। 'सेऽसिचि—' (७।२।५७) इत्यतः 'से' इत्यनुवर्त्तते; 'आर्द्धधातुकस्येड् वलादेः' (७।२।३५) इत्यत आर्द्धधातुकस्य इति च। तच्च पूर्व्वेण विशेष्यते। तदादिविधिः—तदाह—सकारादेरिडिति—'अर्द्धधातुकस्ये'ति भावः। परस्मैपदे परे इति वाक्यशेषः। गमिष्यति, इटि अगमिष्यत्—जिगमिषति—। गम्लृ इति लृता पठितं तदाह—लृदित्वादिति। 'अनङि' इतीति—'गमहन—' इति सूत्रे इत्यर्थः। पर्य्युदासात् इति अङ्भिन्नप्रत्यये परे इत्यर्थादङि परे तत्सूत्रस्थगमादीनाम् अङ्परकानाम् उपधालोपो न इति फलितम्। अतएव अगमत् इति लभ्यते। अथ साहचर्य्यात् सृपे रूपमाह—सर्पति इत्यादि लघूपधत्वाद् गुणः। एवं ससर्प इति। अथ सृपेरम्विधिमाह—।

## २४०२। अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥६।१।५९॥

**दी—। उपदेशे अनुदात्तो य ऋदुपधस्तस्याम्वा स्याज् झलादावकिति परे। स्रप्ता—सर्प्ता। स्रप्स्यति—सर्प्स्यति। असृपत्। यम ९८४ उपरमे। यच्छति। येमिथ—ययन्थ। यन्ता। अयंसीत्। अयंसिष्टाम्। तप ९८५ सन्तापे। तप्ता। अताप्सीत्।**

The augment अम् ( अ ) is directed optionally to that root, the penultimate whereof is a ऋकार and which is read अनुदात्त in the उपदेश or धातुपाठ,——provided an affix, which is other than कित् and the beginning letter of which is one of the झल् प्रत्याहार,—comes after it. Thus—स्रप्ता ( with अम् )—सर्प्ता ( without अम् )। स्रप्ता—सृप् ता सृअम् प्ता ( by 'मिदचोन्त्यात्परः' )—स्रप्ता—( by इको यणचि (47) )। सर्प्ता—सृप् ता—सर्प्ता by पुगन्तलघूपधस्य च (2189) —सर्प्ता। Similarly स्रप्स्यति सर्प्स्यति etc and अस्रप्स्यत्—असर्प्स्यत् etc. असृपत्—by अङ् in लुङ्। In लिट् थल the form is ससर्पिथ only and not

ससर्पथ also—for the root ( सृप् ) is neither अजन्त ( अचस्तास्वत्—2294) nor अद्वान्—( उपदेशेऽत्वतः—2295) and in व and म the forms are ससृपिव—ससृपिम—इट् by क्रादिनियम्—and prohibition of गुण on account of कित्त्व of व and म। यम् to cease from work, to restrain etc. Conjugation like गम्। तप्—to make hot, to effuse light etc. तपति etc.—अताप्सीत्—the root being अनिट्, सिच does not elide and वृद्धि comes in by 'वदव्रजहलन्तस्याचः' ( २२६७ )।

मित—। अनुदात्तस्य च + ऋदुपधस्य + अन्यतरस्यामितिच्छेदः। 'आदेच उपदेशेऽशिति' ( ३।१।४५ ) इत्यत उपदेशे इत्यनुवर्त्तते। 'सृजिदृशोर्झल्यमकिति' ( ६।१।५८ ) इत्यतो झलि, अम्, अकिति इति पदत्रयमनुवर्त्तते। 'झलि' इत्यस्य च विशेषणत्वेन तदादिविधिः। तदाह उपदेशे इत्यादि। अम् इति मिद्भवति। तेन अन्त्यादचः परः प्रयुज्यते, 'मिदचः—' इत्यनेन। तदेवं सृप् ता इति स्थिते—अमि सति सृ अमृप् ता इति जाते—मलोपे—सृ अप् ता—सप्ता—इति ('इको यणचि' ( ४७)इत्यनेन यण्)। अमभावे तु लघूपधगुणे सर्प्ता—इति ; एवं स्रप्स्यति—सर्प्स्यति। उपदेशे किम्—सप्तुम्—तुमुनि परे 'ञ्नित्यादिर्नित्यमि'त्युदात्तत्वात्। ऋदुपधस्य किम् —सृप्तः ( क्तः )। लृदित्वादङ्—असृपत्—ङित्त्वान्न गुणः। यमेति—अनिडयम्। उपरमो विरामः। येमिथ—ययन्थ इत्यादि नमप्रह्वत्वे इतिवत्। यच्छति इति। इषुगमियमामित्यनेनोक्तमङः। लृटि यंस्यति। लुङि—अयंसीत्— आशीर्लिङि यम्यात् —अत्र पदत्वाभावात्—'मोऽनुस्वारः' ( १२२ ) इत्यनुस्वारो न। तप इति अयमप्यनिट्—तपति तताप इत्यादि। अताप्सीत्—हलन्तलक्षणा वृद्धिः। इटः परत्वाभावात् सिज्लोपो न। अथास्य षत्वविधायकं सूत्रं विधत्ते—

२४०३। निसस्तपतावनासेवने ॥८।३।१०२॥

टी—। षः स्यात्। आसेवनं पौनःपुन्यम्—ततोऽन्यस्मिन् विषये। निष्टपति। त्यज ९८६ हानौ। तत्यजिथ—तत्यक्थ।

त्यक्ता । अत्याक्षीत् । षञ्ज ९८७ सङ्गे । 'दंशसञ्जस्वञ्जां शपि—' ( २३९६ ) इति नलोपः । सजति । सङ्क्ता । दृशिर् ९८८ प्रेक्षणे । पश्यति ।

The स of the उपसर्ग निस् becomes cerebral when the root तप् follows and आसेवन is not implied. आसेवन means frequent discharge ( of rays ). Thus when the speaker intends to bring out that sense the form is निष्टपति (blazing repeatedly) otherwise the form is निस्तपति without षत्व । In the former case त becomes ट —by 'ष्टुना ष्टुः' ( ११३ ) । त्यज्—to leave or give up ; अनिट्—'त्यजति तत्याज etc. तत्यजिथ—तत्यक्थ—option of इट् in थल् by the भारद्वाजनियम । In तत्यक्थ—ज is changed to ग् by 'चोः कुः' and then to क्—by 'खरि च' ( १२१ ) । Similarly—त्यक्ता—( लुट् ) ; अत्याक्षीत्—अत्याज् ('वद—व्रज—' ( २२६७ ) ) स ईत्—अत्याग् सीत्—अत्याक्षीत् । त्यज्यात् in आशीर्लिङ् । षञ्ज—to mix or keep company with etc. It is षोपदेश and अनिट् । It drops its न by 'दंश—( २३९६ )' । In लिट् ससञ्ज—for there is no कित् affix and niether 'अचो—( २५४ )' nor 'अत उपधायाः' ( २२८२ ) applies. सङ्क्ता ( लुट—सञ् ज् ता—स न् ग् ता—सं क् ता—सङ्क्ता— (by चोःकुः, खरि च, नश्चापदान्तस्य and अनुस्वारस्य ययि परसवर्णः—see also—स्रङ्क्ता etc. under ( २२६६—६७) ) ; similarly सङ्क्ष्यति—असङ्क्ष्यत्—असाङ्क्षीत् ( लुङ् ) etc. दृशिर्—इरित्—दृश् to see—'पाघ्रा—' (२३६०) इति पश्यति, पश्यतु etc.—

मित—। अपदान्तस्य मूर्धन्य इत्यधिकृतं वर्तते । तेन निसः—नि इत्युपसर्गस्य—सस्य षः स्यात्—तपधातौ परे आसेवनादन्यस्मिन् विषये इत्यर्थः । निष्टपति इति ; आसेवने तु निस्तपति । अत्र षत्वं न । त्यज हानाविति—हानिरुत्सर्गः । अयमपि

धातुरनिट् । त्यजति तत्याज इत्यादि । थलि तु भारद्वाजनियमादिड्विकल्प इत्याह—तत्यजिथ—तत्यक्थ इति । इडभावपक्षे जस्य 'चोः कुः' ( ३७८ ) इति कुत्वेन ग तस्य 'खरि चेति' (१२१) चर्त्वेन क् । एवम् त्यक्ता (लुट्) । अत्याक्षीत्—अ त्याक् षीत्—हलन्तलक्षणा वृद्धिरन्यत् पूर्ववत् । एवम्—अत्याक्ष्टाम् अत्याक्षुरित्यादि । आशीर्लिङि—त्यज्यात् त्यज्यास्ताम् इत्यादि । षञ्ज—अनिडयं षोपदेशो नकारोपधश्च । सजति सजतु इत्यादि । लिटि तु—ससञ्ज । अत्र शित्प्रत्ययाभावात्—'दंशीति—'(२३९६) नलोपो न, अजन्तत्वाभावात्—अदुपधत्वाभावाच्चायं 'अचो ञ्णिति' (२५४) इत्यस्य—'अत उपधाया' ( २२८२ ) इत्यस्य चाविषयः । तेन ससञ्जेत्यत्र वृद्धिर्न । सङ्क्ता—सञ्ज्ता इति स्थिते—जस्य कुत्वेन गत्वम् तस्य च त्वनिवृत्त्या नकारस्य—अणुत्वनिवृत्तिर्नत्वम् । तस्य नश्चापदान्तस्य झलीति अनुस्वारत्वम्—गस्य च 'खरि चेति' चर्त्वम् । ततोऽनुस्वारस्य ययि परसवर्ण इति ककारसाम्यात् ङत्वम् इति प्रक्रियाविवेकः । एवम् असाङ्क्षीत्— सङ्क्ष्यति—असङ्क्ष्यत्—इत्यादि । दृशिर्, (दृश=इरित्) । अनिट् । 'पाघ्राध्मेति' पश्यादेशात्—अपि पश्यति, पश्यतु इत्यादि—

## २४०४ । विभाषा सृजिदृशोः ॥७।२।६५ ॥

### टी— । आभ्यां थल इड्वा ।

The augment इट् is enjoined optionally to the affix थल coming after the root सृज् and दृश् ।

मित— । सृजि च दृश् चेति द्वन्द्वः । तयोरिति पञ्चम्यर्थे षष्ठी तदाह—आभ्यामिति । 'गमे रिट् परस्मैपदेषु' (७।२।५८ ) इत्यत इडिति 'अचस्तास्वत्—' (७।२।६१) इत्यतो थलि इति चानुवर्त्तते । अत आह—थल इड्वेति ।

## २४०५ । सृजिदृशोर्झल्यमकिति ॥६।१।५८॥

### टी— । अनयोरमागमः स्यात् झलादावकिति । दद्रष्ठ-ददर्शिथ । द्रष्टा । द्रक्ष्यति । दृश्यात् । इरित्वादङ् वा ।

The augment अम् is attached to the roots सृज् and दृश्, when an अकित् ( other than कित् ) and झलादि ( having a झल् letter in the beginning ) affix follows. थल् is अकित् and झलादि। Thus दृश् थल् (In the इडभावपक्ष)—दृश दृश् थल्—दर्‌श् दृअम् श् थ ( by 'उरत्—' (2244) 'उरण् रपरः' (70) )—ददृअश् थ (हलादिः शेष and म् लोपः) —दद्रश् थे (by इको यणचि (47) )—दद्रष्ठ (by षत्व and 'ष्टुना ष्टुः' (113) ) and in the इडपक्ष—ददृश् इट् थ—(इट् is not झल् hence no अम्)—ददर्श् इथ (by 'पुगन्त—' (2289) )—ददर्शिथ । द्रष्टा—(लुट् ता by 'झल्यम्')। Similarly द्रक्ष्यति—दृअमृश् स्यति—द्रष् स्यति ( षत्व by व्रश्चादि ) द्रक्स्यति (by 'षढोः कः सि' )—द्रक् ष्यति ( ष by "इण्कोः" etc. ) and अद्रक्ष्यत्—etc. दृश्यात्—आशीर्लिङ्—not having शप there is no यश्यादेशः। Being इरित्—it will take अङ् optionally in place of च्लि by (इरि— तोवा 2269)।

मित—। सृजिदृशोः + झलि + अम् + अकिति इतिच्छेदः। सृजिदृशोरिति 'अनुदात्तस्य चर्दुपधस्य—(२४०२) इत्यस्मात् पूर्व्वसूत्रम्। नित्यविधिरयम्। सृजिदृशोरिति द्वन्द्वात्—षष्ठी द्विवचनम्। अमिति प्रथमा। झलि इति सप्तम्यन्तम्। तच्च अकिति इति सप्तम्यन्तस्य विशेषणम्। तेन च तदादिविधिस्तदाह—झलादावकिति इति। अमिति इट् पक्षे नास्ति, इटः अजादित्वात्—। मित्त्वादन्त्याच्च परः। दृश् दृश् थ इति स्थिते दर्‌श् दृ अम् श् थ (उरत्—उरणरपरः—ददृअश् थ—( हलादि शेषः इत्यादि )—दद्रष् थ ( यणादेशः, व्रश्चादिसूत्रेण षत्वञ्च )—दद्रष्ठ—ष्टुनाष्टुरिति थस्य ष्टुत्वेन ठत्वम् । इट् पक्षे तु लघूपधगुणः अन्यत् पूर्व्ववत्—ददर्शिथ। द्रष्टा—पूर्व्ववदम्। द्रक्ष्यति—अमि पूर्व्ववत् व्रश्चादिसूत्रेण षत्वे—द्रष्, स्यति इति स्थिते—' 'षढोः कः सि' इति षस्य कत्वे ततः सस्य षत्वे च द्रक्ष्यति—ततो रूपम्। आशीर्लिङि शबभावात्—पश्यादेशाभावे किदाशिषि इति कित्त्वाद्गुणाभावे च दृश्यात्—। इरित्वादिति। इरितो वेति (२२६९) सूत्रादिति भावः—तत्र अङो ङित्त्वाद्‌ गुणाभावे विशेषविधिमाह—

२४०६। ऋदृशोऽङि गुणः ॥७।४।१६॥

टी—। ऋवर्णान्तानां दृशेश्च गुणः स्यादङि। अदर्शत्। अङभावे—

The substitute गुण is enjoined to the roots ending in ऋ and to दृश्, when अङ् follows. Thus अदर्शत्—when अङ् is wanting (by इरितो वा) we have च्लि in place of च्लि and not क्स (see next rule), which was due by 'शल इगुपधादनिटः क्सः' (2336—3.1.35)'

मित—। ऋ इति जातिपरं न तु व्यक्तिपरम्। तदन्तविधिः। तेन ऋवर्णान्तानां सर्व्वेषां ग्रहणम् न तु ऋधातुमात्रस्य। तदाह—ऋवर्णान्तानामिति। अदर्शत्—पूर्व्ववत् प्रक्रिया। अथ दृश इगुपधत्वात् शलन्तत्वाच्च पक्षे क्से प्राप्ते तन्निषेधपर सूत्रमवतारयति—

२४०७। न दृशः ॥३।१।४७॥

टी—। दृशश्च्लेः क्सो न। अद्राक्षीत्। दंश ८८८ दशने। दशनं दंष्ट्राव्यापारः। पृषोदरादित्वादनुनासिकलोपः। अत एव निपातनादित्येके। तेषामप्यत्रैव तात्पर्य्यम्। अर्थनिर्द्देशस्याधुनिकत्वात्। 'दंशसञ्ज—' (२३८६) इति नलोपः। दशति। ददंशिथ—ददंष्ठ। दंष्टा। दंक्ष्यति। दश्यात्। अदाङ्क्षीत्। कृष ८९० विलेखने। विलेखनमाकर्षणम्। क्रष्टा—कर्ष्टा। क्रक्ष्यति—कर्क्ष्यति। "स्पृश-मृश-कृश-तृप दृपां च्लेः सिज् वा वाच्यः" (वार्त्तिक—१८२६)। अक्राक्षीत् —अकार्क्षीत्। अक्राष्टाम्—अकार्ष्टाम्। अकार्क्षुः। पक्षे—क्स। अकृक्षत्। अकृक्षताम्। अकृक्षन्। दह ८९१ भस्मीकरणे। देहिथ—ददग्ध। दग्धा। धक्ष्यति। अधाक्षीत्।

अदाग्धाम। अधाक्षुः। मिह ९९२ सेचने। मिमेह। मिमेहिथ। मेढा। मेक्ष्यति। अमिक्षत्। कित ९९३ निवासे रोगापनयने च। चिकित्सति। संशये प्रायेण विपूर्वः। 'विचिकित्सा तु संशय' इत्यमरः। अस्यानुदात्तेत्वमाश्रित्य—'चिकित्सते' इत्यादि कश्चिदुदाजहार। निवासे तु केतयति।

The substitute क्स will not replace च्लि coming after the root दृश् (in लुङ्)। Thus—by सिच् and अम् ('सृजिदृशोः—' 2405) we have—अद्राक्षीत् (अ—द्राश् सिच् ईट् त्—अद्राष् स् ईत्—अद्राक् ष ईत् etc.) —अद्राष्टाम्—अद्राक्षुः। अद्राक्षीः अद्राष्टम् अद्राष्ट। अद्राक्षम etc. दंश् to bite. To bite is the matter of teeth or fangs. The word दशन (used here) should have been दंशन for the affiix ल्युट् is neither कित् nor ङित्—thus neither the rule 'अनिदिताम्—' nor the rule ''दंशसञ्जस्वञ्जां शपि' (2396) applies. Hence Bhattoji says पृषोदरादित्वाद् etc i. e. the अनुनासिक or न of दन्श् (in the case of दशन) elides by 'पृषोदरादीनि 'यथोपदिष्टम्—' (1034—6. 3. 109). Some take it as निपातन or irregularly formed, from this very application of Panini. But their meaning is not beyond what we have said, inasmuch as the attachment of meanings against the roots is modern and not old (of course some roots were mentioned with their corresponding implications by Panini also). In दनश+शप+तिप्—' न of दन्श् elides by the rule 'दंश—etc.' (2396). In ददंश (दनश+णल्), the न elides neither by 'दंशसञ्ज—etc.' nor by 'असंयोगात् (2242) for दनश् is not followed by शप् and लिट् after it being संयोगपर is अकित् ददंशिथ—ददंष्ठ—option इट् by भारद्वाजनियम। ददंष्ट—ददन्श् थ—

दर्ं ष् थ ( अनुस्वार—by 'नश्चापदान्तस्य झलि' (123)) and श becomes ष by 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' (294) ) then थ becomes ठ by 'ष्टुनाष्टुः' ( 113 ). Similarly दंष्टा (लुट् ता)। दङ्क्ष्यति—दन्श + स्यति—ष् स्यति (by 'नश्चापदान्तस्य—' and 'व्रश्चभ्रस्ज—' (294) )—दंष् स्यति (by 'षढोः कः सि' (295) )—दङ्क्स्यति—(by अनुस्वारस्य ययि परसवर्णः (124))—दङ्क्ष्यति (by इण्कोः—and आदेश—(211—121). दश्यात्—आशीर्लिङ्—न elides by 'अनिदिताम्—' (415) for आशीः—is कित्। अदाङ्क्षीत्—वृद्धि by 'वदव्रज—etc.' (2267) and the rest is as in दङ्क्ष्यति। कृष् to attract or draw—अनिट्। कर्षति by लघूपधगुणः। चकर्ष—(गुण and 'कुहोश्चुः') क्रष्टा—कर्ष्टा by अम्विकल्प in 'अनुदात्तस्य चर्दुपधस्य—' (2402)—with अम् क्रष्टा ( कृष ता—कृ अम् ष् ता—क्रष् ता ), and without अम् गुणः। Similarly क्रक्ष्यति ( कृ अम् ष स्यति—क्रष् स्यति—क्रक्ष्यति ) and कर्क्ष्यति ( कृषस्यति—कर्ष् स्यति कर्क्ष्यति )।

स्पृशमृश etc 'It should be expressed that सिच् optionally replaces the च्लि of (i. e. coming after) स्पृश्, मृश्, कृष्, तृप् and दृप्' (Vartika (1826)). Thus with सिच् and अम्—अक्राक्षीत्(अ कृष् सिच् ईट् त्—अ कृ अम् ष् सिच् ईत्—अक्रष् स्ईत्—अ क्राष् स् ईत् (by वदव्रज—(2267))—अक्राक्षीत्—(by "षढोः कः सिः). Similarly अक्राक्ष्म्—अक्राक्षुः। But अम् being optional by—अनुदात्तस्य च—(2402) there will be another form with सिच् and without अम् as अकार्क्षीत् ( अ कृष् सिच् इट् त्—अकार्ष् सीत्—अ कार्क् षीत्—by षढोः कः सि, इण्कोः and आदेशप्रत्यययोः ), similarly अकार्क्ष्म and अकार्क्षुः—( अ कार्ष सिच् झि—अकार्ष स् उस्—अकार्क् षुस् )। Now सिच् being optional, we have another series of forms with क्स by 'शल इगुपधात्—' (2336). Thus अकृक्षत्—( अ कृष् क्स तिप्—अकृष् स त् ( here neither गुण nor अम् will come in for क्स is कित् )—अकृक्,

ष त् ( by षढोः कः सि and 'इण्कोः'—'आदेश...' (211--12) ) ; similarly ...अक्षताम्···( तस=ताम् ) and अक्षन् ( here जुस् will not replace झि for there is no सिच् but it will make room for 'झोऽन्तः' and अन्ति will drop इ by 'इतश्च' (2207) and त् by 'संयोगान्तस्य लोपः' (५४)) । दह् 'to turn to ashes' अनिट्...दहति ; ददाह etc. देहिथ···ददग्ध—option of इट by भारद्वाजनियम । देहिथ···एत्वाभ्यासलोप by 'थलि च सेटि' (2261) ददग्ध...ददह् थ...ददघ् थ ( by 'दादेर्धातोघः' (325))...ददघ् ध (by 'झषस्तथोर्धोऽधः' (2280))···ददग्ध (by झलां जश् झशि' (52). Similarly दग्धा । धक्ष्यति...दह्स्यति...दग् स्यति (by 'दादेर्धातोर्घः ; (325))...धग् स्यति (by 'एकाचो बशो भष्—' (326)...धक् स्यति (by 'खरि च' (121)···धक्ष्यति ( by इण्कोः' and 'आदेशप्रत्यययोः). अधाक्षीत्—अ दह् सिच् ईट् त्—अदाह ('वदव्रज—' 2267 ) स् ईत्—अ धाग् सीत्—अ धाक् षीत् etc ). अदाग्धाम्—अ दाह् ('वदव्रज—' ) तस्—अदाग् ताम्—अदाग् धाम् ( by 'झषस्तथोर्धोऽधः' ) अधाक्षुः—( like अधाक्षीत् with 'झिजुस् by 'सिजभ्यस्त—' ). मिह—to sprinkle, to drip etc. It is अनिट् । मेहति—मिमेह by लघूपधगुण । मिमेहिथ—compulsory इट् by क्रादिनियम । भारद्वाजनियम does not apply here for the root falls neither in 'अचस्तास्वत्' nor in 'उपदेशे—' (2294—95). मेढ़ा—लुट् मिह् ता—मेह् ता—मेढ् ता ( होढः—( 324 )'—मेढ् धा ( 'झषस्तथो—( 2280 )—मेढ् ढा (ष्टुनाष्टु (113) —मे ० ढा ( by ढो ढे लोपः ( 2335 ) । मेक्ष्यति—मिह् स्यति - मेह् स्यति—मेढ् स्यति—मेक् स्यति ('षढोः कः सि' )—मेक् ष्यति ( इण्कोः—आदेश— ) । Similarly—अमेक्ष्यत् ( लृङ् ) । अमिक्षत्—अ मिह् च्लि तिप्—अ मिह् क्स त् ( 'शल इगुप—' ( 2336 )—अ मिढ् स त् ( no guna for क्स is कित् ) अमिक् सत् ( 'षढोः कः—' अमिक् षत्—( by इण्कोः—' आदेश—' ) । कित—to live and to remove diseases. ( Note other meanings

of the same under 'गुप्तिप् किद्भ्यः सन्' ( 2393 )) चिकित्सति—कित् कित् सन् शप् ति it not being आर्द्धधातुक no इट or गुण—किकित्स अति—चिकित्सति by कुहोश्चुः and अतो गुणे ( 161 ). It is often preceded by the उपसर्ग वि in the sense of doubt. Thus Amara says 'विचिकित्सा ( वि-चिकित्स + अ ( by 'अप्रत्ययात्) + टाप् स्त्रियाम्) is the synonym of संशय—' । Some one has read it under अनुदात्तेत् roots and instanced as चिकित्सते etc. But in the sense of living the form is केतयति ( चुरादि ). In a sense other than the five under—'कितेर्व्याधिप्रतीकारे, निग्रहे, अपनयने, नाशने, संशये च' वा—1689 ), the root is चुरादि and hence केतयति by लघूपधगुण ।

मित— । 'च्लेः सिच्' ( ३।१।४४ ) इत्यतश्च्लेरिति, 'शल इगुपधादनिटः क्सः' ( ३।४।४५ ) इत्यतः क्स इति चानुवर्त्तते । तदाह—दृशः च्लेः क्सो नेति । किन्तु सिजेवेति भावः । अत उदाहरति—अद्राक्षीत् इति—अ दृश् सिच् ईट् त् इति स्थिते 'सृजिदृशोरिति' अमागमे, अ द्र अम् श् स् ईत् इति जाते—यणादेशे 'वदव्रजेति' हलन्तलक्षणायां वृद्धौ च अद्राश् स् ईत् इति सम्पद्यमाने 'द्राशः' शकारान्तत्वाद् 'व्रश्चभ्रस्जसृजमृजेति' षत्वे तस्य 'षढोः कः सीति' कत्वे 'इणकोः आदेशप्रत्यययोरश्चेति' सिचः षत्वे च—अद्राक्षीत् इति ततो रूपम् । अमागमस्येह नित्यत्वात् अदार्क्षीत् इति पाक्षिकरूपं न । नापि अदृक्षत् इति ; क्सस्याप्यभावात् इति ज्ञेयम् । एवम् अद्राष्टाम्—( तसस्तामादेशे तस्य ष्टुत्वे च ) । अद्राक्षुः—सिजभ्यस्तविदिभ्यश्चेति झेर्जुसादेशे षत्वकत्वषत्वानि प्राग्वत् । दंश दशने इति । अयमप्यनिट् दंष्ट्राणां व्यापारः (कर्म) इति विग्रहः यद्वा दंष्ट्रानिष्ठव्यापारः । अथास्य दशनइत्यस्य व्युत्पत्तिं दर्शयति पृषोदरेति—'पृषोदरादीनि यथोपदिष्टम्' ( १०३४—६।३।१०९ ) इति न्यायेन अनुनासिकलोपः—नकारलोप इत्यर्थः । अन्यथा हि दनश् + ल्युट् इति दंशनमित्येवस्यात्, ल्युट् प्रत्ययस्य कित्त्वाभावात्—'अनिदितां हल उपधायाः क्ङिति' ( ४१५ इत्यप्राप्तेः । 'दंशसंज—' इत्यस्य तु शप्प्रत्ययमात्र—

विषयत्वात्। अत एव इति अस्मादेव पाणिनेः प्रयोगादेव निपातनात् निपातनम् आश्रित्य शब्दोऽयं साधुरिति केचित् मन्यन्ते। अत्रैव तात्पर्य्यमिति—तैरपि पृषोदरादिरेव द्रष्टव्यः। क्वत इत्यत्राह—अर्थनिर्द्देशस्येति। यद्यपि पाणिनापि क्वचित् क्वचित् धातुपाठे अर्थनिर्द्देशः कृतः तथापि आधुनिकैरेव प्रायशो धातूनामर्था निरूपिताः। दशति इति 'नश्चापदान्तस्य—' (८।३।२४) इति नलोपस्य असिद्धत्वादिति भावः। थलि तु ददंश इति—तस्यार्द्धधातुकत्वेन 'दंशसञ्जस्वञ्जां शपि—' इत्यस्याप्राप्तिः संयोगपरत्वेन लिटः कित्त्वाभावाच्च 'अनिदितामित्यस्य' प्राप्त्यभावात् नलोपो न। अथ थलि भारद्वाजनियमात् इडविकल्पाद्रूपद्वयं दर्शयति—ददंशिथ ददंष्ठ इति। तत्र ददंशिथेति स्पष्टम्। ददंष्ठ इत्यत्र तु ददनश्थ इति स्थिते 'नश्चापदान्तस्य—' इति नस्य अनुस्वारः—'व्रश्चभ्रस्जेति' शस्य षत्वे तत्साहचर्य्यात् थस्य ष्टुत्वेन ठत्वे च रूपम्। एवं दंष्टा (दनश्+ता) इत्यत्र। दङ्क्ष्यति दन्श्स्यति इति स्थिते नस्यानुस्वारः। शस्य व्रश्चेति षत्वम्। तस्य 'षढोः कः सि' इति कत्वम्। ततोऽनुस्वारस्य परसवर्णो ङः। ततः 'क्ष'—स्य षत्वे रूपम्। दश्यात्—यासुटः कित्वात् 'अनिदितामिति' (४१५) नलोपे रूपम्। अदाङ्क्षीत् इति—अ दनश् सिच ईट् त इति स्थिते हलन्तलक्षणायां वृद्धौ नश्चेति अनुस्वारः। व्रश्चेति शस्य षः। तस्य षढोरिति कः। ततः अनुस्वारस्य परसवर्णो ङः। सिचः षत्वम्। एवम्—अदांष्टाम्। अदांक्षुः—सिजभ्यस्तविदिभ्यश्चेति भेर्जुस्। कृष विलेखने इति। अनिट्—कर्षति (लघूपधगुणः)। चकर्ष—अत्रापि 'अचो ञ्णिति—' (२५४), 'अत उपधायाः' (२२८२) इत्यनयोरप्राप्तयोः पुगन्तेति (२१८९) गुणः। एवं 'अचस्तास्वत्—' (२२९४), 'उपदेशेऽत्वतः (२२९५) इत्यनयोश्चाप्राप्तयोः 'ऋतो भारद्वाजस्येति' (२२९६) नियमे अप्राप्ते क्रादिनियमात् थलि वमयोश्च नित्यमिट्—चकर्षिथ। चकर्षिव। चकर्षिम। क्रष्टा—कर्ष्टा इति 'अनुदात्तस्य चेति'—(२४०२) अमागमविकल्पात् तासिरूपद्वयम्। क्रष्टा—कृ अम ष् ता—कृ अष् ता—क्रष् ता इति। अन्यत्र कृष् ता—कर्ष् ता—कर्ष्टा—लघूपधगुणेन रूपम्। क्रक्ष्यति—कर्क्ष्यति—कृष+स्यति—अमि—क्रष् स्यति, षस्य कत्वे क्रक्स्यति षत्वम्

-क्षत्स्यति। अन्यत्र क्रष् स्यति—कर्ष् स्यति (अमभावे गुणः) कर्क्ष्यति कर्क्ष्यति। अथ लुङि—'शल इगुपधादिति' (२३३६) इति क्सप्रत्ययभावे प्राप्ते वार्त्तिकमुप-न्यस्यति—'स्पृशमृशेति—' एभ्यः परस्य च्लेः स्थाने सिजादेशोवेति तदर्थः। तदेवं क्रषे लुङि सिज्विकल्पात् क्सप्राप्तेश्च रूपत्रयम्—अक्राक्षीत् (सिजमागमात्) अकार्क्षीत् (मिच्यमभावे) अक्रक्षत् (क्सादेशे)।

(1) अक्राक्षीत्—अ क्र अम ष् सिच् ईत्—अक्राष् सीत्— अक्राष् सीत् (वदव्रजेति—(२२६७) वृद्धिः)—अक्राक्षीत् (पूर्व्ववत् कत्वषत्वे)।

(2) अकार्क्षीत्—अ क्रष् सिच् ईत्—अकार्ष् सीत् (वदव्रजेति वृद्धिः) अकार्क्षीत्—(पूर्व्ववत्षढोरिति षस्य कत्वम्, इण्कोरादेश—इति षत्वम्)।

(3) अक्रक्षत्—अक्रष् क्स तिप् (अत्र अपृक्तत्वेऽपि सिचोऽविद्यमानत्वात्—'अस्तिसिचोऽपृक्ते' इति इडागमो न) अक्रष् सत् (कस्य कित्त्वेन गुणागमो न)—अक्रक्षत् (पूर्व्ववत् कत्वषत्वे)। एवम् (1) अक्राक्षिष्टाम् अक्राक्षिषुः (2) अकार्क्षिष्टाम् अकार्क्षिषुः (3) अक्रक्षताम्—अक्रक्षन्। अक्राक्षिषुरित्यादिषु 'सिजभ्यस्त विदिभ्यश्चे'तिभेर्जुस्। अक्रक्षत्—इत्यत्र तु सिजभावात्—'झोऽन्तः', 'इतश्च', 'संयोगान्तस्य लोपः' (५४) इति, अभवन्नितिवत् प्रक्रिया बोध्या—। दह भस्मीकरणे इति। अयमप्य-निट्। दहति। ददाह। देहिथ—ददग्ध इति भारद्वाजनियमादिड्विकल्पः। तत्र इट् पक्षे—थलि च सेटि (२२६१) इति एत्वाभ्यासलोपौ। अन्यत्र—दद्ह् थ इति स्थिते 'दादेर्धातोर्घः' (३२५) इति हस्य घत्वम्। 'झषस्तथोर्धोऽधः' (२२८०) इति थस्य धत्वम्। 'झलां जश् झशि' इति घस्य गत्वम्। एवम् दह्–ता=दग्धा। धक्ष्यति—दह् स्यति इति स्थिते दादेरिति घः। 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (३२६) इति दस्य भषभावो धः। घस्य जश्त्वेन गः। तस्य चर्त्वेन कः। तत 'इण्कोरादेश-प्रत्यययोश्चे'ति' 'स'—स्यषत्वम्=धक् ष्यति—इति। एवमधक्ष्यत्। अधाक्षीत्—इति अदह् सिच ईट् त् इति स्थिते हलान्तलक्षणायां वृद्धौ हस्य घः। दस्य भषभावो धः। घस्य जश्त्वेन गः। तस्य चर्त्वेन कः। ततः पूर्व्ववत् षत्वम्। अदाग्धाम् इति। अ—दहसिच् तस्=अ दाह्—स् ताम्=अदाघ् स् ताम् अदाग्

स् धाम् = अदाग् ० धाम्—झलो झलीति सलोपः। अधाक्षुः—अ दाह् सिच् झि = अदाह् स् जुस् = अदाघ् स् उस् = अधाग् सुस् ( 'एकाचो बशो—', 'झलां जस्—' ) = अधाक् षुस्—( पूर्ववत् कत्वषत्वे )। मिह सेचने इति। अत्र सेचनस्य चरणे तात्पर्य्यम्। मेहति। मिमेह—'अचो ञ्णिति—', 'अत उपधाया' इत्यनयोरप्राप्तयोः पुगन्तेति लघूपधगुणः। मिमेहिथ—क्रादिनियमान्नित्यमिट्। 'थलि च सेटीति' एत्वमभ्यासलोपश्च। मेढा—मिह् ता इति स्थिते लघूपधगुणे होढः, 'झषस्तथोः—', 'ष्टुनाष्टुः' 'ढो ढे लोपः'—इति ढत्वधत्वढत्वढलोपाः। मेक्ष्यति = मिह् ष्यति मेह—स्यति—मेढ् स्यति मेक्स्यति—मेक् ष्यति इति। एवम् अमेक्ष्यत् इति। अमिक्षत् इति—अ मिह् क्सत् इति स्थिते क्सस्य कित्त्वेन क्ङितीति गुणनिषेधः। ढत्वकत्वषत्वानि। अमिक्षाताम्—'क्सस्याची'ति अलोपेन— 'आतो ङित' इत्यस्याप्रवृत्त्या एयादेशो न। एवम् अमिक्षन्नित्यादि। कित निवासे रोगापनयने चेति। तत्र रोगापनयनाद्यर्थपञ्चकेष्वेव 'गुप्तिजकिद्भ्य—' इति सन्प्रत्ययः। चिकित्सति—कित् कित् सन्—चिकित्स इति सनाद्यन्ता इति धातुसंज्ञायाम् शप्तिपौ चिकित्स अति 'अतो गुणे' (१९१) इति पररूपैकादेशे चिकित्सति। संशये इति स्पष्टम्। मतान्तरमाह—असेति। अनुदात्त्वम् इति अतएव तङ्। निवासे तु चुराद्यन्तर्गतत्वात् गुणः। शत्रु चिकित्सति—निगृह्णातीत्यर्थः। चेले व्रणं चिकित्सते अपनयतीत्यर्थः।

**दो—। दान् ९९४ खण्डने। शान् ९९५ तेजने॥ इतो वहत्यन्ताः स्वरितेतः।—दीदांसति—दीदांसते। शीशांसति—शीशांसते। अर्थविशेषे सन्। अन्यत्र दानयति। शानयति। डु पचष् ९९६ पाके। पचति—पचते। पेचिथ—पपक्थ। पेचे। पक्ता। पक्षीष्ट। षच ९९७ समवाये। सचति—सचते। भज ९९८ सेवायाम्। बभाज। भेजतुः। भेजुः। भेजिथ—बभक्थ। भक्ता। भक्ष्यति—भक्ष्यते। अभाक्षीत्। अभक्त। रञ्ज ९९९ रागे। नलोपः। रजति—रजते। रज्यात्।**

रङ्क्षीष्ट । अराङ्क्षीत् । अराङ्क्ताम् । अरङ्क्त । शप १००० आक्रोशे । आक्रोशो विरुद्धानुध्यानम् । शशाप—शेपे । अशाप्सीत्—अशप्त । त्विष १००१ दीप्तौ । त्वेषति—त्वेषते । तित्विषे । त्वेष्टा । त्वेक्ष्यति—त्वेक्ष्यते । त्विष्यात्—त्विक्षीष्ट । अत्विक्षत्—अत्विक्षत । अत्विक्षताम् । अत्विक्षत । यज १००२ देवपूजासङ्गतिकरणदानेषु । यजति—यजते ।

दाण् to cut. शान् to sharpen. Roots, beginning from here and ending in वह (1004) प्रापणे are स्वरितेत्—i. e. उभयपदी । Thus दीदांसति—दीदांसते—दान दान् सन्=दादान स=दि दांस (by—सन्यतः (2317) and 'नश्चापदान्तस्य—')=दीदांस (by 'मान्वधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' (2394)'. Then दीदांस+शप्+तिप्=दीदांस अति=दीदांसति (by अतो गुणे (191)). Similarly दीदांसते and शीशांसति—शीशांसते । सन् is enjoined here in a particular sense i. e. in the sense of 'दानेरार्जवे (वा—1595) and शानेर्निशाने (वा—1695) under 'मान्वध—'(2494). Hence in a sense other than straight forwardness (आर्जव) and whetting the roots (दान शान्) will fall under चुरादि class and will give दानयति—शानयति etc. डु पष्—to cook अनिट् । डु for 'ड्वितः क्त्रिः' 'क्त्रेर्मप्'—पक्त्रिमम् and ष् for 'षिद्भिदादिभ्योऽङ्'=पचा । उभयपदी—पचति—पचते । पपाच—पेचे एत्वाभ्यासलोप by 'अत एकहल्मध्ये—'(226e)) पेचिथ—पपक्थ—option of इट्—by भारद्वाजनियम ; एत्वाभ्यासलोप by थलि च सेटि (2261). पपच् थ then by 'चोः कुः (378) च changes into क. Similarly पक्ता । पक्षीष्ट (आशीः) —पच सीयुट् सुट् त—पचसीय् स् त—पक्षीय स्त—पक्षीष्ट (यलोप by 'लोपो व्योर्वलि') । Then षत्व of both the स and त changes into ट by 'ष्टुना—' thus पक्षीष्ट । परस्मै—पच्यात् । षच् to collect or accumulate

अनिट्, षोपदेश—like डुपष्— । भज to serve भजति भजते । बभाज भेजे । भज भज णल—भभाज् अ—बभाज । भज् भज् ए—० भेज ए (by—अत एकहल 2260). Similarly—भेजतुः भेजुः । भेजिथ—बभक्थ option of इट् by भारद्वाजनियम । भेजिथ by थलि च सेट—and in बभक्थ the process is—भभग्थ—बभज्थ—by ( चोः कुः )—बभक् थ ( 'खरि च' । भेजिव भेजिम like पेचिव पेचिम—by क्रादिनियम and 'अत एकहल्—' । भक्ष्यति—भक्ष्यते—भज्स्यति भग्स्यति—भकष्यति so भक्ष्यते । अभाक्षीत्—अभज् सिच् इट् त् अभाज् स् इत् = अभाग्—क—स—ष ईत् । अभक्त—अभज सिच् त (आत्मने—)—अभग् स त—अभग ० त by 'झलो झलि' (2281)—अभक्त ( खरि च ) । So also पक्ष्यति पक्ष्यते । अपाक्षीत्—अपक्त । रञ्ज् to dye, to colour etc. नलोप i.e. the elision of न is effected by the rule 'रञ्जेश्च' 2397). रजति—रजते ;in णल् = ररञ्ज,—ररञ्जे (रराज—रेजे are from राजृ दीप्तौ (822) see under—फणां च सप्तानाम्] (2354)) । रज्यात्—रङ्क्षीष्ट—( आशीः ) । The former drops न by 'अनिदिताम्—' (415) and the latter is thus—रञ्ज सीयुट् सुट् त—रङ्ज् सीय् स् त—रनृग् सी स् त (by चोः कुः—ज changes into ग and ञ to its former position नत्व and स elides by 'लोपो व्योर्वलि' (872))= रङ्क् षीष्ट (न first changes to अनुस्वार by नश्चापदान्तस्य —then to ङ् by 'अनुस्वारस्य ययि परसवर्णः' । ग changed to क by—'खरि च (121) and स to ष by इणकोः and आदेशप्रत्यययोः—and finally त to ट । Thus रङ्क्षीष्ट । अराङ्क्षीत्—अरङ्क्त ( लुङ् forms ). अराङ्क्षीत् —अ रञ्ज् सिच् इट् त—अराञ्ज् सिच् ईत् (वृद्धि by वदव्रज—(2267), though there are more than one consonant viz ञ् ज् between the अच् (अ) and the सिच् ;for it is sanctioned by भाष्य—see ante. under असाङ्क्त, असाङ्क्षीत्)—अरानृग् स् इत्—अरां ग् स् इत्—अराङ्क् स् ईत्—अराङ्क् षीत्—अराङ्क्षीः ( rules as before). अरङ्क्त—अरञ्ज् सिच् त—अ रनृग् स् त

(want of वृद्धि etc by 'लिङ्सिचावात्मनेपदेषु' (2300)) अरङ्क ० त—अरङ्क्त ( सलोप by झलो झलि)। Similarly अराङ्क्तास्—अरङ्क्षाताम्, अराङ्क्षुः—अरङ्क्षत etc. शप् to be angry with, to curse etc. आक्रोश means to think ill ( of onother ). It also is अनिट्। शपति शपते, शशाप (णल् )—शेपे ( by अत एकहल् 2260)। शेपिथ ( थलि च सेटि )—शशप्थ—शेपिषे (आत्मने—)। शेपिव—शेपिम (इट् by क्रादिनियम)। Similarly शेपे शेपिवहे शेपिमहे। अशाप्सीत्—अशप्त (लुङ् ) = अ श प् सिच् इट त्—अशाप्सीत् (वृद्धि by 'वदव्रज—')। In the आत्मने—अ शप सिच् त—अ शप् स् त—अ शप् ० त (सलोप by 'झलो झलि,' (2281) want of वृद्धि by लिङ्सिचावात्मनेपदेषु (2300) and 'क्ङिति च'—अशप्त। Similarly—अशाप्साताम्—अशप् साताम् and अशाप्सुः—अशप्सत etc. त्विष—to look bright or effuse light etc. अनिट् त्वेषति—त्वेषते by लघूपधगुण। तित्वेष—तित्विषे, ( लिट—णल् and एश् ) the former is gunnated by 'पुगन्त—' and the latter is prohibited to have guna on account of its being कित् by 'क्ङिति च' and कित्त्व is by 'असंयोगाल्लिट् कित्'। त्वेष्टा ( लुट् )। त्वेक्ष्यति—त्वेक्ष्यते (लृट् ), त्विष्स्यति = त्वेष्स्यति ( गुण by पुगन्त—'; त्वेक्ष्यति by —'षढोः कः सि'; similarly त्वेक्ष्यते। अत्वेक्ष्यत्—अत्वेक्ष्यत etc. त्विष्यात्—त्विक्षीष्ट ( the former is कित् by 'किदाशिषि' and the latter by 'लिङ्सिचावात्मनेपदेषु—' ( 2300 ) hence no guna in both the cases by 'क्ङिति च' )—see also त्वेक्ष्यति etc. अत्विक्षत्—अत्विक्षत ( लुङ् ); 'शल इगुपधादनिटः क्सः' (2336)—thus क्स comes in place of च्लेः and क्स being कित् both are not gunnated. ष becomes क् by 'षढोः कः सि' and स of क्स becomes ष by 'इणकोः and आदेशप्रत्यययोः' (211-12). Similarly अत्विक्षाताम् ( तस्=ताम् ); अत्विक्षन्त by 'क्सस्याचि' (2337) 'अतो गुणे' etc (191) यज—to worship etc.—अनिट्।

मित—। दानशान् इति (मानवधेतिसूत्रोपात्तौ धातू)। इत इति दान् इत्यारभ्य वह प्रापणे (१००४) इत्यन्ता उभयपदिनः 'स्वरितञित—' इति सूत्रात्। दीदांस-तीत्यादि—दान दान् सन् इति स्थिते हलादिशेषे ह्रस्वे, ददान्स इति भवति। ततः 'सन्यतः' (२९७) इत्यभ्यासस्य इत्वे 'नश्चापदान्तस्येति'—नस्यानुस्वारे च कृते —दिदांस इति। ततः 'मानवधेति' (२३९४) दीर्घे दीदांस इति। तस्य च 'सनाद्यन्ता धातवः' इति धातुत्वे प्राप्ते शप्तिबादयः। तदे दीदांस शप् ति इति स्थिते=दीदांस अति इति जाते 'अतो गुणे' (१९१) इति पररूपेण दीदांसति एवमन्यत्र प्रक्रिया। अर्थविशेषे इति। स चार्थविशेषः—पूर्वं वार्त्तिक सूत्रके 'दानेरार्ज्जवे' 'शानर्निशाने' इत्यत्रोक्तम्। अन्यत्रेति। एतद्भिन्नार्थे तु चुराद्य-न्तर्गतत्वाद् दानयति—दानयते इत्यादि। डु पचष् इति। ड्वित्करणं 'ड्वितः क्त्रिः' 'क्त्रेर्मप् नित्यम्'=पक्त्रिमम् इत्यर्थम्। तथा च प्रयोगः—'विपक्त्रिमज्ञानगतिर्मनस्वी' भट्टिः १म सर्गः। षित्करणमङर्थम् 'षिद्भिदादिभ्योऽङ्—' इति सूत्रात्=पचा इत्युदाहरणम्। तस्याः पाकोऽर्थः। लिटि—पपाच—पेचे। एकत्र णित्त्वाद 'अत उपधाया' इति वृद्धिः। अन्यत्र 'अत एकहल्—' (२२६०) इत्येत्वमभ्यास—लोपश्च। पेचिथ—(थलि च सेटि (२२६१)) पपक्थ (प पच् थ—पपक्थ 'चोः कु'रिति कत्वम्)—भारद्वाजनियमाद् इडविकल्पः। वमयोस्तु—पेचिव—पेचिम इति। पक्ता (लुट्—चोःकुरिति कुत्वम्)। पक्षीष्ट—(आशिषि—पच् सीयुट् सुट् त इति स्थिते यलोपात् पच् सी स् त इति जाते कत्वषत्वष्टुत्वानि) लृटि पक्ष्यति...पक्ष्यते। लृङि—अपक्ष्यत्—अपक्ष्यत। लुङि—अपाक्षीत्—अपक्त (परस्मैपदपक्षे—हलन्तलक्षणा (वदव्रजेति—) वृद्धिः। कत्वषत्वे। आत्मनेपद पक्षे—अ पच् स् त इति स्थिते 'झलो झलि' (२२८१) इति सलोपे चस्य कत्वे रूपम्) षच समवाये। अयं षोपदेशोऽनिट् च। समवाय एकत्रीकरणम् एकत्रीभवनं सेचनमित्यादि। ससाच—सेचे। असाचीत्—असचीत् ('अतो हलादेर्लघोः' इति वृद्धि—विकल्पः)—असचिष्ट (आत्मने—) इत्यादि। भजधातुरप्यनिट—भजति—भजते। बभाज—भेजे। एकत्र णलि वृद्धिः (अत उपधायाः २२८२); अन्यत्र 'अत एकहल्—

(२२६०) इत्येत्वाभ्यासलोपौ। एवं भेजतुरित्यादि। भेजिथ—बभक्थ पूर्व्वत 'थलि च सेटि' (२२६१) इति एत्वाभ्यासलोपौ, अन्यत्र बभज् थ इति स्थिते चोः कुरिति जस्य गः तस्य 'खरि चेति' चर्त्वेन कः। एवं भक्ता इति। भक्ष्यति—भक्ष्यते—भज्स्यति इति स्थिते गत्वकत्वषत्वानि पूर्व्ववत्। एवं भक्ष्यते। अभाक्षीत्—(अभज् सिच् ईट् त इति स्थिते वृद्धिगत्वकत्वषत्वानि)—अभक्त (अभज—सिच् त—अभज् स् त इति स्थिते गत्वकत्वसलोपाः); भेजिव—भेजिम (लिटि); भज्यात्—भक्षीष्ट (आशिषि)। रञ्जरागे इति। अनिट्। नलोपः—'रञ्जेश्चेति' सूत्रात्—इति भावः। रजति—रजते; नोपधत्वेन लघूपधत्वाभावात् गुणो न। संयोगपरत्वेन लिटः कित्त्वं न। तेन अनिदितामित्यस्याप्रवृत्त्या नलोपाभावः—ररञ्ज—ररञ्जे। ररञ्जतुः—ररञ्जाते। ररञ्जुः—ररञ्जिरे इत्यादि; रराजे—रेजे—रराज इत्यादि तु राजृ दीप्तावित्यस्य इति 'फणां च सप्तानाम्' इत्यत्रोक्तम्। रज्यात्—रङ्क्षीष्ट=आशिषि रूपद्वयम्—पूर्व्वत्र किदाशिषि इति कित्त्वेन गुणाभावः—नलोपश्च। परत्र इक्समीपत्वाभावात्—'लिङ्सिचावात्मनेपदेषु' (२३००) इत्यस्याप्रवृत्त्या अकित्त्वेन नलोपाभावः। तद्देवं रन्ज सीयुट सुट त इति स्थिते नस्य अनुस्वारः तस्य परसवर्णेनङः। जस्य कुत्वेन गः। तस्य चर्त्वेन कः। सीयुट्सुटोः—इण्कोः—आदेशप्रत्यययोरिति षत्वे, लोपो व्योर्वलि (८७३) इति यलोपः। तस्य ष्टुत्वेन टत्वम्। अराङ्क्षीत्—अरङ्क्त। पूर्व्वत्र—अरन्ज सिच ईट् त् इति स्थिते अनेकहल्व्यवधानेऽपि वदव्रजेति हलन्तलक्षणायां वृद्धौ अरान् ज् स् ईत् इति क्रमेण अनुस्वारपरसवर्णगत्वकत्वषत्वानि। अन्यत्र—अरन्ज+सिच् त इति स्थिते 'लिङ्सिचावात्मनेपदेषु (२३००) इति सिचः कित्त्वेन 'क्ङिति चेति' निषेधाद् वृद्ध्यभावे 'झलो झलीति' सलोपः। अन्यत् पूर्व्ववत्। लृटि—रङ्क्ष्यति—रङ्क्ष्यते। लृङि—अरङ्क्ष्यत—अरङ्क्ष्यत। लङि—अरजत् विधिलिङि—रजेत् इत्यादि। शप आक्रोशे इति। आक्रोशपदस्यार्थमाह—आक्रोश इति—विरुद्धस्य अनिष्टस्य अनुध्यानम् चिन्तनमिति यावत्। शपति—शपते। अनिड्यं धातुः। शशाप—शेपे। पूर्व्वत्र 'अत उपधाया' (२२८२) इति णलि वृद्धिः

अन्यत्र 'अतएकहल्—' ( २२६० ) इति एत्वाभ्यासलोपौ । 'थलि च सेटि'—शेपिथ—शशप्थ ( भारद्वाजनियमाद् वेट् ); वमयोस्तु—शेपिव । शेपिम । क्रादिनियमान्नित्यमिट् ) । अशासीत्,—अशप्त—पूर्व्ववत् वदव्रजेति हलन्तलक्षणा वृद्धिः । अन्यत्र—'लिङ्सिचावि'ति कित्वेन गुणवृद्धिविरहः । 'झलो झलीति' सलोपश्च । शप्साति—शप्साते । शप्यात्—शप्सीष्ट इत्यादीन्यदाहार्य्याणि । त्विष इति—अयमप्यनिट् । त्वेषति—त्वेषते—लघूपधगुणः । पचति इत्यादावपि लघूपधगुण एव । तत्र अकारस्य गुणेनापि अकारत्वम् 'अदेङ् गुणः' इति नियमात् । तित्वेष—तित्विषे—णलि पुगन्तेति गुणः एशि तु कित्त्वाद् गुणाभावः । त्वेष्टा (लुट्) । त्वेक्ष्यति—त्वेक्ष्यते—त्विष् स्यति इति स्थिते गुणे त्वेष् स्यति इति जाते 'षढोः कः सि' इति षस्य कत्वे सस्य षत्वम । त्विष्यात् —त्विक्षीष्ट—'क्तिदाशिषि', 'लिङ्सिचावात्मनेपदेषु—' (२३००) इत्युभयोः कित्त्वात् 'क्ङिति' इति गुणनिषेधः । त्विक्षीष्ट—इत्यत्र षत्वकत्वषत्वानि । अत्विक्षत्—अत्विक्षत । उभयत्रापि 'शल इगुपधादनिटः क्सः' (२३३६) इति क्सः । तस्य कित्त्वात् प्राग्वद् गुणाभावः । षत्वकत्वषत्वानि । एवम्—अत्विक्षताम्—अत्विक्षाताम् । अत्विक्षन्—अत्विक्षन्त इत्यादि । अत्विक्षन्त इत्यत्र 'झोऽन्त' इत्यन्तादेशे—कृते 'क्सस्याचि' ( २३३७ ) इति क्सप्रत्ययान्तस्य अलोपे रूपम् । यद्वा—'अतो गुणे' (१९१ ) इति पररूपम् । यज इति । अनिट्—पूजेति—'इह देवतोद्देशेन द्रव्यत्यागः पूजे'ति' नागेशः । अस्य लिटि सम्प्रसारणं स्यादित्याह—

## २४०८ । लिट्यभ्यासस्योभयेषाम् ॥६।१।१७॥

## टी—। वच्यादीनां ग्रह्यादीनाञ्चाभ्यासस्य सम्प्रसारणं स्याल्लिटि । इयाज ।

The samprasarana occurs in the reduplicate ( अभ्यास ) of वचि स्वपि and यज् etc and also of ग्रहि, ज्या, वयि, व्यधि and वश् etc in लिट् । The वच्यादि class is under (rule 2409) and the ग्रह्यादि class is under (rule 2412). Thus यज् यज् णल्=य याज् अ=इ याज् अ=इयाज ।

मित— । लिटि अभ्यासस्य+उभयेषाम्—इतिच्छेदः । 'वचिस्वपियजादीनां किति' (६।१।१५) इति, 'ग्रहिज्याविव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनाम् ङिति च' (६।१।१६) इति च पूर्वसूत्रद्वयम् । तेन उभयेषामित्यनेन एते एव गृह्यन्ते तदाह—वच्यादीनां ग्रह्यादीनाञ्चेति । 'ष्यङः सम्प्रसारणम्—' (६।१।१३) इत्यतः सम्प्रसारणम् इत्यनुवर्त्तते, तदाह—सम्प्रसारणं स्यादिति । वचिस्वपि इत्यत्र यज (१००२) इत्यारभ्य टु ओश्वि (१०१०) गतिवृद्ध्योः इत्यन्ता नव यजादयः । तथाचोक्तम्—

"यजिर्वपिर्वहिश्चैव वसिर्वेञ्व्येञ इत्यपि ।
ह्वेञ् वदिः श्वयतिश्चैव यजाद्याः स्युरिमे नव ॥" इति—

ग्रह्यादय इत्यनेन तु 'ग्रहिज्या—' इति सूत्रोपात्ता नव विवक्षिताः इयाज—इति—य यज णल इति जाते अभ्यासस्य सम्प्रसारणम् । अङ्गस्य—'अत उपधायाः' (२२८२) इति वृद्धिः ।

२४०९ । वचिस्वपियजादीनां किति ॥६।१।१५॥

टी— । वचिस्वप्योर्यजादीनां च सम्प्रसारणं स्यात् किति । पुनःप्रसङ्गविज्ञानात् द्वित्वम् । ईजतुः । ईजुः । इयजिथ—इयष्ठ । ईजे । यष्टा । यक्ष्यति—यक्ष्यते । इज्यात्—यक्षीष्ट । अयाक्षीत्—अयष्ट । डु वप् १००३ बीजसन्ताने । बीजसन्तानं क्षेत्रे विकिरणं गर्भाधानं च । अयं छेदनेऽपि । केशान् वपति । उवाप—ऊपे । वप्ता । उप्यात्—वप्सीष्ट । अवाप्सीत्—अवप्त । वह १००४ प्रापणे । उवाह । उवहिथ—'सहिवहोरोदवर्णस्य—' (२३५७)—उवोढ । ऊहे । वोढा । वक्ष्यति—वक्ष्यते । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवोढ्वम् । वस १००५ निवासे । परस्मैपदी । वसति । उवास ।

The roots वच्, स्वप्, and यज् वप् वह, वस्, वेञ्, व्येञ्, ह्वेञ्, वद and श्वि are *'samprasaranated'* when a कित् affix follows. Now this rule ( 6.1.15 ) being subsequent to 'लिटि धातोरनभ्यासस्य' ( 2177—6.1.8. ), the latter will not apply after the former has taken effect according to 'विप्रतिषेधे पं कार्यम्' for there runs the परिभाषा—'सकृद्गतौ विप्रतिषेधे—यद् बाधितं तद् बाधितमेव' 'when ( two rules ), while they apply ( simultaneonsly ), mutually prohibit each other, that ( rule of the two ) which is once superseded ( by the other ), is superseded altogether ( and cannot therefore apply again after the latter rule has taken effect )'. But the latter ( लिटि धातो: etc. ) must need apply by another परिभाषा—'पुन:प्रसङ्गविज्ञानात् सिद्धम्'—'( occasionally the formation of a particular form ) is accounted for by the fact that ( a preceding rule ) is allowed to apply again ( after it had previously been superseded by a subsequent rule* ). Thus Bhattoji says that the द्वित्व or duplication is to take effect by 'पुन:प्रसङ्गविज्ञान' or reapplication. Thus यज्+अतुस्=इज् अतुस्, then by duplication—इज् इज् अतुस्=इइज् अतुस्=ईजतु: by 'अक: सवर्णे दीर्घ'। Similarly ईजु:। इयजिथ—इयष्ठ—option of इट् by भारद्वाजनियम। थल् is not कित् ( but पित् ), hence the अभ्यास only gets samprasarana and not the verbal base ( अङ्ग ) also ( by the rule 'लिट्यभ्यासस्योभयेषाम्' ( 2408 ) ). In इयष्ठ the process is—इयज् थ=ईयष् थ ( ज is changed to ष by 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां ष:' (294) and थ to ठ by ष्टुना ष्टु: (113 इजिव इजिम।—(क्रादिनियम gives नित्य इट)। इजे। (आत्मने—एश् is कित् hence

like ईजतुः)। यष्टा—by 'व्रश्चभ्रस्ज—' etc. यक्ष्यते—यक्ष्यते—यज्+स्यति= =यष्+स्यति=यक्ष्यति (by 'षढोः कः सि' and षत्व). इज्यात्—because यासुट् is कित् by 'किदाशिषि' hence 'वचिस्वपि—' etc applies. यक्षीष्ट—here 'लिङ्—सिचा—' (2300) does not apply; so no Samprasarana by वचिस्वपि etc; thus यज् सीयुट् सुट् त=यज् सीय् स् त then by 'षत्वकत्वष्टुत्वयलोप' we have यक्षीष्ट=यक्षीष्ट। अयाक्षीत्—अयष्ट the former has the वृद्धि substitute by 'वदव्रज etc' (2267) then षत्वकत्वषत्व as before. The latter does not get वृद्धि owing to the prohibition 'क्ङिति च' for the affix त is कित्। The स of सिच् elides by 'झलो झलि' (2281) then षत्व and ष्टुत्व as before. Similarly अयक्ष्यत्—अयक्ष्यत। डु वप् बीजसन्ताने। बीजसन्तान means to sow seeds in the field and to emit semen to the uterus i. e., keep intercourse. This root also means to cut or shave thus 'केशान्' etc. वपति—वपते। उवाप—ऊपे—by (सम्प्रसारण and वृद्धि) and (सम्प्रसारण द्वित्व and सवर्णदीर्घ)। उप्यात्—like इज्यात्। वप्सीष्ट (आत्मने—easy). प्रण्यवप्सीत्—अवप्त। In the former नि has got णत्व by —'नेर्गदनद etc' and वृद्धि by 'वदव्रज etc'. In the latter, want of गुण and वृद्धि due to कित्त्व of the affix त and the स of सिच् disappears by 'झलो झलि' (2281). वप्स्यति—वप्स्यते etc ease. (N. B.—डु of वप् is to give ड्वित्रिमम् by 'ड्वितः क्त्रिः' and क्त्रेर्मम्नित्यम्). वह to carry, to lead to etc वहति—वहते, उवाह—ऊहे—the former gets सम्प्र.—by 'लिट्यभ्यासस्योभयेषाम्' and वृद्धि by 'अत उपधायाः' (2282); the latter is first sampra-saranated by 'लिट्य--भ्यासस्य—', then it is doubled and then becomes दीर्घ by 'अकः सवर्णे—'। उवहिथ—उवोढ—option of इट् by भारद्वाजनियमः। (want of एत्व and अभ्यासलोप in the former by the prohibi-

tion 'न शसदद—' (2263). उवह्हिथ—वह् इट् थ—ववह् इथ—उवह् इथ—उवोढ़—उवह् थ उवढ् थ उवढ् ध by 'हो ढः'; (324) and 'झषस्तथो:—' (2280) उवढ् ढ by ष्टुना ष्टुः (113)—उवो ०ढ (by 'ढो ढे लोपः' and 'सहिवहो—'); वोढा (लुट् ता by ढत्व, धत्व, ढत्व, ढलोप and ओत्व as before). वक्ष्यति—वक्ष्यते—by ढत्व, कत्व and षत्व as before. अवाक्षीत्—अवोढ—the former = अवह् सिच् ईट् त् = अवाह् स् ईत् = अवाढ् स् ईत् = अवाक् ष ईत् (षढोः कः); the latter = अ वह् सिच् त = अवह् स् त = अवह् ०त (want of गुण and वृद्धि on account of कित्त्व; and सलोप is effected by झलो झलि) = अवढ् ध—अवढ्ढ अव ०ढ(ढोढे—') etc. अवोढाम्—अवक्षताम्—the former = अवह् स् तस् = अवढ् ० ताम् = अवढ् धाम् अवढ्ढाम् = अव०ढाम् = अवोढाम (by सहिवहोरोदवर्णस्य); the latter = अवढ् स् आताम् = अवढ् स् आताम् = अवक् ष आताम् (by षढोः कः and षत्व)। अवाक्षुः—अवक्षत; the former = अवह् स् झि = अवाह् स् जुस् = अवाढ् स् उस् = अवाक् सुस् = अवाक् षुस् (अवाक्षुः); the latter = अवह् स् झ = अवह् स झ = वअक् ष् झ = अवक्ष् अत (by आत्मनेपदेष्वनतः (2258)). Similarly अवाक्षीः (लुङ् सिप्)—अवोढाः (लुङ् थास्); अवोढम् (थस् = तम्) अवक्षाथाम् (आथाम्) and अवोढ (थ = त)—अवोढ्वम् (अवह् ध्वम् = अवढ् ढ्वम् = अव ० ढ्वम् = अवोढ्वम् by 'सहिवहो—') and so on. वस to live अनिट् परस्मै—; because स्वरितेत् roots have ended with वह; cp. 'अथ वहत्यन्ताः स्वरितेतः'। वसति उवास—as उवाप etc. Now to direct षत्व to वस् in अतुस् etc. he puts forth the rule :—

मित—। वचिस्वपीति—वच्स्वपोरिका निर्देशः। "इक्श्तिपौ धातुनिर्देशे" (वार्त्तिक)। ननु तर्हि इकः कित्त्वाद् 'उचिः', 'सुपिः' इत्येव स्यादस्मादेव सूत्रान्नतु 'वचिस्वपिरिति' चेत्। सत्यम्। सौत्रत्वात् सम्प्रसारणाभावः। वचिश्च स्वपिश्च यजादयश्चेति विग्रहः। न तु वच्यादयश्च स्वप्यादयश्चेत्यपि विग्रहीतव्यम्। आदिशब्दस्य यजिनैव योगात्। यदि ह्यादिशब्दस्य वचिस्वपिभ्यामपि अन्वयः स्यात्तर्हि वचिस्व-

भ्योरादादिकत्वात् वचिग्रहणेनैव सिद्धेः, स्वपिग्रहणस्य वैयर्थ्यापत्तिः स्पष्टैव। अत आह—वचिस्वप्योर्यजादीनां चेति। सम्प्रसारणमिति—'ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे—' (६।१।१३) इत्यतस्तदनुवृत्तेरिति भावः। ननु 'लिटि धातोरनभ्यासस्य' (६।१।८) इति द्वित्वविधायकं पूर्व्वसूत्रम्। एतच्च (वचिस्वपि—' ६।१।१५ इति) सम्प्रसारणपरं परसूत्रम्। तेन किमत्र विधेयमिति विप्रतिपत्तौ—'विप्रतिषेधे परं कार्य्यम्' इति सम्प्रसारणमेव प्राक्‌कार्य्यं परत्वात्। तथा सति 'सकृद्गतौ—विप्रतिषेधे यद् बाधितं तद् बाधितमेव' इति परिभाषया द्वित्वविधायकपूर्व्वसूत्रस्य बाधितत्वात् बाधितस्य च पुनरुत्थानासम्भवात्—ईजतुरीजुरित्यादौ कथं द्वित्वं सेत्स्यतीति चेत्? उच्यते। अस्ति हि परिभाषान्तरमपि 'पुनःप्रसङ्गविज्ञानात्—सिद्धम्' इति। 'क्वचित् पदविशेष—सिद्धये बाधितस्यापि (पूर्व्वसूत्रस्य) पुनरुपस्थितिरिष्यते' इति तदर्थः। तेन चात्र सम्प्रसारणात् परं पुनर्द्वित्वप्रसङ्गः। तदेतत् सर्व्वं मनसिकृत्य—समाधत्ते—पुनरिति। एवम् यज अतुस् इति स्थिते अनेन सम्प्रसारणे कृते इज् अतुस् इति। ततो द्वित्वम्—इज् इज् अतुस् इति। पश्चाद् हलादिशेषेण—इ इज् अतुम् इति जाते—'अकः सवर्णे दीर्घः' इति सवर्णदीर्घेण—ईजतुरिति। एवम् ईजुरिति। भारद्वाजनियमात् थल्ययं वेडित्याह—इयजिथ इयष्ठ—इति। अत्र उभयत्र थलः पित्त्वेनाकित्त्वा'ल्लिट्यभ्यासस्योभयेषामि'ति सम्प्रसारणम। इयष्ठ इत्यत्र त्वयं विशेषः—यत् थलो झल्‌वर्णत्वेन व्रश्चादिसूत्रात्(२९४—८।२।३६) जकारस्य षकारः, ष्टुना ष्टुरिति थस्य ष्टुत्वेन ठत्वमिति; ईजे—आत्मनेपदे रूपमिदम्। प्राग्वत्सम्प्रसारणद्वित्वसवर्णदीर्घाः। यष्टा—जस्य व्रश्चादिना षत्वे तप्रत्ययस्यष्टुत्वम्। यक्ष्यति—यक्ष्यते—यज् स्यति इति स्थिते 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' (२९४) इति षः। तस्य 'षढोः कः सि' इति कत्वम्। तत्साहचर्य्यात् परस्य षत्वम्। एवं यक्ष्यते। इज्यात्—यक्षीष्ट। पूर्व्ववत् 'किदाशिषि' इति यासुटः कित्त्वाद् सम्प्रसारणम् यकारस्य अझल्‌त्वाद् व्रश्चादिना—षत्वाभावश्च। परत्र सीयुटः कित्त्वाभावात् सम्प्रसारणाभावः। किञ्च इक्समीपत्वाभावात् 'लिङ्सिचावात्मनेपदेषु—' (२३००) इत्यस्याप्यप्रवृत्तिः। सीयुटः सकारस्य झल्‌त्वात्—व्रश्चादिना जस्य षः। तस्य कः। तत्साहचर्य्यात्—'इणकोः' 'आदेशप्रत्यययोः' इति सीयुट्सुटोः षत्वम्। यलोपः।

तप्रत्ययस्य ष्टुत्वेन टत्वञ्च। अयाक्षीत्—अयष्ट (लुङि रूपद्वयम्)। पूर्व्ववद्वदव्रजेति हलन्तलक्षणा वृद्धिः। षत्वकत्वषत्वानि प्राग्वत्। परत्रापि वृद्धिं विना षत्वादि, झलो झलीति सलोपश्च। लिटि वमयोः—क्रादिनियमात्—ईजिव—ईजिम इति। डुवप्—बीजसन्ताने। विकिरणं निक्षेपः गर्भाधानं निषेकः। तथा च छन्दसि प्रयोगः—'अप्रमत्ता रक्षत तन्तुमेतं मा वः क्षेत्रे परबीजानि वाप्सुः' इति। अयमपि धातुरनिट्। ड्वित्करणम् 'ड्वितः क्त्रिः' क्त्रेर्मम्नित्यम् इति उप्त्रिमम् इत्यर्थम्। वपति छिनत्तीत्यर्थः। वपति—वपते, उवाप—ऊपे। पूर्व्ववत् लिट्यभ्यासस्योभयेषामिति (२४०८) सम्प्रसारणम् 'अत उपधायाः' इति वृद्धिश्च। परत्र वप् एश् इति स्थिते एशः कित्त्वात् सम्प्रसारणे उप् ए इति जाते पुनःप्रसङ्गविज्ञानात् द्वित्वे हलादिशेषे सवर्णदीर्घे च रूपम्। वप्ता—तासेः कित्त्वाभावात् सम्प्रसारणविरहः। उप्यात्—वप्सीष्ट। पूर्व्ववत् किदाशिषीति कित्त्वात् सम्प्रसारणम्। अन्यत्र कित्त्वाभावान्न तथा। प्रण्यवाप्सीत् अवप्त। पूर्व्ववत् 'नेर्गदनदे'ति णत्वम्। वदव्रजेति वृद्धिः। अन्यत्र—तप्रत्ययस्य कित्त्वात् 'क्ङिति चेति' निषेधात् गुणवृद्ध्यभावे 'झलो झलि' इति सिचः सलोपः। वह प्रापणे इति। प्रापणमुपस्थापनम्। वहति—वहते। उवाह—ऊहे। पूर्व्ववत् 'लिट्यभ्यासस्येति' सम्प्रसारणम्—अत उपधाया इति वृद्धिश्च। अन्यत्र 'वचिस्वपीति' सम्प्रसारणे कृते पुनः—प्रसङ्गविज्ञानाद् द्वित्वम्, हलादिः शेषः। सवर्णदीर्घः। उवहिथ—उवोढ। ऊहिषे इति। थलि भारद्वाजनियमादिड्विकल्पः। प्रथमे—लिट्यभ्यासस्येति सम्प्रसारणमिट् च। द्वितीये—वह् थल् इति स्थिते 'लिटि धातोरिति (६।१।८)' द्वित्वे 'लिट्यभ्यासस्येति' वकारस्य सम्प्रसारणत्वे (वह् वह् थ—ववह् थ)—उवह् थ इति जाते 'हो ढः' इतिहस्य ढः। 'झषस्तथोरिति' थस्य धः। धस्य ष्टुत्वेन ढः। 'ढो ढे लोपः' (२३३५) इति पूर्व्वढस्य लोपः—उवढ् थ—उवढ् ध—उवढ् ढ—उव ० ढ। ततः 'सहिवहो रिति' (२३५७) वकारादकारस्य ओत्वे उवोढ इति। 'ढ्रलोपे पूर्व्वस्य दीर्घोऽणः' (६।३।१११) इतीमं बाधित्वा 'सहिवहोरित्यस्य' (६।३।११२) प्रवृत्तिरिति ज्ञेयम्। अन्यथा उवाढ इति स्यात्। तृतीये—तु सम्प्रसारणद्वित्वसवर्णदीर्घेडागमाः पूर्व्ववत् इति बोध्यम्। वोढा—ढत्वधत्वढत्वढलोपेभ्यः परमोत्वमिति प्रक्रिया। वक्ष्यति—

वक्ष्यते इति। हस्य ढः। तस्य 'षढोः कः—' इति कः। ततः स्यतेः षत्वम्। अवाक्षीत्—आवोढ इति। पूर्व्ववत् वदव्रजेति वृद्धिः। ततो ढत्वकत्वषत्वानि। अन्यत्र अवह् सिच् त इति स्थिते 'तस्य किल्वेन गुणवृद्ध्यभावात्--अवह् स् त इति जाते झलो झलीति सलोपः। एवम् अवह् त इत्यत्र 'हो ढः' इति हस्य ढः। 'झषस्तथोः' इति तप्रत्ययस्य धः। तस्य ष्टुना ष्टुरितिढत्वम्। ततः पूर्व्वढस्य 'ढोढेलोप' इति लोपः। 'सहिवहोरोदवर्णस्य' इति अवोढ़ (अवह्त—अवढ् ध—अवढ् ढ अव ० ढ—अवोढ) इति। अवोढ ड़ाम्—अवक्षताम् इति। पूर्व्ववत् तसस्तामादेशो ढत्वधत्वढत्वढलोपत्वञ्चेति प्राग्वत्। परत्र—अवह् सिच् आताम् इति स्थिते अवह् स आताम् इति ढत्वकत्वषत्वानि। अवाक्षुः—अवक्षत इति। पूर्व्ववत् अवह् सिच् झि इति स्थिते हलन्तलक्षणा वृद्धिः झेर्जुसादेशश्च—अवाह् स जुस् इति। ततः अवाह् स् उस्—अवाढ् स् उस्—अवाक् ष् उस्—अवाक्ष् उस् इति। परत्र—अवह् सिच् झ इति स्थिते पूर्व्वेण अवक्ष् इति भवति। ततः 'आत्मनेपदेष्वनतः (२१५८) इति झस्य 'अत'—भावः। अवक्ष् अत—अवक्षत इति। एवम् अवाक्षीः—अवोढाः अवोढ़—अवक्षाताम्। अवोढ—अवोढ्वम् इत्यादि। इति वहत्यन्ताः स्वरितेतो गताः। वचिस्वप्योस्तु ऊचुः ऊचतुः—सुषुपतुः सुषुपुरित्यादि वक्ष्यते। अथ परस्मैपदी वस निवासे। अनिट्। उवास इति। लिटभ्यासस्येति सम्प्रसारणम्। अस्य षत्वार्थमाह—

२४१०। शासिवसिघसीनाञ्च॥८।३।६०॥

टी—। इण्कुभ्यां परस्यैषां सस्य षः स्यात्। ऊषतुः। ऊषुः। उवसिथ--उवस्थ। वस्ता। 'सः स्यार्द्धधातुके' (२३४२) वत्स्यति। उष्यात्। अवात्सीत्। अवात्ताम्। वेञ् १००६ तन्तुसन्ताने। वयति—वयते।

The स of शास्, वस् and घस् turns into ष् when it (स्) comes after vowels except अ and after ह्यवरल and after कवर्ग। Thus

ऊषतुः—ऊषुः etc (उउस् अतुस् + ऊष्अतुस् ऊष तुः)। (Thus शासि = शिष्यात्, जक्षतुः जक्षुरित्यादि)। उवसिथ—उवस्थ option of इट् by भारद्वाजनियम। In both the cases सम्प्रसारण takes effect by 'लिड्यभ्यासस्य—'। In the former case थलि च सेटि does not apply owing to the prohibition न शसददवादिगुणानाम् (2263)। वस्ता—for ता is not कित् therefore no सम्प्रसारण। 'सः—'etc easy. वत्स्यति—वत्स्यते। उष्यात्—षत्व by this rule, सम्प्र—for कित्त्व of यासुट्। अवात्सीत्—वृद्धि by 'वदव्रज—' and त replaces स of वस् by 'सः स्या—' (2342). अवात्ताम् (तस् = ताम्)। वेञ् to weave. अनिट्; being ञित्, it is उभयपदी। Thus वयति—वयते with लघूपधगुण—

मित—। 'अपदान्तस्य मूर्धन्यः' (८।३।५५) 'सहेः साडः सः' (८।३।५६), 'इण्कोः' (८।३।५७) इति पूर्व्वसूत्राणि। तेभ्यः—मूर्धन्यः, सः (सस्य), इन्कोः इति चानुवर्त्तते, तदाह—इण्कुभ्यामित्यादि। इण् इति अइउण् इत्यवस्य इकारस्य—लण्—सूत्रस्थ—णकारेण प्रत्याहारः। 'अणुदित्सवर्णस्येत्येतद्‌ विहाय पूर्व्वेणाण्‌ग्रहणं...परेणेण् ग्रहणमिति' भाष्योक्तेः। ऊषतुरित्यादि वस् अतुस् इति स्थिते। वचिस्वपीतिते—सम्प्रसारणं ततो द्वित्वे उस् उस् अतुस् इति ततो हलादिशेष सवर्णदीर्घ—षत्वानि। एवमूषुरित्यादि। शासेस्तु शिष्यात्—शिष्टः इत्यादि। घसेस्तु—जक्षतुः—जक्षुरित्यादि। उवसिथ—उवस्थ = भारद्वाजनियमात् इड् विकल्पः। लिड्यभ्यासस्येति सम्प्रसारणम्। वस्ता = कित्त्वाभावात् सम्प्रसारणाभावः। सः इति—एवम् वस् स्यति इति स्थिते वत्स्यति इत्यादि सुगमम्। उष्यात्—कित्। अवात्सीत् इति—हलन्तलक्षणा वृद्धिः सस्यतत्वम्। अन्यत् प्राग्वत्। अवात्ताम् इति—अवस् सिच् तस् इति स्थिते वृद्धौ अवास् स् ताम् इति जाते—झलो झलीति सलोपे—अवास् ताम् इति। ततः 'सः सि आर्द्धधातुके' (२३५७) इति अवात्ताम्। एवम् अवात्सुरित्यादि। तन्तुसन्तानं सूत्रसमवायविशेषः। वेञः ञित्त्वादुभयपदित्वम्। अनिट। लघूपधगुणे वयति—वयते। अथास्य लिटि—'वयि' इत्यादेशः स्यादित्याह—

२४११ । वेञो वयिः ॥ २।४।४१॥

दी—। वा स्याल्लिटि । इकार उच्चारणार्थः । उवाय ।

The root वेञ् is optionally replaced by वयि or वय् in लिट् । The इकार in वयि is for the sake of pronunciation. Thus वेञ् + णल् = वय् णल् = वयवय्णल् = वय् वद् अ = उय् वाय् अ = ( उ by 'लिटाभ्यासस्य —'(2408) ) = उवाय ।

मित—। 'लिटान्यतरस्याम्' ( २।४।४० ) इत्यतोऽन्यतरस्यामित्यनुवर्त्तते 'लिटि' इति च । तत् शेषपूरणेन व्याचष्टे—वा स्याल्लिटीति = 'वेञो वयि वा लिटीत्यर्थः' । इकार इति । वयि इत्यस्येति भावः । तेन 'वय' इत्येवादेशः । एवं वेञ् + णल इति स्थिते अनेकाल्त्वात् सर्वादेशे—वय् णल् इति जाते द्वित्वे 'अत उपधाया' इति अकारस्य वृद्धौ—वय् वाय् अ इति भवति । ततः 'लिटाभ्यासस्येति' सम्प्रसारणं हलादिः शेषः—उय् वाय् अ—उवाय् अ = उवाय इति ( अत्र विषयसप्तम्याश्रयणात् द्वित्वसिद्धिरिति 'दयतेर्दिगि लिटि' इत्यत्र भाष्यकैयटस्वरसाद् बोध्यम् ) ।

२४१२ । ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छति—भृज्जतीनां ङिति च ॥६।१।१६॥

दी—। एषां किति ङिति च सम्प्रसारणं स्यात् । यकारस्य प्राप्ते—

The सम्प्रसारण is directed to the roots ग्रह्, ज्या, वयि ( वय् ), व्यधि ( व्यध् ), वष्टि ( वश् ), विचति ( व्यच् ), वृश्चति ( ओव्रश्—व्रश् ), प्रच्छ् and भ्रस्ज् when a कित् or an ङित् affix follows. Thus सम्प्रसारण being due to यकार ( also of वय् ) we look forward—

मित—। 'ष्यङः सम्प्रसारणम—' (६।१।१३) इत्यतः सम्प्रसारणम् इत्यनुवर्त्तते । "वचिस्वपियजादीनां किति' ( ६।१।१५ ) इत्यतः कितीति च । तदाह—एषां

किति ङितिचेत्यादि । यकारस्येति—वयो यकारस्येत्यर्थः । 'न सम्प्रसारणे सम्प्रसारणम्' ( ३६३—६।१।३७ ) इति तु सम्प्रसारणे परतः पूर्व्वस्य सम्प्रसारणनिषेधपरम् । तेन—परवर्त्तिनो यकारस्य—सम्प्रसारणं प्राप्नोत्येव । अतस्तस्य निषेधार्थं—सूत्रमवतारितम् ( ग्रहिज्यत्यादीनां—ग्रज्ञाति (आ-ङित्) = गृहीतः । जीनः इत्यादि । ङिति वयेरुदाहरणं नास्ति । व्यधेर्विद्धः । वश्चेरुपन्तिः—अन्ये तु सूत्रेणैवोदाहृताः ) । स्थानिवद्भावाद् वेञ्ग्रहणेनैव वयिग्रहणे सिद्धे वयिग्रहणं व्यर्थमिति कृत्वा भाष्ये वयिग्रहणं प्रत्याख्यातम् । एतच्च तत्सूत्रभाष्यप्रदीपे स्पष्टमिति तत्रैव द्रष्टव्यमिति ।

## २४१३ । लिटि वयो यः ॥६।१।३८॥

**टी—। वयो यस्य सम्प्रसारणं न स्याल्लिटि । ऊयतुः । ऊयुः ।**

In लिट्, सम्प्रसारण is not directed to the य of वय् । Thus वय् + अतुस् = उय् अतुस् ( by 'वचिस्वपि—' ) = उय् उय् अतुस् ( by द्वित्व as in ईजतुः ) = उउय् अतुस् = ऊयतुः, similarly ऊयुः ।

मित—। 'न संप्रसारणेसंप्रसारणम्—' (६।१।३७) इत्यतो—नेति सम्प्रसारणमिति चानुवर्त्तते । वयः इत्यवयवषष्ठी यः इति तु स्थानषष्ठी । तदाह—वयो यस्येत्यादि । ऊयतुः ऊयुरिति—वय् अतुस् इति स्थिते 'वचिस्वपीति' (अतुसः कित्त्वात्) सम्प्रसारणे कृते—उय अतुस् इति जाते पुनःप्रसङ्गविज्ञानात्—इजतुरित्रेव द्वित्वम् हलादिशेषः सवर्णदीर्घश्च । एवम् ऊयुरिति ।

## २४१४ । वश्चान्यतरस्यां किति ॥६।१।३९॥

**टी—। वयो यस्य वो वा स्यात् किति लिटि । ऊवतुः । ऊवुः । वयेस्तासावभावात्—थलि नित्यम् इट् । उवयिथ । स्थानिवद्भावेन ञित्त्वात्तङ् । ऊये । ऊवे । वयादेशाभावे—**

In लिट्, the य् of वय् is optionally replaced by , when a कित् affix follows. Thus ऊवतुः ऊवुः easy. It has been remarked

that 'अजन्तोऽकारवान् वा यः तास्यनिट् थलि वेडयम्' under ऋतो भारद्वाजस्य (2296), hence the author now says that वय् having no form in तास् etc—for it is used in लिट् only. Thus the above नियम does not apply and consequently it will have इट् compulsorily in थल् and give उवयिथ (उवय इथ—सम्प—by 'वचिस्वपि—')। वेञ् is स्थानी and वय is the आदेश or substitute. Hence by 'स्थानिवदादेश—' (49), वय is to be treated like the retiring word ( स्थानी )—वेञ्, which is ञित्। Thus वय् also is ञित्—hence उभयपदी, so in the आत्मनेपदी it will give ऊये—( वय् एश् = उय् ए = उय उय् = ए—उ उय् ए → ऊये ) and ऊवे ( य् being replaced by व ). But when there is no वयादेश ( by वेञो वयिः 2411) we have—

मित—। वः + च + अन्यतरस्याम् + किति इतिच्छेदः। 'लिटि वयो यः' इति पूर्व्वमनुवर्त्तते। तदाह—वयो यस्य वो वेति। किति इति लिटि इत्यस्य विशेषणं तदाह—किति लिटि इति। ऊवतुरित्यादि स्पष्टम्; ऊयतुरित्यादेर्यकारस्थाने वकारमात्रस्य पाठात्। वयेस्तासावभावादिति—वेञादेशस्य वयेस्तासिविभक्तौ प्रयोगाभावादित्यर्थः। 'वेञो वयिः' ( २४११ ) इति लिट्येवास्य प्रवृत्तेः। ततश्च 'अजन्तोऽकार वान् वा यस्तास्यनिट्थलि वेडयमिति नियमस्यासप्रसक्तिः। अतः क्रादिनियमान्नित्यमिट्। तदुदाहरति उवयिथ—इति थलः पित्त्वेन कित्त्वाभावात्—वयेर्यकारस्य वकारादेशो न। वय् थल इति स्थिते—वय् वय् इट् थल्—उय् वय् इ थ—उवय इथ उवयिथ। वचिस्वपीति सम्प्रसारणम्। स्थानिवद्भावेनेति। वेञःस्थाने हि वयिः आदिश्यते। तेन वेञः स्थानी वयिरादेशः। वेञ वयिञिद् भवति। अतो वयिरपि 'स्थानिवदादेशः—' ( ४९ ) इति स्थानिवद् भावेन ञिद् भवति। ततश्च स्थानिनीव ञित्कार्य्यं लभते। ञित्कार्य्यञ्च 'स्वरित—' इत्युभयपदित्वविधानम्। परस्मैपदे रूपं दर्शितम्। इदानीं तङि—दर्शयति—ऊवे इति वय ए इति स्थिते एशः कित्त्वात् —यकारस्य वकारे कृते वव् ए—इति। ततो 'वचिस्वपीति'—सम्प्रसारणे कृते उव्

ए इति पुनःप्रसङ्गविज्ञानात्—द्वित्वम् उव् उव् ए इति हलादिः—इति उउव् ए सवर्ण—दीर्घः—उय् उय् ए—उ उ य् ए—ऊये इति। वयादेशस्य वैकल्पिकत्वादाह—वयादेशाभावे इति—

२४१५। वेञः ॥६।१।४०॥

दी—। वेञो न सम्प्रसारणं स्याल्लिटि। ववौ। ववतुः। ववुः। वविथ—ववाथ। ववे। वाता। ऊयात्। वासीष्ट। अवासीत्। व्येञ् १००७ संवरणे। व्ययति—व्ययते।

The root वेञ् does not get सम्प्रसारण in लिट्। Thus वेञ् +णल्=वे णल्=वा णल् (by 'आदेचः—' (2370))=वा वा औ (by द्वित्व, and 'आत औ णलः')=ववौ (by 'ह्रस्वः' and वृद्धिरेचि')। वेञ+अतुस्=वा वा अतुस् व व् अतुस्—(by 'ह्रस्व' and 'आतो लोप इटि च' (2372))=ववतुः। Similarly ववुः। वविथ—ववाथ—option of इट् (because it is अनिट् in तासि)। वविथ—वेञ् इट् थल्—वा इथ वा वा इथ—व वा इथ—ववंइथ—('आतो—')। ववाथ—व वा थ (here 'आतो लोप' does not apply for थल् is neither कित् nor is preceded by इट्)। ववे—वेञ्+ए—वा ए—वा वा ए—व वा ए— व व् ए। वाता—वेञ् +ता—वा+ता (आदेच—2370). ऊयात्—वेञ्+यासुट्+सुट्+तिप्=वा यास् स् त ('लिङः सलोपः—')=वा यात्=उयात् (by वचिस्वपि—' (2409) and 'यम्प्रसारणाच्च' (330))=ऊयात् (by अकृत्सार्वधातुकयोः (2298); वासीष्ट—वेञ् सीयुट् सुट् त =वा सीय् स् त=वा सी ० ष् ट (यलोप by 'लोपो व्योर्वलि'—(873) and षत्वष्टुत्व as before)=वासीष्ट। अवासीत्——वेञ्—च्लि+तिप्=अ वेञ् सिच् तिप्= अ वा सिच् ईट् त् (by आदेचः—)=अ वा सक् इट् सिच् ईत् (by 'यमरमनमातां सक् च' (2377))=अवास् इस् ईत्=अवास्-इ ० ईत् (elision of स् of

सिच् by इट ईटि (2266) = अवास् ईत्। Similarly अवासिष्टाम्—अवासिषुः etc. In the आत्मनेपद—अवास्त अवासाताम् etc. व्येञ्—ञित्—उभयपदी—अनिट् to conceal etc. व्ययति—व्ययते—by लघूपधगुण।

मित—। 'न संप्रसारणे संप्रसारणम्' (६।१।३७) इत्यतो नेति, संप्रसारणमिति चानुवर्त्तते। 'लिटि वयो यः' (६।१।३८) इत्यतो—लिटि इति। यद्यपि 'वश्चान्यतरस्यां किति' इत्यस्ति अव्यवहितं पूर्व्वसूत्रं, तथापि तस्मात्—किति इति नानुवर्त्तते व्याख्यानात्—अतएव निष्ठायां उतम् उतवान् इत्यादि सिद्धम्। किञ्च तथा सति णलः अकित्त्वात् तत्र संप्रसारं स्यादित्येतत् सर्व्वं विभाव्य फलितमाह—वेञो नेति। ववौ—'आदेच' इति आत्वे कृते द्वित्वे अभ्यासह्रस्वे 'आतो लोपः'—इत्यालोपे—'आत औ णल' इत्यौत्वे 'वृद्धिरेची'ति वृद्धिः। ववतुः—आत्वद्वित्वह्रस्वालोपाः। एवं ववुः। ववियथ—ववाथ, भारद्वाजनियमात्थलि इट् वा। उभयत्रैव आत्वम्, द्वित्वम्, 'ह्रस्वः' इत्यभ्यासस्यह्रस्वश्च। पूर्व्वत्र इटः सद्भावात्—'आतो लोपः—' इत्यस्य आकारलोपः। परत्र तु किङ्‌दिटोरभावात् आतो लोपो न। ववे—आत्वम्, द्वित्वम्, अभ्यासह्रस्वः आतो लोपश्च। वाता—लुट् आत्वम्। ऊयात्—वे+यासुट्+सुट्+तिप्—वे यास् स्‌त्—वा यात् ('लिङः सलोप' इति सकारद्वयस्यापि निवृत्तिः 'आदेचः' (२३७०) इत्यात्वञ्च) उयात् (वचिस्वपीति सम्प्रसारणम्); ऊयात्—(अकृत्सार्व्वधातुकयोरिति दीर्घः)। वासीष्ट—आदेच इत्यत्वेम्। अन्यत् प्राग्वत्। अवासीत्—अवेञ् सिच् ईट तिप् इति स्थिते 'आदेच' इत्यात्वे—अवा सिच् ईट त् इति जाते—'यमरमनमातां सक् चे'ति सगागम इट च—अ वा सक् इट सिच् ईट् त्—अवास् इस् ईत्—अवास् इ ० ईत् (इट ईटीति सिचः सलोपः) अवास् ईत् इति। व्यञ् (व्यं) अयमप्यनिट्। ञित्वादुभयपदी। व्ययति—व्ययते—अस्य लिटि 'आदेच' इत्यात्वं नेत्याह—

## २४१६। न व्यो लिटि ॥६।१।४६॥

दी—। व्येञ आत्वं न स्याल्लिटि। वृद्धिः। परमपि

हलादिशेषं बाधित्वा यस्य सम्प्रसारणम्। 'उभयेषां' ग्रहण—सामर्थ्यात्। अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे किं तेन। विव्याय। विव्यतुः। विव्युः। 'इडत्त्यर्त्ति—' (२३८४) इति नित्यम् इट्। विव्ययिथ। विव्याय—विव्यय। विव्ये। व्याता। वीयात्। व्यासीष्ट। अव्यासीत्—अव्यास्त। ह्वेञ्. १००८ स्पर्धायां—शब्दे च। ह्वयति—ह्वयते।

The root व्येञ् does not get आ for its ए in लिट्। The अङ्ग (verbal base) will get the वृद्धि substitute (by 'अचो ञ्णिति' (254)). Thus व्येञ्+णल् (=व्ये णल्)=व्यै णल्=व्यै व्यै अ। Now though the rule 'हलादिः शेषः' (2179—7. 4. 60) is subsequent to 'लिड्यभ्यासस्योभयेषाम्' (2408—6. 1. 17), yet the latter (6. 1. 17) bars the former (7. 4 60) and thus effects the सम्प्रसारण of the यकार (of the अभ्यास)। For, what is the force or importance of 'उभयेषाम्' in the rule 'लिड्यभ्यासस्योभयेषाम्'? The force or importance of it is this:—The rule 'लिड्यभ्यासस्योभयेषाम्' follows upon the rules 'वचिस्वपि—यजादीनां किति' (8. 1. 15) and 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छति-भृज्जतीनां ङिति च' (6. 1. 16). Thus had Panini said 'लिट्यभ्यासस्य'—only, we could have inferred from the consecutive position of the above rules that the संप्रसारण of the अभ्यास of वचि etc and ग्रहि etc is meant. Hence the addition of 'उभयेषाम् to 'लिट्यभ्यासस्य' (again) suggests that the 'सम्प्रसारण' of the अभ्यास will have precedence to any other operation viz.—हलादिशेषबाधे। Thus व्यै व्यै अ (=व् य् ऐ+व्यै अ= व् इ ऐ व्यै य्)=वि व्यै अ (by

'न संप्रसारणे संप्रसारणम्' ( 363 ) and 'सम्प्रसारणाच्च' ( 330 ) ) = विव्याय् अ ( by 'एचोऽयवायाव:' ) = विव्याय । [ N. B.—The rules 'न संप्रसारणे संप्रसारणम्' ( 363 ) and 'संप्रसारणाच्च' ( 330 ) should be learnt by heart to understand सम्प्रसारण well.]—विव्यतु: etc. व्येञ् + अतुस् = व्ये व्ये अतुस् = वि वि अतुस् ( by 'लिट्यभ्यासस्य—' and 'वचिस्वपि—' ( 2408—09 ) ) विव्यतु: ( by इको यणचि ( 47 ) ) । Similarly—विव्युस्—विव्यु: । In थल् the भारद्वाजनियम does not apply ; for there is a special arrangement in इडत्त्यर्तिव्ययतीनाम् ( 2384 ). Thus the इट् here is not optional but compulsory. विव्ययिथ (व्येञ् इट् थल्—व्ये व्ये इथ—वि व्ये इथ ( थल् is पित् and not कित् hence no sampra—of the verbal base (अङ्ग by वचिस्वपि—') = वि व्यय् इथ (by (एचोऽय—) विव्ययिथ ) । विव्याय—विव्यय (option of वृद्धि by 'णलुत्तमो वा') । विव्ये—(आत्मनेपद form )—वेञ् + ए = व्ये व्ये ए = विव्ये ए = वि वि ए = विव्ये ( by 'लिट्यभ्यासस्य—', 'वचिस्वपि—' and एचोऽय्—' ). व्याता—व्येञ् + लुट् तास् = व्या ता by आदेच—2370—( Note in this counection that the prohibition of आत्व is in लिट only and not in लुट् etc.) वीयात्—व्यासीष्ट—the former is the result of व्येञ् + यात् = वि + यात् (here there is no need of आत्व for सम्प्रसारण being नित्य must take effect whether change व्ये to व्या or not ) = वीयात्—( by अकृत्सार्व—(2298)) ; the latter results from व्येञ् सीयुट सुट्—त (आत्मने—) व्या सीय् स् त (here आत्मने—लिङ् not being कित्, सम्प्र.—does not come in hence आत्व by 'आदेच—' ) । अव्यासीत्—अव्यास्त—अव्येञ् सिच् तिप् = अव्या सिच् इट् त् = अव्यासक् इट्स् ईत् = अव्या स् इ 0 ईत्—अव्यासीत्—(dy आदेच—' यमरम—' and 'इट:—'; (अव्येञ्—सिच् त) त is not अपृक्त hence ई does not come) = अव्या स् त = अव्यास्त ( सक्, and इट

do not come in the case of आत्मने, ( cp—23'/7) nor comes षत्व— for the स follows upon an आकारand hence no ष्टुत्व of त )— ह्वेञ्—to challenge and to make sound—that is to call. It is also अनिट् and being ञित्—उभयपदी :—

मित—। 'आदेच उपदेशेऽशिति' ( २३७०—६।१।४५ ) इति अव्यवहितं पूर्व्वसूत्रम् । तत आदित्यनुवर्त्तते । 'न व्यो' इत्यत्र 'व्य' इत्यस्य लुप्तात्वस्य षष्ठ्या निर्द्देशः। तदाह व्येञ आत्वं नेति। वृद्धिरिति। व्येञ् णल इति स्थिते 'अचो ञ्णिति' ( २५४ ) इति वृद्धिरित्यर्थः। एवं व्यै णल् इति स्थितम्। ततो द्वित्वे व्यै व्यै अ इति जाते परत्वात् 'हलादिः शेषः' ( ७।४।६० ) इति प्राप्ते 'लिट्यभ्यासस्य—' ( ६।१।१७ ) इत्यस्य चानेन बाधे प्राप्ते आह—परमपीति। यद्यपि लिट्यभ्याससूत्रापेक्षया ( ६।१।१७ ) हलादिः—सूत्रम् ( ७।४।६० ) परं तथाप्यत्र पूर्व्वेणैव परस्य बाधः। ततश्च यकारस्य सम्प्रसारणम्। नन्वेवंविधविधाने किं मानमिति चेदत्राह। —उभयेषां ग्रहणसामर्थ्यादिति। अयं भावः—'वचिस्वपियजादीनां किति' (६।१।१५), 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' (३।१।१६) 'लिट्यभ्यासस्योभयेषाम्' (६।१।१७) इति हि प्राणिनेः सूत्रक्रमः। तत्र 'लिट्यभ्यासस्य—' इत्येतावदुक्तेऽपि अनुवृत्त्या 'वच्यादीनां ग्रह्यादीनां ( उभयेषामेव ) अभ्यासस्य लिटि संप्रसारणं स्यादिति' लभ्यत एव। ततः पुनरुभयेषाम्' ग्रहणस्य किं फलम्? नियम एव तत्फलमित्याह। कश्चासौ नियमः? एषामभ्यासस्य सम्प्रसारणमेवस्यात् नान्यद्दिर्त्वेवरूपः। तेन हलादिशेषरूपस्य कार्य्यान्तरस्य निवृत्तिः। न च 'सांप्रसारणं तदाश्रयञ्च कार्य्यं बलवदि'ति न्यायादुभयेषां ग्रहणं व्यर्थमिति वाच्यम्। तस्य (न्यायस्य) भाष्ये प्रत्याख्यातत्वादिति शब्देन्दुशेखरे स्पष्टमिति दिक्। एवञ्च व्यै व्यै णल इति स्थिते ( य ऐ इत्यभ्यासस्य सम्प्रसारणे कृते—व् इ ऐ व्यै अ इति जाते 'न संप्रसारणे संप्रसारणम्' ( २६३ ) इति वकारस्य सम्प्रसारणनिषेधः। ततः 'सम्प्रसारणाच्च' ( ३३० ) इति इकारैकारयोः इकाररूपः पूर्व्वरूपैकादेशः। एवम् विव्यै अ इति स्थिते 'एचोऽयवायावः' इत्यायादेशे—विव्याय इति। विव्यतुरिति—व्ये व्ये

अतुस् इति स्थिते अतुस कित्त्वात् वचिस्वपीति अङ्गस्य ( द्वितीय 'व्यं' इत्यस्य ) ) संप्रसारणम्। अभ्यासस्य तु लिट्यभ्यासस्येति पूर्व्ववत् संप्रसारणम् । एवम् वि वि अतुस् इति ततो यण विव्यतुरिति। एवं विव्यु रित्यत्र । अथ भारद्वाजनियमात् थलि इड्—विकल्पे प्राप्ते आह—'इडत्यर्त्ति—'(२३८४) इति । विव्ययिथ = अभ्यासस्य प्राग्वत् सम्प्र.—अङ्गस्य सं प्र.—न । थल: पित्त्वेनाकित्त्वात् वचिस्वपीत्यस्याप्रवृत्तेः । ततो वि व्यें इथ विव्यय् इथ विव्ययिथ इत्ययादेशे रूपम् । 'णलुत्तमो वे'ति णिल-विकल्पाद् वृद्धिविकल्पं दर्शयति—विव्याय—विव्यय इति । उभयत्रैव लिट्यभ्यासस्येति संप्रसारणम् । एवमेकत्र विव्यें अ इति अन्यत्र तु विव्यें अ इति तत आययादेशौ । विव्ये इति । व्यें अ+ए इति स्थिते द्वित्वे व्यें व्यें ए इति जाते पूर्व्ववत् पूर्व्वोत्तर—खण्डयोः संप्रसारणं यणादेशश्च । व्याता इति । आत्वस्य लिट्येव निषेधो नान्यत्र । तेन लुटि 'आदेच'—इत्यात्वम् । वीयात्—व्यासीष्ट इति । पूर्व्वत्र व्यें+यासुट् सुटतिप—व्यें यात्—व्या यात् (आत्वे)—वियात्—( संप्र, किदाशिषीत्युक्तत्वात् )—वीयात् (अकृत्-सार्व्व—( २२९८ ) इति दीर्घः )। उत्तरत्र—व्यें सीयुट् सु ट् त—व्ये सीष्ट इति स्थिते आत्वम् व्यासीष्ट इति। अव्यासीत्—अव्यास्त—पूर्व्वत्र अव्यें सिच् तिप् अव्यें स् ईत् इति स्थिते आत्वे 'यमरमनमातां सक् च' (२२७७) इति सकि इटि च अव्या स् इ स् ईत् इति स्थिते 'इटः ईटि' इति सिचः सलोपः—अव्यास् इ ० ईत्=आव्यास् इत् = अव्यासीत् । उत्तरत्र अव्यें सिच् त इति स्थिते आत्वे अव्यास् त आकारात्-परत्वेन षत्वाभाव:—अव्यास्त इति ॥ ह्वेञ् इति ञित्—अनिट । स्पर्धा—युद्धार्थमा-कारणा, शब्दस्तु सामान्यत आकारणमिति बोध्यम् । ह्वयति—ह्वयते इति । ञित्वा-दुभयपदी । वलिभकिति अभ्यासस्यैव संप्रसारणे प्राप्ते आह ।

२४१७ । अभ्यस्तस्य च ॥६।१।३३॥

दी—। अभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं स्यात् । ततो द्वित्वम् । जुहाव । जुहुवतुः । जुहुवुः । जुहोथ—जुहविथ । जुहुवे । ह्वाता । हूयात्—ह्वासीष्ट ।

The root ह्वेञ् gets सम्प्रसारण ere it is to be duplicated ( and not after it has been so done ). Thus first comes सम्प्र.—and द्वित्व comes later on. Hence ह्वे+णल्=ह्वा णल् by 'आदेच'—(2370) =हु+णल् by this=हु हुअ by duplication=जु हु अ by 'कुहोश्चुः' (2245)=जुहौ अ by 'अचोञ्णिति' (254)=जु हाव् अ by 'एचोऽयवायावः' ( 61 )=जुहाव । ( Observe the term 'अभ्यस्तीभविष्यतः' 'to be doubled later on'. Without this statement, we should have, by the rule 'उभे अभ्यस्तम्—' ( 426—6. 1. 5. ), the duplication first ( because अभ्यस्त necessitates duplication ), after the आत्व by आदेचः ( 2370 ), in the form of ह्वा ह्वा अ । Then by this rule—the second ह्व takes सम्प्र. first, for it is nearer to the affix. But after it has been samprasaranated, the prohibition 'न संप्रसारणे संप्रसारणम्' ( 363 ) wiil bar the sampra.—of the first ह्व. Thus the form will be जह्वाव by हलादि—शेषः and ह्रस्व and not जुहाव which is sanctioned by usage. Hence Bhattoji has explained the term 'अभ्यस्तस्य' as 'अभ्यस्तीभविष्यतः' and not as 'अभ्यस्तीभूतस्य' which is more natural than the former. Nor can you argue that if द्वित्व is barred by 'अभ्यस्तस्य च', it (द्वित्व) will no more appear here by the परिभाषा—'सकृद्गतौ विप्रतिषेधे—यद्बाधितं तद्बाधितमेव' ( explained under—2409—and also ante ); for द्वित्व must operate again by the counter परिभाषा 'पुनःप्रसङ्गविज्ञानात् सिद्धम्' ( expld. under 2409 ) जुहुवतुः—हु हु अतुस्—जुहुवङ् अतुस्—जुहुव् अतुस्. ( for the process shown by Nagesha—See the मितं—below. ); similarly—जुहुवुः with उवङ्—by 'अचिश्नु—( 271 ). जुहोथ—जुहविथ —option of इट by भारद्वाजनियम—हु हु अ—जुहोथ ( गुण ) । जुहो [illegible]

जुहव् अथ—जुहविथ by अव्) जुहुवे—एश् is कित्—hence neither गुण nor वृद्धि comes but उवङ् does. ह्वाता—ह्वेञ्+तास्—ह्वा+ता by 'आदेच:—' (2370). ह्वयात्—ह्वासीष्ट—like वीयात्—व्यासीष्ट—(ante) (ह्वे+यात्—ह्वा+यात्—हुयात्—ह्वयात्) and (ह्वे+सीष्ट—ह्वासीष्ट)।

मित—। 'ह्वः संप्रसारणमभ्यस्तस्य च' इति मूलतः सूत्रमासीत्। तत्र भाष्यकारै र्योगविभागेन व्याख्यातम्। अतस्तद्व्याख्यानमिहाप्यनुसृतम्। 'यथोत्तरं मुनीनां प्रामाण्यम्' इति स्मरणात्। 'अभ्यस्तस्य च' इत्यत्र 'अभ्यस्तस्य' इति पदस्य यद्यपि 'कृतद्वित्वस्य' इत्येवापाततोऽर्थः 'उभेऽभ्यस्तम्' (४२६—६।१।५) इति सूत्रात्, तथापि इष्टानुरोधाद् व्याचष्टे—अभ्यस्तीभविष्यत इति। इष्टञ्चात्र जुहावेत्यादिपदसाधनमेव! तथाहि—ह्वे णल् इति स्थिते आत्वे अभ्यस्तसंज्ञार्थं द्वित्वेकृते च ह्वा ह्वा णल इति। अनेन सूत्रेणाङ्गस्य—सम्प्रसारणे कृते 'न संप्रसारणे संप्रसारणम्' (३६२) इत्यभ्यासस्य संप्रसारणं न भवति। ततश्च हलादिशेषे अभ्यासकृत्ते अङ्गस्य वृद्धौ—जहाव इत्येव भवति न जुहाव इति। अत उक्तम्—अभ्यस्तीभविष्यत इति, न तु अभ्यस्तीभूतस्य इति। ननु यदि अभ्यस्तीभविष्यतः ह्वयतेः प्राक् सम्प्रसारणं क्रियते तर्हि द्वित्वस्य—बाधितत्वात् पुनस्तस्याभ्यस्तीभवनं कथम्—'सकृद्गतिन्यायाद्' पुनर्द्वित्वाप्रसक्तेरिति चेत्? न। पुनःप्रसङ्गविज्ञानात्—द्वित्वस्य प्रवृत्तेः। अत आह—ततो द्वित्वमिति सम्प्रसारणानन्तरमित्यर्थः। जुहाव इति। ह्वे णल् इति स्थिते आत्वम्। ह्वा णल् इति। अभ्यस्तस्य चेत्यनेन सम्प्र—हु—णल् इति। द्वित्वम्—हु हु णल—जु (कुहोश्चुः—२२४५) औ (अचो ञ्णिति (२५४)) अ=जु हाव् अ=जुहाव। जुहुवतुः—जुहु अतुस् इत्यत्रापि समानम्। अतुसः कित्त्वाद् गुणवृद्ध्योरभावे 'अचिश्नु—' (२७१) इत्युवङ्—जहुवङ् अतुस्—जुहुव् अतुस्—जुहुवतुः इति। नागेशस्तु—'ह्वा अतुस् इत्यत्र आलोपापेक्षया अनैमित्तिकत्वेन (नहि 'अभ्यस्तस्य चे'ति सम्प्रसारणमपि निमित्तीकृत्य विधीयते) अन्तरङ्गत्वात् सम्प्रसारणे (कृते) वार्णपरिभाषायां ('वार्णादाङ्गं बलीयः' इत्यस्याः) अनित्यत्वाश्रयणेन अन्तरङ्गत्वात् पूर्वरूपे (सम्प्रसारणाच्चे'ति सूत्रात् (३३०)) ततो द्वित्वे उवङ् इत्याह इति। एवं जुहुवुः (आलस्य-

सारणद्वित्वचुत्वोवङादेशाः ) । अथ भारद्वाजनियमात् थलि इड्विकल्पमाह— जुह्वोथ—जुहविथ—आत्वसम्प्रसारण—द्वित्वचुत्वादि अङ्गस्य गुणश्च उभयत्रैव तुल्यः । उत्तरत्र तु अवादेशमात्रं विशेषः । थलः पित्त्वाद् गुण इति बोध्यम् । जुहुवे—पूर्ववत् आत्वसम्प्र—द्वित्वचुत्वोवङादेशाः । एशः कित्त्वेन—गुणवृद्धिविरहः । ह्वाता—आदेच इत्यात्वम् । अभ्यस्तीभवनस्याभावात्—सम्प्रसारणाभावः । हूयात्—यासुट् कित् । आत्व-सम्प्रसारणे । ततः 'अकृत्—' इति दीर्घः । अत वश्विस्वपीति सम्प्रसारणं नतु अभ्यस्तस्य चेति । अत्राभ्यस्तीभावस्याभावात् । ह्वासीष्ट—आत्वे सीष्ट इति ।

२४१८ । लिपिसिचिह्वश्च ॥३।१।५३॥

टी—। एभ्यश्च्लेरङ् स्यात् ।

The affix अङ् replaces च्लि coming after the roots लिप्, सिच् (षिच्) and ह्वा (ह्वेञ्). Thus अलिपत्—असिचत्—and अह्वत् (अ—ह्वे—अङ् त्—अह्वा अत् by आदेचः—अह्व् अत् by—आतो लोप इटि च' (2372)).

मित—। लिपिश्च सिचिश्च ह्व—समाहारद्वन्द्वः । तस्मात्—इति पञ्चम्यन्तम् । लिपिरिति लिप उपदेहे इत्यस्य का निर्द्देशः । सिचीति सिच् क्षरणे इत्यस्य—ह्वा इतिह्वेञः कृतात्वस्य ग्रहणम् । च्लेः सिजित्येतस्मात् च्लेरिति 'अस्यति वक्ति ख्यातिभ्योऽङ्' इत्यत अङिति चानुवर्त्तते । तदाह—एभ्य इति । अलिपत्—असिचत्—अह्वत्—इत्युदाहरणानि ।

२४१९ । आत्मनेपदेष्वन्यतरस्याम् ॥३।१।५४॥

टी—। 'आतो लोपः'—(२३२७) । अह्वत् । अह्वताम् । अह्वन् । अह्वत । अह्वास्त ।

अथ द्वौ पर [illegible] वद १००९ व्यक्तायां—वाचि । [illegible] वदति । [illegible] । उवदिथ । वदिता ।

उद्यात्। 'वदव्रज—' (२२६७) इति वृद्धिः। अवादीत्।
टु ओश्वि १०१० गतिवृद्ध्योः। श्वयति।

अङ् replaces च्लि optionally when an आत्मनेपद affix follows. Thus अह्वत (with अङ्) and अह्वास्त (without it). अह्वत—अह्वे च्लित—अह्वा अङ् त—अह्व अ त (आतो लोपः—)—अह्वत। अह्वास्त—अह्वे च्लि त—अह्वा सिच्त—अह्वास्त (Here आतो लोप: does not apply for सिच् is neither कित् nor ङित् nor is it preceded by इट्)। Similarly—अह्वताम् (अङ्)—अह्वेताम् (आत्म-अङ्) अह्वासाताम् (सिच्)। अह्वन् (अङ्) अह्वन्त (आत्म. अङ्)—अह्वासत etc.

अथ वी etc—वद to speak clearly. It is सेट्. अच्छ is an indeclinable meaning towards. Hence in अच्छ वदति, अच्छ is a गतिसंज्ञक and goes before the root by 'ते प्राग्धातोः'। अच्छवदति means to speak face of face. उवाद—वद वद् णल्—व वाद अ—by 'ह्रस्वः' and 'अत उपधायाः'—उवाद by 'लिट्यभ्यासस्योभयेषाम्' (2409)। ऊदतुः—वद+अतुस्=उद् अतुस् by 'वचिस्वपि—' (2408)=उद् उद् अतुस् (by 'पुनःप्रसङ्गविज्ञान')—उउद् अतुः (हलादिः शेषः)—ऊदतुः—by 'अकः सवर्णे—' (85). So ऊदुः। 'उवदिथ—इट् want of एत्वाभ्यासलोप by 'न शसददवादिगुणानाम' (2263). वदिता (वद्इट् ता). Note that the root is सेट् in तासि and not अनिट्। Hence the भारद्वाजनियम, in थल् does not apply. cp.—'अजन्तोऽकारवान् यस्तास्यनिट् थलि वेडयम्—'। Hence that which is सेट् in तास् is also सेट् in थल् and not वेट्। उद्यात्—यासुट् is कित् hence 'वचिस्वपि' applies. अवादीत्—explained. (Note that 'वदव्रजहलन्तस्याचः' supersedes 'नेटि' and 'अतो हलादेर्लघोः' (2214). टु ओ श्वि—the root is श्वि। टु for—श्वयथुः

(elephantiasis—शोथ or गोद ) by—'ट्वितोऽथुच्' and श्वो for उच्छूनः ( उद्—शूनः ) by—'ओदितश्च' (3019) 'वचिस्वपि', 'सम्प्रसारणाच्च and 'हलः'. It ie. the root means movement and increment. श्वि + शप् तिप्—श्वे अति = श्वयति ।

मित—। वृत्तौ 'आतो लोप' इति नैतत् सूत्रव्याख्यानं किन्तु तत्सूत्रस्मारणम् । 'लिपिसिचिह्वश्च' इत्येतस्याव्यहितपरत्वादेतस्य च स्पष्टत्वादेतन्न व्याख्यातम् । अयमर्थः—'आत्मनेपदेषु परेषु—चेल्रङ् वा स्याच्छिति' । तेन अह्वत—अह्वास्त । पूर्वत्र अङ्—तदेवम्:—अ ह्वे अङ् त इति स्थिते—आत्वे अह्वा अत इति जाते—'आतो लोपः—' (2372). अह्व् अत—अह्वत । परत्र सिच्—अह्वे सिच् त इति स्थिते—आत्वे अह्वास् त—अह्वास्त, अत्र किङ्टिटोरभावात्—आतो लोपो नेति बोध्यम्— । एवमत्र पञ्चत्रयम्—अह्वत् अह्वताम् अह्वन् इत्येकः पञ्चः ( अङ् परस्मै. ) अह्वत—अह्वेताम्—अह्वन्त इति द्वितीयः ( अङ् आत्मने—) । अह्वास्त—अह्वासाताम् —अह्वासत इति तृतीयः ( सिच् आत्मने. ) लृटि—ह्वास्यति— ह्वास्यते इत्यादि—

अथ द्वाविति—वदतिश्वयतीत्यर्थः । एतद्धातुद्वयन्तु भ्वादिगणः । वदेति सेट् । अच्छेति अव्ययं गतिसंज्ञकम्—आभिमुख्यार्थे वर्त्तते— । गतित्वाद् धातोः प्राक् प्रयोगः । अच्छ वदति अभिमुखं वदतीत्यर्थः । उवाद इति—लिट्यभ्यासस्येति सम्प्रसारणम् । अत उपधायाः ( २२८२ ) इति अङ्गस्य वृद्धिः । ऊदतुः इति— । वद् अतुस् इति स्थिते 'वचिस्वपी'ति ( २४०९ ) सम्प्रसारणम् । एवम् उद् अतुस् इति जाते—पुनःप्रसङ्गविज्ञानात् द्वित्वम्—उद् उद् अतुस् इति । ततः— हलादिशेषः—सवर्णदीर्घश्च (अकः सवर्णे दीर्घः) इत्यनेन । उ उद् अतुस्—ऊदतुः । एवम् ऊदुः । उवदिथ इति । वदधातोः सेट्त्वात्—भारद्वाजनियमो निवर्त्तते तासावनिट्—के हि तस्य प्रवृत्तेः । वदिता—तास् इट्— । उद्यात्—आशीः—यासुट् । कित् वचिस्वपीति सम्प्रसारणम् । अवादीत्—दर्शितन् सूत्रे । इट ईटीति ( २२६६ ) इति सिज्लोपः । एतदर्थमेव नेटीति निषेधे प्राप्ते 'अतो हलादेरिति विकल्पे च प्राप्ते 'वदव्रज' सूत्रे वदव्रजो—र्विशिष्य ग्रहणमिति विभावनीयम् । अवादिष्टामित्यादि ।

टु ओ श्वि इति—ट्वितकरणमथुजर्थम्—'ट्वितोऽथुच्—' श्वयथुः ( शोथः )। ओदित्करणं निष्ठानत्वार्थम् 'ओदितश्च' ( ३०१९ )—शून—शूनवानिति । 'ह्म्यन्तक्षण्श्वसजागृणिश्व्येदिताम्' इत्यादि । पुगन्तलघूपधस्येति श्वयतेर्गुणः—श्वयति ।

## २४२० । विभाषा श्वेः ॥६।१।३०॥

दो—। श्वयतेः सम्प्रसारणं वा स्याल्लिटि यङि च । शुशाव । शुशुवतुः । "श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः" ( वार्त्तिक ३४६२ )। तेन 'लिट्यभ्यासस्य—' (२४०८) इति—सम्प्रसारणं न । शिश्वाय । शिश्वियतुः । श्वयिता । श्वयेत् । शूयात् । 'जृस्तम्भु—' ( २२९१ ) इत्यङ् वा ।

The सम्प्रसारण is optionally ordained for the root श्वि, in लिट् and in यङ्। Thus श्वि+णल=श् उ इ णल्=शु णल ( by 'सम्प्रसारणाच्च' (330)=शु शु अ by 'लिटिधातोः—' ( 2117)=शु शौ अ by 'अचो ञ्णिति' (254)=शुशाव् अ by एचोऽयवायावः (61)=शुशाव । श्वि+अतुस=शु अतुस्= शु शु अतुस्=शु शुवङ् अतुस् by 'अचिश्नु —' ( 271 )=शु शुव् अतुस्=शुशुवतुः । Similarly शुशुवः। Now, when there is no samprasarana and the form stands thus, after duplication,—श्वि श्वि णल्, the rule 'लिट्यभ्यासस्योभयेषाम्—' (2408) comes in to operate on the duplicate ( अभ्यास ) of the above so as to give शु श्वि अ when by 'अचो ञ्णिति' (254) the resultant form will be शुश्वै अ—शुश्वाय् अ=शुश्वाय and not शिश्वाय which is the expected one. Thus Bhattoji brings forward the vartika 'श्वयतेः etc' ( It has to be remarked that ) the सम्प्रसारण should be forbidden to the duplicate or अभ्यास of श्वि in लिट। Thus the सम्प्रसारण due to 'लिट्यभ्यासस्य—' (2408) is not to operate here so that we get शिश्वाय ( श्वि+णल्=श्वि श्वि णल् ( here

'वचिस्वपि' does not apply for णल् is not कित्) = शि श्वै अ (by 'हलादिः—' and अचो ञ्णिति) = शिश्वाय् अ = शिश्वाय)। In अतुस् शि श्वि अतुस् = शिश्वियङ् अतुस् (by अचिश्नु—271) = शिश्वियतुः (here 'वचिस्वपि—' does not come in for it is the alternative पक्ष)। Similarly—शिश्वियुः etc with इयङ्। श्वयिता—गुण इट् ता। श्वयेत्—विधिलिङ् (गुण) शूयात्—(आशीः)—It is कित् hence सम्प्रसारण by—'वचिस्वपि—' and दीर्घ by 'अकृत्—' (2288)। श्वि will have अङ् optionally in place of च्लि by 'जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च' (2291).—

मित—। 'ष्यङः सम्प्रसारणम्—' (६।१।१३) इत्यतः सम्प्रसारणमिति 'लिड्यङोः' (६।१।२९) इत्यतो लिटि इति यङि इति चानुवर्तते; तदाह—श्वयतेः सम्प्रसारणमिति—। 'वचिस्वपि—' इति किति सम्प्रसारणं विहितम्। 'ग्रहिज्यति—' इति ङिति च। एवमुभयत्र नित्यं संप्रसारणे प्राप्ते इयं विभाषा—आरभ्यते। तत्र लिडंशे अतुसादौ नित्यं प्राप्ते—णलादावप्राप्ते—यङंशे तु अप्राप्ते विभाषा। शोशूयते (श्वि + यङ्—सम्प्रसारणपक्षे)। शेश्वीयते (सम्प्रसारणाभावपक्षे)। तत्रैवं प्रकृते सम्प्रसारणपक्षे णलि—श्वि णल् इति स्थिते अनेन सम्प्रसारणे कृते अन्तरङ्गत्वात् पूर्वरूपे च प्राप्ते शु णल् इति स्थिते द्वित्वे शु शु णल् इति स्थिते 'अचो ञ्णिति' (२५४) इति वृद्धौ प्राप्तायाम् शु शौ अ इति तत आयादेशे शुशाव इति। एवं शु शु अतुस् इति स्थिते 'अचिश्नु—' (२७१) इति उवङि प्राप्ते—शु शुवङ् अतुस् इति ततः शुशुवतुरिति। एवमेव शुशुवुरित्यत्र। ननु सम्प्रसारण पक्षे एव सिद्धम्। सम्प्रसारणाभाव—पक्षे तु कथम्। तत्र हि द्वित्वोत्तरं 'लिट्यभ्यासस्य—' इत्यस्य प्राप्तेरभ्याससंप्रसारणात्—शुश्वाय इति स्यात्—न त्वपेक्षितं—शिश्वाय इति। न च 'विभाषा श्वेः' (६।१।३०) इत्यस्य परत्वात् अनेन 'लिट्यभ्यासस्य—' (६।१।१७) इत्यस्य बाधो भविष्यतीति वाच्यम्। 'अस्य (६।१।३०) परत्वात् द्विर्वचनात् पूर्वं प्राप्त्या लिट्यभ्यासेत्यस्य च द्वित्वोत्तरं प्राप्त्या युगपत्—प्राप्त्यभावेन विप्रतिषेधशास्त्राप्रवृत्तेः' इति शब्देन्दुशेखरे स्पष्टम्—। अतएवात्र

कैयट:—'लिट: कित्त्वाकित्त्वभेदेन द्विविध्यादुभयत्र विभाषेयम्। तत्र सम्प्रसारण—पक्षे कृते सम्प्रसारणस्य (सम्प्रसारण+अच् अर्श आदिभ्योऽजित्यच्—तेन कृत—सम्प्रसारणस्य इत्यर्थ:) द्विर्वचनात् नास्ति वक्तव्यम् (किञ्चिदपी'ति भाव:)। सम्प्रसारण-भावपक्षे तु अभ्यासस्य—'लिट्यभ्यासस्योभयेषामिति संप्रसारणं प्राप्नोति इति मत्वाह (भाष्यकार इति शेष:) श्वे र्लिटीति ('श्वे:' इति 'श्वयते:' स्थले भाष्यसंमत: पाठ:)। (अथोभयत्र वाधकत्वं दर्शयति) किल्लक्षणं नित्यं सम्प्रसारणम् (obj.) परत्वादियं विभाषा (subj.) बाधते यथा, तथा अभ्यासलक्षणमपीतिभाव:' इति सङ्गच्छते। एवं 'लिट्यभ्यासस्येति सूत्रस्य प्राप्तिरूदवाहृते। अतस्तन्निषेधार्थं वार्त्तिकमुपन्यस्यति—श्वयतेरिति। भाषेपु 'श्वे र्लिटि—' इति पठितम्। श्वयते: श्विधातो: लिटि अभ्यासलक्षणस्य—लिट्यभ्याससूत्रप्राप्तस्य संप्रसारणस्य प्रतिषेध:—निषेध: वक्तव्य इति वाक्यशेष:। तेनेति—अतएवानेन संप्रसारणं न। फलितमाह—शिश्वाय इति श्वि णल् इति स्थितौ द्वित्वे श्वि श्वि णल इति जाते अभ्यासलक्षणसंप्रसारणस्य बाधे—हलादिशेष: प्राप्नोति शिश्वोणल् इति। तत्र 'अचो ञ्णिति—' इति अङ्गस्य वृद्धौ शिश्वै अ इति आयादेशे—शिश्वाय इति। अतुसि किल्लक्षणस्य सम्प्रसारणस्य विभाषाश्वे रित्यनेन बाधितत्वात्—श्वि श्वि अतुस् इति स्थिते हलादिशेषोत्तरं—'अचिश्नु—' (२७१) इतीयङ्—शिश्वियतुरिति। एवं शिश्वियुरित्यादिषु—। श्वयिता—गुण इट् ता—। श्वयेत्—विधिलिङ्। शूयात्—किदाशिषि इति कित्त्वात् वचिस्वपीति संप्रसारणम् 'अकृत्—' (२१९८) इति दीर्घश्च। अथ श्वयते'र्जृस्तम्भु—(२२९८) इत्यादिना विकल्पादङि—इयङि प्राप्ते अङ् पक्षे विशेषमाह—

२४२१। श्वयतेर: ॥७।४।१८॥

दी—। श्वयतेरिकारस्यअकार: स्यादङि। पररूपम्। अश्वत्। अश्वताम्। अश्वन्। 'विभाषा धेटश्व्यो:' (२३७५) इति चङ्। इयङ्—अशिश्वियत्। 'ह्म्यन्त—' (२२९९) इति न वृद्धि:। अश्वयीत्। वृत्। यजादयो वृत्ता:।

भ्वादिस्त्वाकृतिगणः। तेन चुलुम्पतीत्यादिसङ्ग्रहः। इति भ्वादयः।

The इकार of श्वि is replaced by अकार when the affix अङ् follows (in लुङ्)। Thus अ श्वि अङ् तिप्=अ श्व अ त्. Now appear the rules अकः सवर्णे (6-1-101) and अतो गुणे (6. 1. 97) to operate simultanconsly on अश्व अत्. But अतो गुणे is a पुरस्तादपवादः i. e. an अपवाद or forbidding rule which precedes that which is to be forbidden. Thus by the परिभाषा—'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' ( explained before ), अतो गुणे will bar अकः सवर्णे—( 6. 1. 101 ) and not 'प्रथमयो पूर्व्वसवर्णः (6. 1. 102) because अकः सवर्णे is nearer to it ( अतो ) than 'प्रथमयोः'. Hence Bhottoji says पररूपम्— and we thus get—अश्वत्—( and not अश्वात् ). Here you cannot apply the rule 'अतो लोपः' ( 6. 4. 48 ) inasmuch as it concerns roots which are tanght as अकारान्त at the time of आर्द्धधातुकोपदेश—। अश्वताम् ( तस्=ताम् ) अश्वन् ( 'झोऽन्त',—'इतश्च', संयोगान्तस्य लोपः' and 'अतो गुणे' )। Now चङ् comes in by 'विभाषा—' ( 2375 ) in place of च्लि when अङ् is wanting. Thus by चङ् and इयङ् we get अशिश्वियत् ( अ श्वि चङ् तिप्=अ श्वि श्वि यत् by 'चङि' (2315) and want of वृद्धि by 'ह्म्यन्तक्षण—' (2299)=अ श्वि श्वि वङ् अत्, by 'हलादिः—' and 'अचिश्नु—' ( 271 ) = अशिश्वियत्। Similarly—अशिश्वियताम्—अशिश्वियन् etc. Now the root श्वि has directly been taken up in the rule 'ह्म्यन्त क्षणश्वसजागृणिश्व्येदिताम्—(2299). Thus when there is neither अङ् nor चङ्, there will occur सिच् giving अश्वयीत् etc (अ श्वि सिच् तिप्=अ श्वि इट् सिच् ईट् त्=अ श्व इ 0 ईत्, here वृद्धि cannot come in owing

to the prohibition 'ह्म्यन्त—' (2299) and hence we have guna by 'सार्व—' (2168); the affix सिच् elides by—इट ईटि (2266)= अश्वय् ईत् by एचोऽयवायाव: (61)=अश्वयीत्. Similarly अश्वयिष्टाम्—अश्वयिषु: etc). Here you cannot argue that the taking up of श्वि under 'ह्म्यन्त—' is of no avail on the ground that the rule 'नेटि—' is sufficient to serve the purpose (prohibition of गुण) for नेटि—prohibits the वृद्धि of those roots only which end in consonants. Nor can you rejoin that the existence or direct mention of the root श्वि is superfluous on another way viz 'सार्वधातुक—' (7. 3. 84) being subsequent to 'सिचि वृद्धि:—' (7 2.1) will bar the same and direct गुण, whence by अयादेश—श्वि changes into श्वय् and thus being यान्त ending in य will have no वृद्धि by 'ह—म—यान्त—' bereft of श्वि; for the 'सिचि वृद्धि' according to the maxim of 'येन नाप्राप्ते etc' i.e. having no scope elsewhere will bar the गुण though the same is an अन्तरङ्गविधि or inherent injunction. Here ends the यजादि class. भ्वादि class is inexhanstive so that roots like चुलुम्प etc. also are included herein.

The भ्वादि class is also practically finished here.

मित—। श्वयते:+अ: इति च्छेद:। 'ऋदृशोऽङि गुण:' (७।४।१२) इत्यतोऽङि इत्यनुवर्त्तते। श्वयतेरिति श्विधातो: श्तिपा निर्द्देश:। 'अलोऽन्त्यस्य' इति परिभाषोपस्थितेरन्त्यस्य नकारस्य स्थाने अकार इति विज्ञायते। तत् फलितमाह—श्वयतेरिकारस्याकार इति। अतएव श्वि इत्यस्य अभावे जाते इयङ् प्राप्ताशङ्का नास्त्येव। नन्वमपि—अश्वअङ् त्=अश्व अत् इति स्थिते सवर्णदीर्घपररूपयोरुभयो:

परत्वात् सवर्णदीर्घः ( अकः—६।१।१०१ ) स्यात्—इति चेत्। न। पररूपस्य ( अतो गुणे—६।१।९७ इत्यस्य )—अपवादत्वेन 'पूर्व्वपरनित्यान्तरङ्गापवादानाम्—' इति वलीयस्त्वात्। न च तत् ( पररूपम् ) प्रथमयोःपूर्व्वसवर्णः' ( ६।१।१०२ ) इत्यस्यैव बाधकम् न 'अकः सवर्णे—' इत्यस्येति वक्तुं शक्यम्। पररूपस्य हि पुरस्तादपवादत्वेन 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायात्—सवर्णदीर्घस्यैव ( ६।१।१०१ ) बाधकत्वं न पूर्व्वसवर्णस्य ( ६।१।१०२ )। नच 'अतो लोप' इत्यल्लोपशङ्का। आर्द्धधातुकोपदेशकाले अकारान्तत्वाभावादिति ज्ञेयम्। तथाचैवं पररूपे—अश्व अत् इति अश्वत् इति भवति। एवम् अश्वताम्—अश्वन् इत्याद्यङ् पक्षे रूपाणि। अङभावपक्षे त्वाह—विभाषेधेट् श्व्योरिति। अत्र अश्वि चङ् त् इति स्थिते चङि (२३१५) इति द्वित्वम्—अश्वि श्वि अत्। ततश्चङः ङित्त्वात् गुणवृद्धोरभावेन अचिश्नु—( २७१ ) इति इयङ्—'अभ्यासस्य हलादि शेषः—एवम् अशिश्वियत् अशिश्वियताम्। अश्विश्वियन् इत्यादि चङ्पक्षे। वैकल्पिकत्वात्तदभावे आह—'ह्म्यन्त—'। वृद्धिनिषेधात् सिचि अश्वयीत् इति। अ श्वि सिच तिप्—अश्वि इट् सिच् ईट् त् इति स्थिते इट ईटि—इति सिज्लोपे 'ह्म्यन्त—( २२९९ ) इति वृद्धिनिषेधात् गुणे अश्व इ ० ईत्—अश्वईत् इति जाते—अयादेशे अश्वयीत्—इति एवमश्वयिष्टाम् अश्वयिषुरितिसिच्पक्षे तदेवं अङ्चङ्सिच पक्षतः—श्वयतेर्लुङि रूपत्रैविध्य द्रष्टव्यम्। ननु ह्म्यन्तक्षणश्वसजागृणिश्व्येदितामि त्यत्र श्विग्रहणं व्यर्थम् 'नेटीति' निषेधादेव सिद्धेरिति चेत्। न। तस्य वदव्रजेति हलन्तलक्षणवृद्धिनिषेधमात्रविषयत्वात्। न च तर्हि 'सिचिवृद्धिः परस्मैपदेषु—( ७।२।१ ) इत्यपेक्षया 'सार्व्व—' ( ७।३।८४ ) इत्यस्य परत्वाद् अन्तरङ्गत्वादपि गुणेन अश्वि ईत् इत्यत्र अश्व इत् इत्यत्र अश्वे इत् इति जाते अयादेशे अश्वय् ईत् इति स्थिते श्वय्— इति यान्तत्वमादाय 'ह्म्यन्त—', इति निषेधात्—श्वि ग्रहणं व्यर्थमित्वत्यपि वाच्यम्। सिचि वृद्धेर्येन नाप्राप्तेन्यायेन अन्तरङ्गगुणस्यापि अपवादत्वादिति शब्देन्दुशेखरे स्पष्टम्। इत्—इति यजादयो गता इत्यर्थः। भ्वादिरिति। आकृतिगण इति धातुपाठे भ्वादौ अपाठिता अपि धातवः भ्वादिगतरूपाणि प्रतिपद्यन्ते इत्यर्थः। तेन

चुलम्पति ( चुलुम्प् ), लुम्पति ( लुम्प ) इत्यादि: संग्रह: भ्वाद्यन्तर्भाव इति भाव: । इति शव्विकरणाभ्वादय: । अथ सूत्रपठितम् ऋतिधातुमाह—( भ्वाद्यपठितत्वात्पृथङ्-निर्द्देश: ) ।

२४२२ । ऋतेरीयङ् ॥३।१।२९॥

दी— । ऋति: सौत्रस्तस्मादीयङ् स्यात्—स्वार्थे । जुगुप्सायमियं धातुरितिबहव: । कृपायां चेत्येके । 'सनाद्यन्ता—' ( २३०४ ) इति धातुत्वम् । ऋतीयते । ऋतीयाञ्चक्रे । आर्द्धधातुकविवक्षायां तु 'आयादय: आर्द्धधातुके वा' (२३०५) इतीयङ्-भावे 'शेषात् कर्त्तरि—' ( २१५९ ) इति परस्मैपदम् । आनर्त्त । अर्त्तिष्यति । आर्त्तीत् ।

## इति तिङन्तभ्वादिप्रकरणम् ।

The root ऋत, read in the सूत्र only, takes इयङ् after it in the sense of स्वार्थ। Many hold that the root is used in the sense of censure; while others take it to mean 'censure and kindness'; it is, having taken इयङ्, is to the termed धातु by—सनाद्यन्ता etc. Thus ऋतीयते। ( ऋत् इय् शप् ते ( ईयङ् being ङित्, ऋत is आत्मने )—ऋतीय् अते—ऋतीयते )। ऋतीयाञ्चक्रे by 'कास्प्रत्ययादाममन्त्रे लिटि—'। But when there is आर्द्धधातुकविवक्षा, the root will be परस्मै—by' शेषात् कर्त्तरि—' when इयङ् is wanting by' आयादय:—'। Thus आनर्त्त—ऋत् + णल् = ऋत् ऋत् अ—अर्त् अर्त् अ = आनुट् अर्त् अ by 'अत आदे' (2248) and तस्मान्नुड्द्विहल: = आन् अर्त् अ = आनर्त्त। अर्त्तिलुङति ( गुण इट् इति ) आर्त्तीत्—( लुङ् ) आट् ऋत् इट् सिच् ईट् त् = आ अर्त् इ 0 ईत् = आर्त्त ईत्—आर्त्तीत्— । Here ends the भ्वादिप्रकरण ।

मत—। ऋतेः इयङ् इतिच्छेदः। ऋतिरिति ऋतधातोरिका निर्द्देशः। भ्वादेराकृतिगणत्वादभ्वाद्यनुक्तोऽपि तन्मध्य—एवास्य रूपं लभते। सचास्मिन्सूत्रे एव दृश्यत इति आह—सौत्रः इति। जुगुप्सा निन्दा। एके केचिदित्यर्थः। सनन्द्यन्ता इति इयङ् प्रत्ययत्वादिति भावः। ऋतीयत इति। इयङोङित्वा 'दनुदात्तङित—' इत्यात्मनेपदम्। ङिच्चेति अन्त्यादेशः। ऋतीयाञ्चक्रे—कास् प्रत्ययादित्याम्। आर्द्धधातुकविवक्षायामिति—अयमर्थ —इयङ् इति ङिद्भवति। तस्य 'आयादयः—' इत्यनेन यदा—ऋतिना योगो न घटते तदा तस्य (ऋतेः) ङित्त्वं न भवति। ङित्त्वाभावाच्च आत्मनेपदित्वमपि—न भवति। अतः आह—शेषादिति। आनर्त्त इति—ऋत् + णल् इति स्थिते द्वित्वे—ऋत् ऋत् णल इति स्थिते 'उरत्—उरण्रपरः हलादिः शेषः' (इत्यभ्यासकार्य्यम्) 'अचो ञ्णिति', 'अत उपधायाः' इत्यनयोर-प्राप्तयोः पुगन्तलघूपधस्यच इतिगुणः (इत्यादिकार्य्यम्)। 'नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन इत्युक्तिरिति भावः। एवम्—अर्त् अरत् अ—अ अर्त्त अ—आ अर्त्तथ (अत्आदेः—२२४८)—अनुट् अर्त्त थ = आनर्त्त ('तस्मान्नुट्—द्विहलः') अर्त्तिष्यति—गुण इट् स्यति। आर्त्तीत्—(लुङ्) आट्ऋत् इसिच् ईट्त् आ अरत् इ ० ईत् (आडजादीनामित्याट्—'नेटीति' वृद्धिनिषेधाद् गुणेन 'अरत्' इति—इटईटीति सलोपः। आ ऋर्त्तीत् = आर्त्तीत्। एवम् आर्त्तिष्टाम्—आर्त्तिषुः। आर्त्तीः आर्त्तिष्टम् आर्त्तिष्ट। आर्त्तिषम् आर्त्तिष्व आर्त्तिष्म। लृङि—आर्त्तिष्यत् इत्यादिः।

इत्यविरतविद्यावितरणनिष्णस्य नानाशास्त्रनदीष्णस्य मसूयावस्तव्यस्य कायस्थस्य सुगृहीतनाम्नः स्वर्गतस्य श्रीसारदारञ्जनविद्याविनोदस्य सूनुना श्रीकुमुदरञ्जनेन कृतायाः मितभाषिणीसमाख्यायाः वैयाकरणसिद्धान्तकौमुदीव्याख्यायाः उत्तरार्द्धस्य प्रथमः खण्डः॥

इति तिङन्ते भ्वादिप्रकरणम्।

॥ ओं तत्सत् ॥

# *Errata on Siddhanta Kaumudi*—

## I. Vol. I, Part I (Sandhi)—

(a) Pp. 46 line 8, for "कण्ठ्यस्य ईकारस्य कण्ठ्यो यकार" better read "तालव्यस्य ईकारस्य तालव्यो यकार" ।

(b) Pp. 68, line 17 for "'आउ' इति सङ्घातस्य कण्ठतालुस्थानसाम्यात्" read "'आ उ' इति सङ्घातस्य कण्ठौष्ठस्थानसाम्यात्" ।

(c) Pp. 171, line 25, for "प्रथमो खण्ड:" read "प्रथम: खण्ड:" ।

## II. Vol. I. Part II (Sabda)—

Preface line 12, for "uttararddha" read "Purvarddha."

Pp. 18, line 16 for "an अकारान्त प्रातिपदिक" better read "an अकारान्त base ( अङ्ग )" ।

Pp. 52, line 22 for "having an affix" read "having a case-affix."

[ N. B.—Also see our translation of this sutra in "Laghu-Kaumudi". ]

Pp. 55, line 22, for "an affix" better read "a case-affix."

Pp. 68, line 14, for "परशब्दयोगे प्रथमा" read "परशब्दयोगे पञ्चमी' ।

## NOW AVAILABLE

# Principal S. Ray's

| | | | | |
|---|---|---|---|---|
| 1. | Sakuntalam (with Introduction, Translations, Tika, Notes &c). | | | Rs. 3/8/- |
| 2. | Uttaracharitam | ,, | ,, | Rs. 3/8/- |
| 3. | Mudrarakshasam | ,, | ,, | Rs. 3/8/- |
| 4. | Ratnavali | ,, | ,, | Rs. 2/12/- |
| 5. | Meghadutam | ,, | ,, | Rs. 2/- |
| 6. | Swapnavasavadattam | ,, | ,, | Rs. 2/12/- |
| 7. | Laghu-Siddhanta-Kaumudi | | ,, | Rs. 1/8- |

Etc. Etc.

Siddhanta-Kaumudi—part on "Tinganta"
( up to "Churadi" ) in the press.

